महाकविश्रीमद्वेङ्कटाध्वरिविरचिता

# विश्वगुणादर्शचम्पूः ।

योगीत्युपाभिध-बालकृष्णशास्त्रिविरचित-

पदार्थचन्द्रिकाटीकासहिता ।

वाकेइत्युपाह्वगङ्गाधरभट्टसूनुना महादेवशर्मणा

संशोधिता ।




( द्वितीयं संस्करणम्. )

मुम्बय्यां

'तुकाराम जावजी' इत्यनेन स्वकीये निर्णयसागरा-

ख्यमुद्रणालये मुद्रयित्वा प्रकाशिता ।

शकाब्दाः १८२८, खिस्ताब्दाः १९०६.

मूल्यमेको रूप्यकः ।

ॐ नमः परमात्मने

# भूमिका.

भो भो विविधकाव्य-नाटकालंकार-साहित्यपारावारपारीणाः सहृदया म षिणः, विदांकुर्वन्तु तत्रभवन्तः—गीर्वाणभाषापारावारतितीर्षूणां सरसकाव्यप शीलनतरणिसमारोहणं विना उपायान्तरं तावन्न श्रूयते । तदर्थमेव च कविकु गुरुश्रीकालिदास-भवभूति-बाणभट्टप्रभृतिभिः कविमण्डलाग्रेसरै **रघुवं कुमारसंभव-मालतीमाधव-कादम्बर्यादीनि** सपदि रसिकजनमनोविने जनकानि संस्कृतभाषाव्युत्पित्सुजनानां सद्यः सम्यक्तया तद्व्युत्पत्तिसंपादकानि गद्य-पद्यप्रचुराणि काव्यादीनि विरचितानि जाग्रत्येव । एतादृशकाव्यस्यैव लक्षणादिपरिज्ञानार्थं तदवान्तरव्यङ्ग्य-ध्वनि-रस-दोष-गुणालंकारादिप्रतिपादनार्थं तत्रभवद्भिर्**मम्मटा**दिभिः **काव्यप्रकाशा**दयो ग्रन्था विरचितास्तत्र च "तद शब्दार्थौ सगुणावनलंकृती पुनः क्वापि" इत्यादि काव्यलक्षणं च निर्दिष्टम् । ( तच्छब्देन काव्यं ज्ञेयम् ) कैश्चित् तु "रमणीयार्थप्रतिपादकः शब्दः काव्य इत्याद्येव लक्षणमुक्तम् । कथमप्यस्तु, परं च उभयत्रापि आस्वाद्यव्यञ्जकत्वरूपलक्ष विद्यमानत्वात् सहृदयहृदयाह्लादजनकं काव्यम् इति सामान्यतः संक्षिप्तल भवितुमर्हति । तच्च केवलं पद्यप्रचुरं, गद्यप्रचुरं, गद्यपद्यमिश्रं वास्तु, सर्व तत्पूर्वोक्तलक्षण एवान्तर्भवति । किंच तत् दृश्य-श्रव्यभेदात् द्विधा भिन्नं, यत् वाचन-श्रवणसमकालमेव रसिकजनानां मनसि आह्लादजननपूर्वं चमत्कारं जन तच्छ्रव्यम् । यच्च धीरवीरपुरुषचरितप्रचुरं विशेषतः प्रत्यक्षतयाभिनीय प्र सद्रसविच्चित्तमानन्दयति तद्दृश्यम् । अत एव तन्नाटकमित्यभिधीयते पूर्वोक्तं च काव्यशब्देनैव व्यवह्रियते । एतस्मिन्नपि चम्पूशब्दाभिधेय एको भेदो भव तस्य लक्षणं च "गद्य-पद्यात्मकं काव्यं चम्पूरित्यभिधीयते" इति प्रसिद्धम् । एतल्लक्ष पन्नैवेयं प्रकृता **विश्वगुणादर्शचम्पूः** प्रथते यत्संबन्धेन किंचिद्वक्तुमभिलषाम

इयं च श्रीमता तत्रभवता सुगृहीतनाम्ना **वेङ्कटाध्वरिणा** महा विरचिता । अयं श्रीरामानुजमतानुयायी श्रीमहालक्ष्म्या भक्तश्चासीत् । तावत्कस्मिन् काले आविर्भूय स्वपितरावानन्दयत् तदादि प्रत्यक्षतया न प्रतीयते अनेनास्मिन्नेव ग्रन्थे द्वितीय-तृतीयश्लोकयोः संक्षेपेण स्वकीयवृत्तं निवेदितं त **श्रीमदप्पयगुरोर्नप्ता, श्रीरघुनाथ**दीक्षितस्य च पुत्र इत्येव ज्ञायते । अयम **गुरुः कुवलयानन्द-चित्रमीमांसा**दिग्रन्थकर्तुस्तत्रभवतः **अप्पयदीक्षित** इत्यवगम्यते । यतः स अप्पयदीक्षितो द्रविडजातीयः, भगवतः श्रीशिवस्य परमो अद्वैतमतपक्षपाती, वैष्णवमतखण्डकश्चासीदिति तद्वृत्ततः श्रूयते । किंच **व्यङ्क** नामधेयस्य कस्यचिद्राज्ञः सभायां वेदान्त-धर्मशास्त्रादिविषये **ताताचार्य**

खण्डितम् । ततःप्रभृति ताताचार्यः अप्पयदीक्षितेन दृढतरबद्धवैर आसीत् । नैतावदेव केनापि प्रकारेणायं हन्तव्य इत्यपि निश्चिकाय । ततश्चैकस्मिन् समये ताताचार्येण तत्रभवन्तं दीक्षितं विपिनमार्गेण गच्छन्तं ज्ञात्वा तद्वधाय चण्डालाः प्रेषिताः, परंतु तेन तपस्विना शिवभक्तिप्रभावः केवलं द्वेषपरवशतया नावगतः । तत एव तस्मिन्नरण्ये कश्चिद्वीरपुरुषः सहसाऽऽविर्भूय तेन चण्डालाः परिभूताः इत्यादि । अस्तु नामैतत् । अत्रत्योऽयं **अप्पयगुरु**स्तु ताताचार्यस्य भागिनेयः इति निश्चीयते । ताताचार्यस्तु कर्नाटदेशीयस्य **कृष्णराया**ख्यस्य राज्ञो गुरुः, परोपकाररतश्चासीत् । अनेन '**सात्विकब्रह्मविद्याविलासः**' इति प्रसिद्धो वेदान्तशास्त्रग्रन्थो व्यरचि इत्यपि श्रूयते ।

अत्र ( मुम्बय्याम् ) कर्नाटकनाम्नि मुद्रणयन्त्रालये मुद्रितपुस्तके आङ्ग्लभाषामयप्रस्तावनायामस्य विश्वगुणादर्शकर्तुर्वृत्तं दृश्यते तदित्थम्—

'अयं विश्वगुणादर्शकर्ता **वेङ्कटाध्वरि**नामा कविः **नीलकण्ठदीक्षित**समकालस्तत्सहाध्यायी चासीत्' इति । ततश्चैवं प्रतिपद्यते—नीलकण्ठदीक्षितः, अप्पयदीक्षितस्य भ्रातुः **नारायणदीक्षित**स्य च पुत्र आसीदिति **काव्यमाला**ख्यमासिकपुस्तकस्य प्रथमगुच्छान्तर्गतश्रीमदप्पयदीक्षितप्रणीतवैराग्यशतकाख्यग्रन्थस्य प्रथमश्लोकटिप्पण्यां दृश्यते । अनेन **नीलकण्ठचम्पू** रचिता, तत्प्रारम्भे स्वकीयग्रन्थनिर्माणकालश्चापि निर्दिष्टः— 'अष्टत्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु । ( ४७३८ ) कलिवर्षेषु गतेषु ग्रथितः किल **नीलकण्ठविजयो**ऽयम् ॥ ' इति । तस्मादेवं निश्चीयते, ४७३८ तमे वर्षे ख्रिस्ताब्दं १६३७ तमं तस्मिन्नेव वर्षे नीलकण्ठचम्पूर्विरचिता, तत्समकालीनश्चायं वेङ्कटाध्वरिनामा कविरासीत्, ततश्च २६२ वत्सरेभ्यः प्राक् अयं विश्वगुणादर्शकर्ता कविः सुप्रसिद्ध आसीत् इति । परं च तेनायं ग्रन्थः कस्मिन् वर्षे निर्मित इति तु न याथार्थ्येन निश्चेतुं शक्यते, केवलं २६० वर्षेभ्यः प्राक्तनकालीनोऽयं ग्रन्थ इत्यनुमीयते । अन्यदप्यत्रत्यमुद्रितपुस्तकप्रस्तावनायां किंचिद्वृत्तमुपलभ्यते—

'अयं वेङ्कटाध्वरी **काञ्ची**पुरसमीपे 'अर्शनफल' नाम्नि अग्रहारे प्रतिवसति स्म । 'वडघले' इत्याख्यवैष्णवसंप्रदायपक्षपातिताताचार्यान्वयोत्पन्नश्चासीत् ' इति । अथ उपरि ' वघडले ' इत्याख्यो वैष्णवसंप्रदाय उक्तः तत एव अन्यसंप्रदायसत्त्वस्याकाङ्क्षा उत्पद्यते, तत्परिपूरणार्थमन्यमतस्यापि निरूपणं यत्किंचिदपि प्रसङ्गादापतितं, ततश्चैतत्पथप्रवर्तकस्य **रामानुज**स्वामिनोऽपि किंचिच्चरित्रलेखनं प्रसङ्गं नातिक्रामति । तच्च रामानुजीयं वृत्तं पुस्तकद्वये द्विधा श्रूयते । तत्र महाराष्ट्रभाषायां कविचरित्राभिधमेकं पुस्तकं सुप्रसिद्धं विद्यते तस्मिन्नेवमस्य वृत्तान्तः—

' अयं रामानुजाचार्यः श्रीमच्छंकरमतप्रतिपक्षी शालिवाहनशकस्य ११ दशे शतके 'दोरासमुद्र' इत्याख्यनगरस्याधिपतौ '**बेटावर्धन**' नाम्नि राज्ञि महीं शासति ' श्रीपेनुमुतूर'नाम्नि ग्रामे श्रीकेशवाचार्यपत्न्यां **कान्तिमत्या**माविर्बभौ । अयं च ग्रामः चन्नपट्टण ( मद्रास ) पुराद्वादशक्रोशेषु काञ्चीनाम्ना भाषायां ' कंजेवरम् ' इति नाम्ना वा यत्प्रसिद्धं नगरं विद्यते तदध्वन्येव वर्तते । एतस्मिन्नेव ग्रामे उपनयनादनन्तरं

श्रीमता रामानुजेन **यादवप्रकाश**ाख्यस्वमातुलात् वेद-शास्त्रादिप्रावीण्यं संपादितम्। ततश्चायं स्वकीयग्रामे एवैकं चिञ्चातरुमूलमाश्रित्यैकाग्रेण मनसा भगवन्तं श्रीराममुपासांचक्रे, ततस्तत्प्रसादादेव जीवेश्वरयोर्भेदवादमाश्रित्य अद्वैतवादिनः श्रीशंकरस्वामिनो मतं प्रत्याचख्यौ, लोकांश्च श्रीसीतारामपूजनं त्रिपुण्ड्रधारणादिसंप्रदायान् ग्राहयामास। ततश्चानेकविधदेशेषु संचारमारचय्य तत्रत्यान् जनान् स्वमतमुपदिदेश। एवं पर्यटन् ' दोरासमुद्र ' नगरमेत्य तत्रत्यराजकन्यायाः पिशाचबाधां न्यवर्तयत्। ततः सुप्रसन्नेन राज्ञा तस्मै मूल्यवन्ति वस्त्रालंकारादीनि पारितोषिकाणि दत्तानि स्वयं च तस्माद्वैष्णवधर्ममङ्गीचकार। एवमयं यमदुनाचार्येण स्वस्य प्रियच्छात्रेण सह **तिरुपति-जगन्नाथ-काशी-जयपुर**ादिमहाक्षेत्रेषु संचरन् तत्रस्थब्राह्मणान् वैष्णवदीक्षितान् संपादयामास कतिचिन्मठांश्च स्थापयामास। किंचास्य वैष्णवधर्मप्रवचनं श्रुत्वा जयपुरमहाराजः अतीव ननन्द स्वपुरस्थान् जैनांश्च तैलयन्त्रे विनिष्पीड्य जघान। एवमयं पर्यटन् **बद्रीक्षेत्रं** गत्वा तत्रस्थनारायणं देवं च स्तुत्वा स्वदेशमाजगाम। तत्र चानेन **व्याससूत्रभाष्यं, (रामानुजभाष्यं) भगवद्गीताभाष्यं, तर्कभाष्यं** चेत्यादयो बहवो ग्रन्था विरचिताः। तथा चायं स्वमतस्थवैष्णवद्विजकृते एकां **धर्मसंहिता**मपि रचयामास। एवं सर्वमपि जीवितकालं भगवद्भक्त्या वेदान्तादिग्रन्थपरिशीलनेन च निर्यापितवान्। एनं सर्वेऽपि तदनुयायिनः **शेषावतारं** मन्यन्ते, अत एव तैः स्वाचार्यस्य धातुमयी प्रतिकृतिरपि निर्मिता सा चाद्यावधि पूज्यतेऽपि। ...नं 'तादरी' नाम्नि ग्रामे तेङ्गल (महाराष्ट्रभाषायां 'तिंगल') पथप्रवर्त... अहोबलनाम्नि मठे च 'वडघले' ( भाषायां 'वडगळ' ) इत्याख्यसंप्रदाय... विद्यते, अन्यदप्येकमासनं ' गळता ' इत्याख्यग्रामे वर्तते । वडघले-तेङ्गल... योः कालान्तरेण मतभेदात् कलहश्चाजनि' इति।

अत्रत्यमुद्रितपुस्तके च कल्पितोदन्तः ( दन्तकथा ) इति यद्वृत्तं निवेशितं ...

'खिस्तशकस्य ११ दशे शतके दाक्षिणात्ये जनपदे ( दक्षिणहिन्दुस्थानाख्ये देशे) सामाजिकधार्मिकाचारसंबन्धेन महती चर्चा प्रवृत्ता । तत्समय एव चन्नपट्टणराजधान्यां ( मद्रास इलाखा इति प्रसिद्धायां ) चेङ्गलपटाख्यमण्डले वर्तमानस्य 'कञ्जीवरम्' इति नगरस्य निकटवर्तिनि ' श्रीपरम्बुदरम् ' इति प्रसिद्धपुरे खिस्तशकस्य १००९ तमे वत्सरे श्रीरामानुजाचार्य इत्याह्वयः कश्चिद्विप्रोऽजनि। तेन वैष्णवो धर्मः **प्रवर्तितः** स्वयं च मनुजबान्धवः इत्युद्घोषितं च। ततश्च विजातीया अपि जनाः **स्वधर्मे** आनीताः, स्वकीयानुयायिजनेषु च निर्घृणत्वद्योतका विधवावपनप्रवृत्तिर्निरुद्धा, इयमेव रीतिस्तदनुयायिष्वद्यावधि वर्तत एव। किंच तज्जनमध्यगा विधवा अपि **वपनं** कारयितुं नैवोत्सहन्ते, किंतु 'यान्यस्माकं शिरांसि गुरोः पुरतोऽवनामितानि, **तानि** नापितस्याग्रेऽवनामयितुं नार्हाणि' इति वदन्ति च । एवं कतिपये काले **गते** सति तत्प्रगत्यैव हेतुभूतया तदीयः पन्था द्विधा विभिन्नः। ततः कतिपयैर्जनैः **'वडघले'** अथवा ' उत्तरदेशीयाः ' इत्यभिधानं स्वीकृतम्। एवं चैतैर्जनैः **उत्तरदेशीयाः** वैदिकाः शास्त्रीयाश्चाचाराः संमानिताः। अयं विश्वगुणादर्शप्रणेता कविः **एतन्मतस्थ**

THE

# VISHWAGUṆÂDARSHA CHAMPÛ

OF

# VENKATÂDHVARI.

EDITED WITH

COMMENTARY (PADÂRTHACHANDRIKÂ)

BY

BÂLKRISHṆA GANESH YOGÎ.

REVISED BY

MAHÂDEV GANGÂDHAR SHÂSTRÎ BÂKRE.

**SECOND EDITION.**

PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRṆAYA-SÂGARA" PRESS.

Bombay.

1906.

*Price 1 Rupee.*

श्रीर्जयति ।

## विश्वगुणादर्शनिर्दिष्टविषयसूची—

| | मू० | डा.व्य. |
|---|---|---|
| १७. **उन्मत्तराघवप्रेक्षणकम्**—श्रीभास्करकविविरचितम्. | ८= | ८॥ |
| १८. **अमरुशतकम्**—श्रीअमरुककविरचितं, अर्जुनवर्मदेवशर्मप्रणीतया रसिकसंजीवन्या टीकया सहितम्. | ।॥= | ८— |
| १९. **सूर्यशतकं काव्यम्**—श्रीमयूरकविप्रणीतं, त्रिभुवनपालविरचितया टीकया सहितम्. | ।= | ८— |
| २०. **लटकमेलकप्रहसनम्**—श्रीशङ्खधरविरचितम्. | ।· | ८॥ |
| २१. **गाथासप्तशती—श्रीसातवाहनविरचिता, गङ्गाधरभट्टकृत**टीकया सहिता. अस्मिन् पृथक्पृथग्वर्णनपराः प्राकृत ( मागधीत्यादि ) भाषात्मकाः ७०० श्लोकाः सन्ति. | १॥ | ८≡ |
| २२. **हरविजयमहाकाव्यम्—राजानकरत्नाकरविरचितं, राजानकालककृत**टीकया सहितम्, पञ्चाशत् ५० सर्गात्मकेऽस्मिन् काव्ये भगवता श्रीशंकरेणान्धकासुरं निहत्य देवानां सुखमुदपादि इत्यादि कथानकं वर्तते, समयानुसारतोऽन्यदपि स्थलादिवर्णनं मनोहरतयाऽकारि ग्रन्थकृता. | ५ | ।॥· |
| २३. **स्तुतिकुसुमाञ्जलिकाव्यम्**—श्रीजगद्धरभट्टविरचितं, राजानकरत्नकण्ठविरचितटीकया सहितं च. | ३ | ८≡ |
| २४. **काव्यप्रदीपः**—( अलंकारग्रन्थः ) **महामहोपाध्यायश्रीगोविन्दविरचितः.** | ३। | ८≡ |
| २५. **ध्वन्यालोकः**—( अलंकारग्रन्थः ) **श्रीमदानन्दवर्धनाचार्यकृतः.** | १।॥ | ८= |
| २६. **दशावतारचरितकाव्यम्**—श्रीक्षेमेन्द्रविरचितम्. | १ | ८—॥ |
| २७. **जीवानन्दनाटकम्—आनन्दरायमखिकृतम्**, षडङ्कात्मकेऽस्मिन्नाटके रोगादिविविधसंकटेभ्य ईश्वरानुकम्पया जीवस्य मुक्तिः कथं भवतीति सुव्यक्तीकृतम्. | ।॥· | ८— |
| २८. **दूताङ्गदनाटकम्—श्रीसुभटकविविरचितम्**, एकाङ्कात्मके स्वल्पतरेऽस्मिन्नाटके रावणपुरतोऽङ्गदकृतस्य दौत्यस्य सम्यक्तया रमणीयतया च विवेचनं कृतम्. | ८= | ८॥ |
| २९. **भर्तृहरिनिर्वेदनाटकम्—श्रीहरिहरोपाध्यायकृतं,** पञ्चाङ्कात्मकमिदं नाटकमतीव रसभरितं विद्यते. अस्मिन् स्त्रीविरहिणो भर्तृहरेर्निर्वेदस्यातीव हृदयद्रावकतया वर्णनं कृतम्. | ८=॥ | ८॥ |

| | मू० | डा.व्यं. |
|---|---|---|
| ३०. **चन्द्रप्रभचरितकाव्यम्—श्रीवीरनन्दिविरचितम्,** अष्टादशसर्गात्मकेऽस्मिन्काव्ये जिनमततवृत्तान्तः समग्र उपलभ्यते. | ०।।।० | ८- |
| ३१. **विष्णुभक्तिकल्पलताकाव्यम्**—पुरुषोत्तमविरचितं, महीधरविरचितया टीकया सहितम्. | ०।।= | ८-।। |
| ३२. **सहृदयानन्दकाव्यम्—कृष्णानन्दविरचितम्,** पञ्चदशसर्गात्मकमिदं काव्यं गीर्वाणगहनप्रविविक्षूणां मार्गसौलभ्यकरं सहृदयानां मनोरञ्जकं च विद्यते. | ०।।= | ८- |
| ३३. **श्रीनिवासविलासचम्पूः**—वेङ्कटेशकविप्रणीता, धरणीधरकृतटीकया सहिता. | ०।।।= | ८-।। |
| ३४. **प्राचीनलेखमाला**—( प्रथमो भागः ) | १।। | ८= |
| ३५. **अलंकारसर्वस्वम्—राजानकरुय्यककृतं, जयरथकृत**टीकासहितम् । अस्मिन् शब्दार्थोभयविधालंकाराणां मनोहरतया वर्णनं विद्यते, तत एवायं ग्रन्थः केवलं ( रसादिज्ञानं विना ) अलंकारजिज्ञासूनामतीवोपयुज्यते. | १। | ८= |
| ३६. **वृत्तिवार्तिकम्**—श्रीमदप्पयदीक्षितप्रणीतम्. | ८≡ | ८।। |
| ३७. **रससदनभाणम्**—युवराजकविविरचितम्. | ०।≡ | ८- |
| ३८. **चित्रमीमांसा**—श्रीमदप्पयदीक्षितप्रणीता, **चित्रमीमांसाखण्डनम्**—पण्डितराजजगन्नाथविरचितं. | ०।।।≡ | ८-।। |
| ३९. **विद्यापरिणयः**—आनन्दरायमखिविरचितः. | ०।।- | ८- |
| ४०. **रुक्मिणीपरिणयं नाटकम्**—श्रीरामवर्मवञ्चियुवराजविरचितम्. | ०।- | ८- |
| ४१. **प्राकृतपिङ्गलसूत्राणि—श्रीमद्वाग्भटविरचितानि, लक्ष्मीनाथभट्टकृत**टीकासहितानि, अस्य ग्रन्थस्य २ परिच्छेदौ वर्तेते संस्कृतनाटकादिग्रन्थेषु स्थलविशेषे प्राकृतैव भाषा दृश्यते. परंतु तद्भाषायां वृत्तादिज्ञानं बहुषु जनेषु नैवोपलभ्यते नाटकादिपरिशीलिनां च तस्यातीवावश्यकता वर्तते. तस्मात् एतादृशामितरेषां च जनानामतीवोपयुज्येत प्राकृतग्रन्थः. | १।।। | ८≡ |
| ४२. **नाट्यशास्त्रम्**—श्रीभरतमुनिप्रणीतम्. | ३ | ०।० |
| ४३. **काव्यानुशासनम्**—श्रीमद्वाग्भटविरचितं, स्वकृतटीकासहितम्. ... ... ... ... ... ... | ०।≡ | ८- |



श्रीः ।

# विश्वगुणादर्शचम्पूः

## पदार्थचन्द्रिकाटीकया समेता ।

### उपोद्घातः १.

श्रीराजीवाक्षवक्षःस्थलनिलयरमाहस्तवास्तव्यलोल-
लीलाब्जान्निष्पतन्ती[1] मधुरमधुझरी नाभिपद्मे मुरारेः ॥
अस्तोकं लोकमात्रा द्वियुगमुखशिशोराननेष्वर्प्यमाणं
शङ्खप्रान्तेन दिव्यं पय इति विबुधैः शङ्क्यमाना पुनातु ॥ १ ॥

---

श्रीमद्ब्रह्म सनातनं श्रुतिनुतं ध्यानैकगम्यं सदा
सर्गाद्यस्य विधायकं त्रिजगतो मोदावहं यत्सदा ॥
सच्चिद्रूपतया यदर्थनिचयं व्याप्नोति तेजोमयं
भूयात्तत्त्रिविधार्तिहारि जगतां श्रीवासुदेवाभिधम् ॥ १ ॥
नमामि देवीं कुलदेवतामहं ब्रह्मादिदेवैरभिसंस्तुतां मुहुः ॥
**महादल**[2]ग्रामकृताधिवासां **महालसाख्यां** प्रकृतिं गुणात्मिकाम् ॥ २ ॥
यत्सूक्तिधारासुनिषेचनेन मद्धीलता पल्लविता बभूव ॥
स्मरामि तं श्रीगुरु**वेङ्कटा**[3]ख्यं विनम्रमूर्द्धा कृतहस्तसंपुटः ॥ ३ ॥
**श्रीगणेशं** च पितरं विद्वांसं स्वःस्थितं भजे ॥
अत्रस्थां मातरं चैव **जयन्तीं** जननप्रदाम् ॥ ४ ॥
गुरुप्रसादसंलब्धव्याकृतिज्ञानकौशलः ॥
काव्यं **विश्वगुणादर्शं** व्याकरोमि यथामति ॥ ५ ॥

अथ तत्रभवान् **श्रीवेङ्कटाध्वरि**नामा कविः प्रारिप्सितग्रन्थस्य निर्विघ्नपरिसमाप्तिमभिलिप्सुः शिष्टाचारप्राप्तं मङ्गलं तच्च "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्" इत्युक्तत्वादत्र आशीरूपमाचरन् प्राह—**श्रीराजीवेति ।** सा मधुरमधुझरी मधुरा मधुनः मकरन्दस्य धारा, अस्मान् सर्वानिति शेषः । पुनातु पवित्रीकरोतु । कीदृशी मधुझरी । श्रीमतो ( राजीवे कमले इव अक्षिणी यस्य तस्य ) राजीवाक्षस्य विष्णोः "बहुव्रीहौ सक्थ्यक्ष्णोः—" इत्यादिना समासान्तः षच् । वक्षःस्थले निलय आश्लिष्य स्थितिर्यस्यास्तस्या रमाया लक्ष्म्याः "क्षीरोदतनया रमा" इत्य-

---

१ 'निःसरन्ती,' 'निःस्रवंती'. २ 'महाडदळ' इति महाराष्ट्रभाषायां प्रसिद्धः. ३ सांगलीस्थव्याकरणपाठशालाध्यापकाः.

काञ्चीमण्डलमण्डनस्य मखिनः कर्णाटभूभृद्गुरो-
स्तातार्यस्य दिगन्तकान्तयशसो यं भागिनेयं विदुः ॥

मरः । हस्ते वास्तव्यं वर्तमानं यत् लोलत् चलत् लीलाब्जं विलासार्थं कमलं तस्मात् । श्रीभगवतो हृदये प्रेम्णा परिरभ्य स्थिताया लक्ष्म्याः करस्थलीलाकमलादित्यर्थः । मुरारेर्विष्णोर्नाभिपद्मे निष्पतन्ती निर्गलन्ती, पाठान्तरे तु निःस्रवन्ती स्यन्दमाना । उत्प्रेक्षते । द्वे युगे युग्मे चत्वारीत्यर्थः । "युगं युग्मे कृतादिषु" इत्यमरः । मुखानि यस्य स चासौ शिशुश्च तस्य ब्रह्मण इति यावत् । आननेषु मुखेषु "आननं लपनं मुखम्" इत्यमरः । लोकमात्रा लक्ष्म्या कर्त्र्या "इन्दिरा लोकमाता मा" इत्यमरः । शङ्खप्रान्तेन करणेन, अर्प्यमाणं प्रेम्णा समर्प्यमाणं, अस्तोकं बहुलं दिवि भवं दिव्यं स्वर्ग्यं "तत्र भवः" इति यत् । पयः अमृतं, इति विबुधैः देवैः "देवास्त्रिदशा विबुधाः सुराः" इत्यमरः । शङ्कयमाना संभाव्यमाना । मधुझरीति संबन्धः । श्रीविष्णोर्वक्षसि प्रेमाश्लेषेण स्थिता लक्ष्मीः कमलं लीलया भ्रामयामास, तस्माद्गलन्ती मधुधारा भगवन्नाभिकमलं प्रति संगता, तां च दृष्ट्वा लक्ष्मीः प्रेम्णा निजबालकं शङ्खाग्रेणामृतमेव पाययतीति स्तावकैर्देवैरुत्प्रेक्षितमिति भावः । अत्र लक्ष्मीकरस्थपद्मात् स्रवन्त्यां मधुधारायां दिव्यपयसः संभावनादुत्प्रेक्षालंकारः । तदुक्तम्—"संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्" इति । ननूत्प्रेक्षायामपि संभाव्य-संभावनयोरुपमानोपमेयभाव आवश्यकः, स चात्र मुरारेर्नाभिकमलस्य ब्रह्मण आननस्य च यद्यपि संभवति, तथापि लक्ष्मीहस्तस्थपद्मस्य शङ्खस्य च न संभवति । शङ्खस्यैकतो यत्किंचिन्मुकुलीभावत्वादेकतश्च विकासशालित्वात् (शङ्खो हि उपरितनभागे प्रसृतः अधोभागे च संकुचितो वर्तते) इति चेत्, श्रीराजीवाक्ष इत्यस्य चन्द्रसूर्याक्ष इत्यर्थः । स यथा—"इरा भू-वाक्-सुराप्सु स्यात्" इत्यमरात् इराशब्दस्य भूवाचकत्वं, तस्य च स्थानवाचकतापि संभवति, तेन श्रियो लक्ष्म्याः इरा स्थानं श्रीरा कमलं, तां आजीवयति विकासयतीति श्रीराजीवः सूर्यः, तथैव 'इरा भू-' इत्यनेनैव कोशेन इराशब्दस्य जलवाचकत्वमपि संभवति, ततश्च इराया जलात् आजीवति उत्पद्यते इति इराजीवश्चन्द्रः, ततश्च श्रीराजीवश्च श्रीराजीवश्च श्रीराजीवौ चन्द्रसूर्यौ "सरूपाणामेकशेषः—" इत्येकशेषः । तौ अक्षिणी यस्य स श्रीराजीवाक्षः । एवं च लक्ष्म्याः करस्थितपद्मस्य एकतश्चन्द्रकिरणसंपर्कादन्यतः सूर्यकिरणसंपर्काच्च मुकुलितत्वं विकासशालित्वं च संभवति, तेन शङ्खस्य पद्मस्य चोपमानोपमेयभावः संभवतीति ज्ञेयम् । स्रग्धरा वृत्तमेतत् "म्रभ्नैर्यानां त्रयेण त्रि-मुनि-यतियुता स्रग्धरा-" इति तल्लक्षणात् ॥ १ ॥

अधुना कविः स्वकीयकाव्यरचनासामर्थ्यप्रकटनाय पूर्वजप्रशंसापूर्वकं स्वस्य कोविदत्वं प्रपञ्चयंश्चिकीर्षितं ग्रन्थं प्रतिजानीते—**काञ्चीति** । काञ्चीमण्डलस्य काञ्चीनगरीराष्ट्रस्य मण्डनः भूषणभूतः तस्य । स्वकीयविद्वत्त्वप्रभावेण काञ्चीराजधान्यां प्रसिद्धस्येति भावः । मखिनः प्रशस्तयज्ञकर्तुः । प्रशंसार्थेऽत्र मतुबर्थ इनिः । "भूम-निन्दा-प्रशंसासु" इत्याद्युक्तेः । कर्णाटभूभृतः कर्णाटदेशाधिपते

अस्तोकाध्वरकर्तुरप्पयगुरोरस्यैष विद्वन्मणेः
पुत्रः **श्रीरघुनाथदीक्षितकविः** पूर्णो गुणैरेधते ॥ २ ॥
तत्सुतस्तर्क-वेदान्त-तन्त्र-व्याकृतिचिन्तकः ॥
व्यक्तं **विश्वगुणादर्शं** विधत्ते **वेङ्कटाध्वरी** ॥ ३ ॥
पद्यं यद्यपि विद्यते बहु सतां हृद्यं विगद्यं न तत्
गद्यं च प्रतिपद्यते न विजहत्पद्यं बुधास्वाद्यताम् ॥

---

राज्ञः कृष्णरायसंज्ञकस्य "भूभृद्भूमिधरे नृपे" इत्यमरः। गुरोः वेदादेरध्यापकस्य। यद्यपि "स्यान्निषेकादिकृद्गुरुः" इत्यमरात् "निषेकादीनि कर्माणि यः करोति यथाविधि। संभावयति चान्नेन स विप्रो गुरुरुच्यते" इति मनुस्मृतेश्च गर्भाधानादिसंस्कारकर्तुः पितुरेव गुरुत्वं संभवति, तथापि तथात्रासंभवादध्यापकस्यैव गुरुत्वं ग्रन्थकर्तुरभिप्रेतम्। अन्यथा 'कर्नाटभूभृत्पितुः' इत्येव ब्रूयात्। तथा चाह मनुरपि—"अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः। तमपीह गुरुं विद्यात्" इति। एवं च गुरुशब्देनाध्यापकग्रहणे न दोष इत्यलमप्रस्तुतपल्लवितेन। दिगन्तेषु कान्तं मनोहरं श्राव्यमिति यावत्। यशः कीर्तिर्यस्य तस्य। तातार्यस्य ताताचार्यस्य। यं (अप्पयगुरुं) भागिनेयं भगिनीपुत्रं, भगिनीशब्दात् "स्त्रीभ्यो ढक्" इत्यपत्यार्थे ढक्। "स्वस्रीयो भागिनेयः स्यात्" इत्यमरः। विदुः जानन्ति। लोका इति शेषः। 'विद ज्ञाने' इत्यस्माल्लट्। "विदो लटो वा" इति उस्। अस्य तातार्यभागिनेयस्य अस्तोकानां बहूनामध्वराणां ज्योतिष्टोमादियागानां "यज्ञः सवोऽध्वरो यागः" इत्यमरः। कर्तुः अनुष्ठातुः। विद्वत्सु पण्डितेषु मणेः श्रेष्ठस्य, अप्पयगुरोः अप्पयदीक्षितस्य, एष प्रसिद्धः पुत्रः श्रीरघुनाथदीक्षिताख्यः कविः, गुणैः सौशील्यादिकैः पूर्णः सन् एधते वर्धते। शार्दूलविक्रीडितं वृत्तम्। "सूर्याश्वैर्म-स-जास्त-ताः सगुरवः शार्दूलविक्रीडितम्" इति तल्लक्षणात्॥ २॥

**तत्सुत इति**। तस्य रघुनाथदीक्षितस्य सुतः पुत्रः, तर्कश्च वेदान्तश्च तन्त्रं मीमांसा च व्याकृतिर्व्याकरणं च तेषां चिन्तको विवेचकः ज्ञातेत्यर्थः। **वेङ्कटाध्वरी** एतन्नामा कविः **विश्वगुणादर्शं** विश्वस्य जगतो गुणा आदृश्यन्तेऽस्मिन्निति तथाभूतं 'दृशिर् प्रेक्षणे' इत्यस्मादाङ्पूर्वकादधिकरणे घञ्। अथवा विश्वगुणादर्श इति संज्ञा। तथाच "पुंसि संज्ञायां घः प्रायेण" इति घः। एवमन्वर्थं चम्पूग्रन्थं, व्यक्तं प्रसिद्धं यथा स्यात्तथा विधत्ते करोति। 'डुधाञ् धारण-पोषणयोः। इत्यस्माद्धातोर्लट्। वृत्तमनुष्टुप् "पञ्चमं लघु सर्वत्र" इत्यादितल्लक्षणात्॥ ३॥

अथ कविः स्वचिकीर्षितप्रबन्धस्येतरप्रबन्धविलक्षणतामाह—**पद्यमिति**। (लोके) यद्यपि पद्यं केवलं श्लोकरूपं काव्यं रघुवंश-कुमारसंभव-माघ-किरातार्जुनीयादिकं, तच्च हृद्यं मनोहारि विद्यते, तथापि तत् विगद्यं गद्यरहितं (अस्ति तस्मात्) सतां बहु

---

१ 'रस्येष'. २ 'पूर्णैर्गुणै'.

आदत्ते हि तयोः प्रयोग उभयोरामोदभूमोदयम्
सङ्गः कस्य हि न स्वदेत ? मनसे माध्वीक-मृद्वीकयोः ॥ ४ ॥

विश्वावलोकस्पृहया कदाचिद्विमानमारुह्य समानवेषम्[1] ॥
कृशानु-विश्वावसुनामधेयं गन्धर्वयुग्मं गगने चचार ॥ ५ ॥

तत्र[3]—

कृशानुरकृशासूयः पुरोभागिपदं गतः ॥

---

अतिमनोहरं रसिकानां यथेप्सितमनोहरमित्यर्थः । न भवति । तर्हि गद्यमेव कर्तव्यमित्याह । गद्यं च गद्यमपि ( तत्तु कादम्बर्यादिकं ) पद्यं विजहत् पद्यरहितं ( विद्यते, तस्मात्तदपि ) 'ओहाक् त्यागे' इत्यस्मात् शतृप्रत्ययः । बुधानां उभयोरपि मर्मज्ञपण्डितानां, आस्वाद्यतां रुच्यर्हतां न प्रतिपद्यते न प्राप्नोति । तर्हि किंविधमिष्टं स्यादित्याकाङ्क्षायामाह—**आदत्ते इति।** हि यस्मात् कारणात् तयोर्गद्यपद्ययोरुभयोः प्रयोगः प्रकृष्टो योगः अस्ति यस्मिन् सः, अत्र अर्शआदित्वात् मत्वर्थीयोऽच् । तादृशश्चम्पूप्रबन्धः । " गद्य-पद्यात्मकं काव्यं चम्पूरित्यभिधीयते " इति वचनात् । आमोदस्यानन्दस्य " मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोद-संमदाः " इत्यमरः । भूम्नः अतिशयस्योदयमुत्पत्तिं विधत्ते करोति । हि यतः माध्वीकं मधु च "मधु माध्वीकमद्ययोः" इत्यमरः । मृद्वीका द्राक्षा च "मृद्वीका गोस्तनी द्राक्षा" इत्यमरः । तयोः सङ्गः एकत्र योगः । कस्य मनसे न स्वदेत कस्य मनसि रुचिं नोत्पादयेत् ? अपि तु सर्वस्मै रोचेतेत्यर्थः । 'ष्वद आस्वादने' इत्यस्य विधिलिङि रूपम् । मनसे इत्यत्र च "रुच्यर्थानां प्रीयमाणः" इति चतुर्थी । अर्थान्तरन्यासोऽत्रालंकारः । विशेषेण सामान्यस्य समर्थनात् । तदुक्तम्—"सामान्यं वा विशेषो वा तदन्येन समर्थ्यते । यत्र सोऽर्थान्तरन्यासः " इति । वृत्तं शार्दूलविक्रीडितम् । लक्षणं प्राक् ( २ श्लोकटीकायां ) कथितम् ॥ ४ ॥

संप्रति कविः स्वकाव्ये वर्णनीयकथाप्रस्तावमाह—**विश्वावलोकेति।** कदाचित् विश्वस्य जगतोऽवलोकश्चमत्कारप्रेक्षणं तस्य स्पृहया इच्छया "इच्छा काङ्क्षा स्पृहेहा तृट्" इत्यमरः । समानस्तुल्यो वेष आकल्पः यस्य तत्, **कृशानु**रिति **विश्वावसु**रिति च नामधेये नामनी यस्य "भागरूपनामभ्यो धेयः" इति नामशब्दात्स्वार्थिको धेयः। तत् गन्धर्वयोर्युग्मं द्वौ गन्धर्वावित्यर्थः । विमानं व्योमयानं "व्योमयानं विमानोऽस्त्री" इत्यमरः । आरुह्याधिरुह्य, गगने आकाशे " -गगनमनन्तं " इत्यतः "पुंस्याकाश-विहायसी" इत्यन्तोमरः । चचार । उपजातिर्वृत्तम् । " अनन्तरोदीरित ( इन्द्रवज्रोपेन्द्रवज्रा ) लक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति तल्लक्षणात् ॥ ५ ॥

द्वयोर्गन्धर्वयोरवस्थाविशेषमाह—**तत्रेति।** तत्र द्वयोर्मध्ये इत्यर्थः । **कृशानुरिति।** कृशानुः कृशानुनामा गन्धर्वः । अकृशा बहुला असूया गुणेषु सत्स्वपि दो-

---

१ 'आधत्ते'. २ 'रूपम्'. ३ 'तत्र तु'.

**विश्वावसुरभूद्विश्वगुणग्रहणकौतुकी ॥ ६ ॥**

## अथ सूर्यवर्णनम् २,

अथ पुरतः समापतन्तमरविन्दबान्धवमवलोकयन्नवन्दतागमसागर-पारदृश्वा **विश्वावसुः** ।

**विश्वावसुः**—ब्रह्मचर्यव्रतोत्सर्गगुरवे कोकसन्ततेः ॥
छायाविब्बोकलोलाय छान्दसज्योतिषे नमः ॥ ७ ॥

---

षाविष्करणं "अक्षान्तिरीर्ष्याऽसूया तु दोषारोपो गुणेष्वपि" इत्यमरः । यस्य तथाभूतः सन्, पुरोभागिनः दोषैकदृशः "दोषैकदृक् पुरोभागी" इत्यमरः । पदं स्थानं "पदं व्यवसित-त्राण-स्थान-लक्ष्माङ्घ्रि-वस्तुषु" इत्यमरः । गतः प्राप्तः अभूत् । अनेन वस्तुतो गुणग्राहित्वेऽपि गुणदार्ढ्यार्थमेव बहिर्दृश्यमानं पुरोभागित्वं नटवत्स्वीकृतमिति सूचितम् । "दार्ढ्याय गुणसमृद्धेः" इत्येतद्ग्रन्थान्ते तेनैवोक्तत्वात् । विश्वावसुस्तु विश्वं वसु धनं यस्येति "वसू रत्ने धने वसु" इत्यमरः । "विश्वस्य वसुराटोः" इत्यनेन विश्वशब्दस्य दीर्घः । विश्वस्य गुणानां ग्रहणे वर्णने कौतुकी कुतूहलवान् । अभूत् आसीत् । अनेन तेनात्मनाम अन्वर्थकं कृतमिति ध्वनितम् । वृत्तमनुष्टुप् । लक्षणं पूर्वं ( ३ श्लो० टीकायाम् ) उक्तम् ॥ ६ ॥

"पुरोभागिपदं गतः" "विश्वगुणग्रहणकौतुकी" इत्यनेनास्मिन्काव्ये प्राधान्यतया विश्वगुण-दोषवर्णनमेव विषय इति द्योतितं, तत्र प्रथमतः माङ्गल्यतया च "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति स्मृतेः "अथादित्य उदयन् यत्प्राचीं दिशं प्रविशति तेन प्राच्यान्प्राणान् रश्मिषु संनिधत्ते यद्दक्षिणां यत्प्रतीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत्सर्वं प्रकाशयति तेन सर्वान् प्राणान् रश्मिषु संनिधत्ते" इति श्रुतेः जगत्प्राणभूतत्वेन च सूर्यवर्णनमेवोचितमिति द्योतयन्प्रस्तौति—**अथेति** । अथ द्वाभ्यां ( कृशानु-विश्वावसुभ्यां ) यथायथं स्वानुरूपस्थानस्वीकारानन्तरं, पुरतोऽग्रतः समापतन्तमुदयमानं अरविन्दबान्धवं सूर्यमवलोकयन्, आगमानां वेदानां सागरस्य पारमन्तं दृष्टवान् इति तथाभूतः । सकलवेदार्थज्ञातेत्यर्थः । दृश्वेत्यत्र "दृशेः क्वनिप्" इति क्वनिप् प्रत्ययः । विश्वावसुः अवन्दत सूर्यं नमश्चकार ।

तदेवाह—**ब्रह्मचर्येति** । कोकानां चक्रवाकानां "कोकश्चक्रश्चक्रवाकः" इत्यमरः । संततेः समुदायस्य, ब्रह्मचर्यव्रतस्य मैथुनाभावस्य उत्सर्गस्त्यागः तस्मिन् कर्मणि गुरवे आचार्याय । चक्रवाकानां निशि विरहावस्थासत्त्वात् प्रातः सुरतावसरप्रदायकायेत्यर्थः । छायया सूर्यप्रियया "छाया सूर्यप्रिया कान्तिः" इत्यमरः । यो विब्बोको विलासः "स्त्रीणां विलास-विब्बोक-"

---

१ 'अवन्दतैनम्'. २ 'आगमसार'. ३ 'बिम्बैक'.

**कृशानुः**—अरे सकल[1]भुवनसंशोषकारिणं तपनम[3]पि किं नम करोषि ? ॥ १ ॥ पश्य—

पान्थान् दीनानहह वसुमानातपान्धान् विधत्ते
शुष्कां पृथ्वीं रचयतितरां शोषयत्योषधीश्च ॥

---

इत्यमरः । तस्मिन् लोलाय सतृष्णाय सोत्सुकायेति यावत् । "लोलश्चल-सतृ इत्यमरः । छान्दसं छन्दसि भवं वेदप्रतिपाद्यमिति यावत् ' तत्र भवः ' इति र्थेऽण् । ज्योतिस्तेजो यस्य सः तस्मै । तथाच श्रुतिः-"विश्वरूपं हरिणं ज परायणं ज्योतिरेकं तपन्तम् । सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानाम् सूर्यः" इति । श्रुत्यर्थस्तु-'विश्वरूपं सर्वरूपं हरिणं किरणवन्तं, जातं वेदो ज्ञ तज्जातवेदसं जातप्रज्ञमित्यर्थः । परायणं परं उत्तमं अयनं( प्राणानां ) आश्रयभूत चक्षुर्भूतं ज्योतिस्तेजोरूपं तपन्तं तापक्रियया वर्तमानम् । ब्रह्मविदो विदुरिति कोऽसौ यं विदुः तदाह—सहस्ररश्मिरिति । इत्यादि स्पष्टम् ।' अथवा छान्दसं वितुर्वरेण्यं" इति गायत्रीच्छन्दःप्रतिपाद्यं ज्योतिर्यस्य तथाभूतः । तथा चा 'यः सूर्यो नः सर्वेषामस्माकं धियो बुद्धीः प्रेरयति, तस्य जगदुत्पादकस्य सवितु प्रसिद्धं वरेण्यं श्रेष्ठं भर्गस्तेजो वयं धीमहि ध्यायेमेत्यर्थः ' इति । तादृशाय नमः नमस्करोमीति यावत् 'नमः स्वस्ति' इत्यादिना चतुर्थी वृत्तमनुष्टुप् ॥ ७

सूर्यं वर्णयन्तं विश्वावसुं दृष्ट्वा जगत्संतापकारित्वं तद्दोषमुद्भाव्याह कृशानु इति । अरे भो विश्वावसो, सकलभुवनानां संशोषणं करोतीति तथाभूतं ' जातौ–" इति ताच्छील्ये णिनिः । अत एव तपनं तप्यते अनेन जगदिति तं, णाधिकरणयोश्च" इति ल्युट् । तापरूपमपि सूर्यमित्यर्थः । किं कथं नमन कर्मरूपं करोषि । तं नमस्करोषीत्यर्थः । अभूततद्भावे च्विः । तस्मिंस्तापकारि सत्त्वात् नमनमयुक्तमिति भावः ॥ १ ॥ तदेवाह—**पश्येति** ।

**पान्थानिति** । अयं वसुमान् वसवः किरणाः विद्यन्ते अस्येति वि "तदस्यास्त्य–" इति मतुप् । किरणवान् सूर्य इत्यर्थः । " रश्मौ रत्ने धने वसु" इत्यमरः । दीनान् अध्वगमनखिन्नान् पान्थान् पथिकान् " प नित्यम्" इति णः । आतपान्धान् आतपेन प्रकाशेन "प्रकाशो द्योत अ इत्यमरः । अन्धान् दृष्टिहीनान् विधत्ते करोति । अहह इति खेदे । ए कष्टमित्यर्थः । दीनान् पान्थान् इत्यनेन दीनानामेव क्लेशाधिक्यं सूचितं, ये दीनाः संपत्तिमन्तः, ते तु छत्र-शकटादिसाधनैरातपं दूरीकर्तुं शक्नुवन्ति । दीनानां क्लेशदायित्वं महतामयुक्तमिति भावः । तथा पृथ्वीं शुष्कां जलहीनां "शुष इति निष्ठातस्य कः । रचयतितरां अतिशयेन करोति । रचयति इत्यस्मात् शयार्थे ' तिङश्च ' इत्यनेन तरप् , तदन्ताच्च "किमेत्तिङव्यय–" इत्यादिना अ

---

१ 'सखे कथं'. २ 'भुवनशोषकारिणं'. ३ 'तपनमपि नमनक०'.

कासाराणां हरति विभवं क्लान्तिशान्तिप्रदानाम्[1]
क्रूरस्यैवं गुणलवकथा का? स्वतो भास्वतोऽस्य ॥ ८ ॥

**विश्वावसुः**—किमरे भगवन्तमरविन्दबान्धवमपि विनिन्दसि[2]? शृणु पुरोभागिन् ॥ २ ॥

वृष्टिं घृष्टिभिरारचय्य जगतस्तुष्टिं सरीसर्ष्टि यः
पुष्टिं द्राग् विशिनष्टि दृष्टिषु नृणां ध्वान्तं पिनष्टि स्थिरम् ॥
प्राज्ञानामपवर्गमार्गदममुं पद्मागृहोल्लासिनं
को न स्तौति? समस्तलोकसुहृदं द्योभूषणं पूषणम् ॥ ९ ॥

---

ओषधीः फलपाकानन्तरं नाशवन्तो व्रीहि-यवादयः "ओषध्यः फलपाकान्ताः" इत्यमरः । मनुरपि—ओषध्यः फलपाकान्ता बहुपुष्प-फलोपगाः" इत्याह । शोषयति सत्त्वहीनाः करोति च । ननु पान्थानां पथि जलपानप्राप्तेः क्लेशः सुपरिहर इत्याशङ्क्य, तदपि दुर्लभमित्याह—**कासाराणामिति** । क्लान्तिशान्तिप्रदानां श्रमशान्तिकराणां प्रददतीति प्रदाः क्लान्तेः शान्तिप्रदास्तेषामिति विग्रहः "आतश्चोपसर्गे—" इति कः । कासाराणां सरोवराणां "कासारः सरसी सरः" इत्यमरः । विभवं जलरूपमैश्वर्यं हरति नाशयति । एवं च दीनानां पथि जलपानमात्रं साधनमपि विनाशयतीति भावः । एवमित्थं स्वभावतः क्रूरस्य निर्दयस्य, अस्य पुरतो दृश्यमानस्य भास्वतः सूर्यस्य "भास्वद्विवस्वत्सप्ताश्व—" इत्यमरः । गुणानां सद्गुणानां लवस्य लेशस्यापि "लव-लेश-कणाणवः" इत्यमरः । कथा वार्ता का? अपि तु नास्तीत्यर्थः । अत्र 'पान्थान् दीनान् आतपान्धान् विधत्ते' इत्यादिवाक्यं क्रूरत्वस्य हेतुरूपं, तस्मात् काव्यलिङ्गमलंकारः "-काव्यलिङ्गहेतोर्वाक्यपदार्थता" इति तल्लक्षणात् । मन्दाक्रान्ता वृत्तम् । "मन्दाक्रान्ता जलधि-षडगैर्म्भौ न-तौ ताद्गुरू चेत्" इति तल्लक्षणात् ॥ ८ ॥

एवं तद्वचनं श्रुत्वा न भवता सम्यग्विचारितमित्यभिप्रेत्य सतिरस्कारमाह विश्वावसुः—**किमरे इति** । अरे कृशानो, भगं तेजोऽस्यास्तीति भगवान् "ऐश्वर्यस्य समग्रस्य तेजसो यशसः श्रियः । ज्ञान-वैराग्ययोश्चैव षण्णां भग इतीङ्गना" इति । तं, न केवलं तेजोयुक्तमेव, अपि तु अरविन्दबान्धवं अरविन्दानां कमलानां विकासकरणात् बन्धुसदृशं, एतादृशमपि सूर्यं निन्दसि? अत एव हे पुरोभागिन् दोषैकदृष्टे, शृणु आकर्णय एतद्वक्ष्यमाणमिति शेषः ॥ २ ॥

किमाकर्णयेतिचेत्तदाह—**वृष्टिमिति** । यः सूर्यः घृष्टिभिः किरणैः "घृष्टिर्वराहे रश्मौ च सूर्ये पुंस्योषधौ स्त्रियाम्" इति शब्दरत्नमञ्जूषायाम् । वृष्टिं वर्षणं आरचय्य कृत्वा, 'रच प्रतियत्ने' इत्यस्माण्णिजन्ताल्ल्यप् "ल्यपि लघुपूर्वात्" इति णेरयादेशः । सर्वतः किरणान् प्रसार्येति यावत् । जगतः तुष्टिं तोषं सरीसर्ष्टि अतिशयेनोत्पादयति 'सृज

---

१ 'क्लान्त'. २ 'विनिन्दयसि'.

यदा न पश्यन्ति तमोविमर्दिनं रविं जनास्तत् कथयन्ति दुर्दिनम् ॥
धिनोति चाम्भोजततिं सरोगतां धुनोत्यसौ देहभृतां सरोगताम् ॥ १० ॥

---

विसर्गे' इत्यस्माद्यङ्लुकि लटो रूपम् "रुग्रिकौ च लुकि" इत्यभ्यासस्य रीगागमः। तथा नृणां दृष्टिषु नेत्रेषु "नेत्रमीक्षणं चक्षुरक्षिणी। दृग्दृष्टी" इत्यमरः। द्राक् उदयसमकालमेव "द्राक् मङ्क्षु सपदि द्रुते" इत्यमरः। पुष्टिं पोषणं विशिनष्टि विशेषेणोत्पादयति 'शिष्लृ विशेषणे' इत्यस्माद्रुधादिकाल्लट्। तथा स्थिरं निखिलनिशां व्याप्य स्थितं ध्वान्तमन्धकारं "अन्धकारोऽस्त्रियां ध्वान्तं" इत्यमरः। पिनष्टि चूर्णीकरोति विनाशयतीति यावत्। 'पिष्लृ संचूर्णने' इत्यस्माल्लट्। किंच प्राज्ञानां यथार्थतया तन्माहात्म्याभिज्ञानां पण्डितानां "धीरो मनीषी ज्ञः प्राज्ञः" इत्यमरः। अपवर्गस्य मोक्षस्य "मोक्षोऽपवर्गः" इत्यमरः। मार्गदं मार्गप्रदातारं, ज्ञानिनो हि सूर्यमण्डलमार्गेण मुक्तिं प्राप्नुवन्ति इति प्रसिद्धिः। तथा च श्रुतिः-"अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्ते। एतद्वै प्राणानामायतनमेतदमृतमभयमेतत् परायणमेतस्मान्न पुनरावर्तन्ते" इति। "द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। योगनिर्भिन्नमूर्धैकोऽपरावृत्तमृतः परः" इति स्मृतिश्च। अपि च पद्मायाः लक्ष्म्याः गृहाणि निवासस्थानानि कमलानि तेषामुल्लासं विकासं करोतीति तथाभूतं, ताच्छील्ये णिनिः। एतादृशगुणविशिष्टत्वादेव च समस्तानां लोकानां सुहृदं निरपेक्षतया हितकरं, द्योः आकाशस्य "द्यो-दिवौ द्वे स्त्रियामभ्रं" इत्यमरः। भूषणमलंकारभूतं अमुं, एवंविशिष्टबहुसद्गुणयुक्तं, पूषणं सूर्यं "विकर्तनार्क-मार्तण्ड-मिहिरारुण-पूषणः" इत्यमरः। कः पुरुषः न स्तौति स्तुतिं न करोति? अपि तु सर्व एव स्तुवन्तीत्यर्थः। 'ष्टुञ् स्तुतौ' इत्यस्मात् लट्। "उतो वृद्धिः—" इत्यादिना वृद्धिः। न त्वादृशा एव सर्वे वृथादोषैकदर्शिन इति भावः। अत्र 'वृष्टिं घृष्टिभिः' इत्यादौ वर्णसाम्यात् अनुप्रासोऽलंकारः "वर्णसाम्यमनुप्रासः" इति तल्लक्षणात्। तस्यैव वाक्यस्य 'को न स्तौति' इत्यस्य हेतुरूपतया च काव्यलिङ्गं, एवमुभौ मिलित्वा संसृष्टिरलंकारः। तदुक्तम्—"सैषा संसृष्टिरेतेषां (अलंकाराणां) भेदेन यदिह स्थितिः" इति। शार्दूलविक्रीडितं वृत्तम्। लक्षणं प्राक् (२ श्लो० टीकायां) उक्तम् ॥ ९ ॥

किंच नैतावदेव किंतु अन्यदपि तन्महत्त्वं शृण्वित्याह—**यदेति**। जनाः तमः अन्धकारं "अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः" इत्यमरः। विमर्दयति नाशयतीति तथाभूतं रविं सूर्यं, यदा न पश्यन्ति, तदा तत् दुर्दिनं दुष्टदिनं कथयन्ति। यदा मेघाच्छादनात् सूर्यस्यादर्शनं भवति, तदा लोकास्तद्दुर्दिनमिति वदन्तीति भावः। तदुक्तममरे-"मेघच्छन्नेऽह्नि दुर्दिनम्" इति। अपि च असौ सूर्यः सरसि सरोवरे "कासारः सरसी सरः" इत्यमरः। गता स्थिता सरोगता तां, अम्भोजानां कमलानां ततिं समुदायं धिनोति प्रीणयति विकासयतीति यावत् 'धिवि प्रीणने' इत्यस्मात् भ्वादेर्लट्। 'धिन्विकृण्व्योरच' इत्यनेन शब्विषये वकारस्याकार उप्रत्ययश्च। तथा देहं बिभ्रति धारयन्ति ते देहभृतः प्राणिनस्तेषां, रोगेण सहिताः सरोगास्तेषां भावः सरोगता तां, धुनोति नाशयति 'धुञ् कम्पने' इत्यस्य रूपम्। "आरोग्यं

आशापालेषु पाशायुध-यम-बलभिन्मारुतेशादिकेषु
प्रायो भूयस्सु जाग्रत्स्वपि च शुचितया भासुरा भूसुराद्याः ॥
यस्मै कालत्रयेऽपि प्रतिदिवसममी कुर्वतेऽर्घ्यप्रदानं
सैषा त्रय्येव विद्या तपति रविमयी सर्वलोकान् पुनाना ॥११॥

---

भास्करादिच्छेत्" इत्याद्यागमात्सूर्यस्यैव रोगनाशकरत्वं प्रसिद्धम् । अत्र प्रतिपादान्ते समानवर्णानां पुनः पुनः श्रवणात् यमकालंकारः । "अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः । यमकं पाद-तद्भागवृत्ति-" इत्यादितल्लक्षणात् । वंशस्थवृत्तम् । "ज-तौ तु वंशस्थमुदीरितं ज-रौ" इति तल्लक्षणात् ॥ १० ॥

किंच **आशापालेष्विति** । अमी शुचितया अन्तःकरणशुद्ध्या भासुरा दीप्तिमन्तः 'भासृ दीप्तौ' इत्यस्मात् 'भञ्ज-भास-मिदो घुरच्' इति घुरच् प्रत्ययः । भूसुरा ब्राह्मणा आद्याः येषु ते । ब्राह्मण-क्षत्रिय-वैश्या इत्यर्थः । पाशायुधो वरुणश्च "प्रचेता वरुणः पाशी" इत्यमरः । यमश्च बलं बलनामानमसुरं भिनत्तीति बलभिदिन्द्रश्च अत एवामरे तस्य बलारातित्वमुक्तम् "बलारातिः शचीपतिः" इति । "अन्येभ्योऽपि दृश्यन्ते" इति क्विप् । मारुतो वायुश्च "समीर-मारुत-मरुत्–"इत्यमरः । ईश ईश्वरश्च आद्यो येषां अग्नि-निर्ऋति-सोमानां तेषु पाशायुध-यम-बलभिन्मारुतेशादिकेषु । भूयस्सु बहुषु अष्टस्वित्यर्थः । आशाः दिशः "दिशस्तु ककुभः काष्ठा आशाश्च" इत्यमरः । पालयन्ति रक्षन्तीति आशापालास्तेषु दिक्पालकेषु, जाग्रत्सु स्वस्वाधिकारतत्परेषु सत्स्वपि । 'जागृ निद्राक्षये' इत्यस्मात् शतृप्रत्ययः । यस्मै सूर्यायैव प्रतिदिवसं कालत्रयेऽपि प्रातर्मध्याह्ने सायं चेति त्रिकालमित्यर्थः । प्रायः अर्घ्यस्य प्रदानमर्पणं कुर्वते कुर्वन्ति । 'डुकृञ् करणे' इत्यस्माद्वर्तमाने लट् । 'अत उत्सार्वधातुके' इति गुणोत्तरमुकारादेशः । "आत्मनेपदेष्वनतः" इति झस्यादादेशः । केचिज्जनाः सूर्यादन्यां देवतामपि भजन्ते, किंतु न सूर्यं विहाय, अपि तु प्रथमं संध्यावन्दनसमये सूर्यायार्घ्यं प्रदायैव भजन्ते, इति 'प्रायः' इत्यनेन सूचितम् । संध्यावन्दनमन्तरान्यस्मिन् कस्मिंश्चिदपि कर्मण्यनधिकारात् । अर्घ्यप्रदानं हि गायत्रीमन्त्रेण विहितं, स च मन्त्रो वेदत्रयादुद्धृतः अत एव तस्य त्रिपात्त्वं, तदुक्तं मनुना—"त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।"इति । यस्मादेवं तस्माद्भगवान् सूर्यो वेदत्रयीरूप एवेति संभाव्याह—**सैषेति** । सा एषा मूर्तिमती रविमयी सूर्यरूपा, सर्वलोकान् पुनाना पवित्रयन्ती सती 'पूञ् पवने' इत्यस्मात् शानच् । त्रयी वेदत्रयीरूपा विद्यैव "स्त्रियामृक्साम-यजुषी इति वेदास्त्रयस्त्रयी" इत्यमरः । तपति प्रकाशते । अत्र सूर्ये वेदत्रयारोपात् उत्प्रेक्षालंकारः । स्रग्धरा वृत्तम् । अस्य द्वयस्यापि लक्षणं प्राक् (प्र. १ श्लोकटीकायां) उक्तम् ॥११॥

कृतत्रिदशपोषणं कृशरथाङ्गसंतोषणं
पिशाचकुलभीषणं पृथुतमश्छटापेषणम् ॥
विनम्रगदशोषणं विहितवारिजोन्मेषणं
नमस्कुरुत पूषणं ननु नभःस्थलीभूषणम् ॥ १२ ॥

इत्थं **विश्वावसु**र्विभावसुमभिष्टुवन् प्राञ्जलिः **कृशानु**ना सह द्वादशात्मानं समया गमयामास विमानम् । आनमच्च तद्बिम्बमध्यधामानमतिमानमहिमानं परमात्मानम् ।

---

अथेदानीं सामान्यतः सूर्यवर्णनमुपसंहरन् एवंविधमहिमवते भगवते तस्मै नमस्काराचरणमेव श्रेय इत्यभिप्रयन्नाह—**कृतेति** । कृतं त्रिदशानां देवानां पोषणं येन तं, "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यादिश्रुतिभिस्तावद्वसन्तादिविशिष्टकाले यज्ञादि कर्म विहितं, तस्मिन् कर्मणि समर्पितहविर्द्वारा देवानां पोषणं भवति । तत्कालनिर्माणं च सर्वथा सूर्याधीनं, तस्मात् देवतानां पोषणमपि सूर्यायत्तमेवेति भावः । कृशाः निशि विरहेणेति शेषः । खिन्नाः ये रथाङ्गाश्चक्रवाकाः तेषां संतोषणमानन्दजनकं "कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः" इत्यमरः । तथा पिशाचानां कुलस्य समुदायस्य भीषणं भयोत्पादकम् । पिशाचानामह्नि संचाराभावो हि प्रसिद्धः । तथा पृथुतमश्छटापेषणं तमसः छटा तमसश्छटा पृथ्वी महती या तमश्छटा अन्धकारसमुदायः निबिडान्धकार इति यावत् । तस्याः पेषणं नाशकम् । तथा विनम्राणां अनन्यभक्त्या शरणागतानां गदस्य रोगस्य "रोग-व्याधि-गदामयाः" इत्यमरः । शोषणं निवारकम् । विहितं कृतं वारिजानां कमलानां उन्मेषणं विकसनं येन तथाभूतम् । किंच नभः आकाश एव स्थली अकृत्रिमस्थलं "जानपद-कुण्ड-गोण-स्थल-" इत्यादिना स्थलशब्दात् अकृत्रिमार्थे ङीष् । तस्याः भूषणमलंकारभूतं, एतादृशं पूषणं भगवन्तं श्रीसूर्यं, ननु निश्चयेन नमस्कुरुत । यूयं सर्वे जना इति शेषः । अत्र 'कृतत्रिदशपोषणं' इत्यादिवाक्यस्य नमस्करणहेतुत्वात् काव्यलिङ्गमलंकारः । पृथ्वी वृत्तम् "द्वितीयमलिकुन्तले गुरुषडष्टमद्वादशं चतुर्दशमथ प्रिये गुरुगभीरनाभिह्रदे । सपञ्चदशमन्तिमं तदनु यत्र कान्ते यतिर्गिरीन्द्र-फणभृत्कुलैर्भवति विद्धि पृथ्वीति सा" इति तल्लक्षणात् ॥ १२ ॥

इत्थं सामान्यतः सूर्यं वर्णयित्वा तद्गतविशेषधर्मानुवर्णनार्थं प्रस्तौति कविः—**इत्थं विश्वावसु**रित्यादिना । इत्थमुक्तप्रकारेण, विश्वावसुः प्राञ्जलिः कृताञ्जलिः सन्, विभावसुं सूर्यं "चित्रभानुर्विभावसुः" इत्यमरः । अभिष्टुवन् तस्य स्तुतिं कुर्वन् सन्, कृशानुना सह । अत्र "सहयोगेऽप्रधाने" इत्यनेन तृतीया । द्वादश आत्मानो मासभेदेन अवयवा यस्य स तं, समया सूर्यस्य समीपमित्यर्थः । "द्वादशात्मा दिवाकरः" इत्यमरः । अत्र "अभितः-परितः-समया-निकषा-हा-प्रतियोगेऽपि"

---

१ 'कृत'.

प्रशस्तगुणसिन्धवे प्रपदनस्पृशां बन्धवे
स्वतोऽपहतपाप्मने सकलदेहिनामात्मने ॥
नमः कमलवासिनीनयनसौख्यसंदायिने[1]
तमःशमविधायिने तरणिमण्डलस्थायिने ॥ १३ ॥

इति द्वितीया । सूर्यस्य मासभेदेन द्वादशावयवत्वं "पञ्चपादं पितरं द्वादशाकृतिं" इति प्रश्नोपनिषदि भाष्ये श्रीमच्छंकराचार्यैः प्रतिपादितम्–'द्वादशाकृतिं द्वादश मासा आकृतयोऽवयवा आकारणं वा अवयविकरणमस्य' इति । विमानं गमयामास प्रापयामास । गमयित्वा च किं कृतवांस्तदाह—**आनमच्चेति** । तस्य सूर्यस्य बिम्बमध्ये मण्डलमध्ये धाम स्थानं यस्य तम् । अतिमानः मानं प्रमाणं अतिक्रान्तः महिमा माहात्म्यं यस्य तं परमात्मानं श्रीनारायणरूपं आनमच्च नमस्कृतवान् । नारायणस्य सूर्यमण्डले स्थितत्वं "ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः" इत्याद्यागमे प्रसिद्धम् ॥

वन्दनप्रकारमेवाह—**प्रशस्तेत्या**दिना । प्रशस्ताः स्तुत्याः ये गुणा दया-दाक्षिण्यादयो भक्तारिष्टनिरसनादयो वा तेषां सिन्धुः समुद्रस्तस्मै अपारगुणवते इत्यर्थः । प्रपदनं पादाग्रं तत् स्पृशन्तीति तेषां बन्धवे हितकारिणे । यद्यप्यमरे "पादाग्रं प्रपदं पादः" इति पादाग्रवाची प्रपदशब्द एवोक्तः, न तु प्रपदनशब्दस्तथापि तत्र प्रपूर्वकात् 'पद गतौ' इत्यस्माद्धातोः सकाशात् "खनो घ च" इति सूत्रे घित्करणस्यान्यतोऽपि ज्ञापनार्थत्वात् घप्रत्ययः । अत्र तु तस्मादेव ल्युट् प्रत्ययः इयानेव भेदः । अर्थस्त्वेक एवेति ज्ञातव्यम् । पादस्पर्शनं च पूजनादौ भगवन्मूर्तेः । तदुक्तं भागवते -"शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम्" इति । अथवा प्रकर्षेण पद्यते ज्ञायते अनेन तत् प्रपदनं ज्ञानं तत् स्पृशन्ति संपादयन्ति ते प्रपदनस्पृशो ज्ञानिनः तेषां बन्धवे प्रियाय । भगवान् हि ज्ञानिनामतीव प्रियः । तथा च भगवद्गीतायाम्-"चतुर्विधा भजन्ते मां नराः सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ । तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।" इति "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति च । स्वतः अपहताः नष्टाः पाप्मानो जन्मादयः (जायते अस्ति वर्द्धते विपरिणमते अपक्षीयते नश्यति इति) षड्विकाराः यस्मात् तथाभूताय । तथा सकलदेहिनां सर्वप्राणिनामात्मने आत्मरूपेण हृदि स्थिताय । "हृदि ह्येष आत्मा" "इहैवान्तः शरीरे सोम्य स पुरुषः" इति श्रुतिः "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इति श्रीभगवद्गीता च । कमलवासिनी लक्ष्मीः तस्याः नयनसौख्यस्य नेत्रसुखस्य संदायिने प्रदायकाय । तमसः अज्ञानस्य अन्धकारस्य वा शमं शान्तिं विधत्ते करोति तच्छीलः तस्मै । तरणेः सूर्यस्य "द्युमणिस्तरणिर्मित्रः" इत्यमरः । मण्डले बिम्बमध्ये "बिम्बोऽस्त्री मण्डलं त्रिषु" इत्यमरः । तिष्ठति तच्छीलः तस्मै

१ 'संधायिने'.

पुनः सभक्त्युन्मेषम्—

भानुभानुदलदब्जलोचनं भक्तलोकभवपाशमोचनम् ॥
धाम तामरसवासिनीसखं हेमवर्णमिह सौति मे सुखम् ॥ १४ ॥

कृशा०—किमरे[1] केवलं निर्घृणोऽपि नारायणो भवता विवेकलाभ[2]वतापि स्तवनभाजनीक्रियते ! ॥ ३ ॥

तथाहि—

स्वेनादौ निखिलं[3] जगद्विरचितं स्वेनैव संरक्षितम्
भिन्दन् हन्त मुकुन्द एष विधृतानन्दो हि निन्दोचितः ॥

---

भगवते नमः । अस्त्विति शेषः । पृथ्वी वृत्तम् । लक्षणं प्राक् ( १२ श्लो० टीकायां ) कथितम् ॥ १३ ॥

पुनः भक्तेः प्रेमपूर्वकानुध्यानस्य "प्रेमपूर्वमनुध्यानं भक्तिरित्यभिधीयते" इत्यागमात् । उन्मेषेण विकासेन सहितं यथा भवति तथा प्राहेति शेषः ॥

**भान्विति** । भानोः सूर्यस्य भानुभिः किरणैः "भानुर्हंसः सहस्रांशुः" "भानुः करो मरीचिः स्त्री" इत्युभयत्राप्यमरः । दलती विकासमाने ये अब्जे कमले ते इव लोचने यस्य तत्, अत्रोपमावाचकस्येवशब्दस्य लोपात् लुप्तोपमेयम् "वादेर्लोपे समासे सा" इति तल्लक्षणात् । भक्तानां भजकानां लोकः समुदायः तस्य यो भवपाशः संसारपाशः तस्य मोचनं निवारकम् । पुनः कथंभूतम् । तामरसवासिनी कमलनिवासिनी लक्ष्मीः "पङ्केरुहं तामरसं सारसं सरसीरुहम्" इत्यमरः । तस्याः सखि मित्रभूतं इति तत् । "राजाहः-सखिभ्यष्टच्" इति समासान्तष्टच्प्रत्ययः । पुनश्च हेम सुवर्णं "सुवर्णं हेम हाटकम्" इत्यमरः । तत् इव वर्णो यस्य तत् । एतादृशं धाम वैष्णवं तेजः इहेदानीं इह सूर्यमण्डले वा । मे मम सुखं सौति जनयति उत्पादयतीति यावत् । रथोद्धता वृत्तम् "रान्नराविह रथोद्धता ल-गौ" इति तल्लक्षणात् ॥१४॥

एवं नारायणवर्णनं श्रुत्वा तत्रापि निर्दयत्वरूपं दोषमुद्भाव्याह कृशानुः—**किमरे** इति । अरे विश्वावसो, केवलमत्यन्तं निर्घृणो निर्दयो नारायणोऽपि भवता त्वया विवेकस्य सदसद्विवेचनस्य लाभः प्राप्तिर्यस्यास्तीति तथाभूतेनापि सता, स्तवनस्य स्तोत्रस्य भाजनीक्रियते पात्रीक्रियते योग्य इव क्रियत इति यावत् । "योग्य-भाजनयोः पात्रं" इत्यमरः । किम्? आश्चर्यमिदमिति भावः । भाजनीक्रियते इत्यत्र अभूततद्भावे च्विः । अभूततद्भावो नाम वर्णनीये वस्तुनि वर्ण्यधर्माभावे सत्यपि तद्धर्मारोपकरणम् । एवं चात्र वस्तुतो निर्दयत्वान्नारायणः स्तवनभाजनमभवन्नपि तदिव कृतः एतदयुक्तमिति कृशानुना सूचितमिति ज्ञेयम् ॥ ३ ॥

तथाहि निर्दयत्वमेवोपपादयति—**स्वेनेति** । हि यस्मात् कारणात् एषः त्वया

---

'[illegible]' २ 'विवेकलोभवता'. ३ 'सकलं'.

उत्पाद्य स्वयमुत्तमान् फलतरूनुल्लास्य चारूदकै-
रुन्मत्तोऽपि किमुच्छिनत्ति जगति च्छित्त्वापि किं नन्दति ? ॥१५॥

किंच—

स्वानुज्ञामनवाप्य दर्पभरतः स्वाज्ञां विलङ्घेत य-
स्तस्यैवेह तनोति लौकिकनृपश्चण्डोऽपि दण्डं रुषा ॥
अन्तर्याम्यपथे प्रवर्त्य भविनो हन्त स्वयं नारके
यस्तान् पातयति क्रुधा स तु न किं ? नारायणो निर्घृणः ॥१६॥

---

स्तवनभाजनीकृतो मुकुन्दो नारायणः, आदौ सृष्टिकाले स्वेन रजोभूयसीं स्वांप्रकृतिमधिष्ठायास्थितचतुर्मुखरूपेण, निखिलं संपूर्णं "समस्त-निखिलाखिलानि निःशेषम् । समग्रं सकलं पूर्णम्" इत्यन्तोऽमरः । जगद्विश्वं विरचितमुत्पादितं, तथा स्वेनैव सत्त्वप्रकृष्टां प्रकृतिमधिष्ठायाविष्कृतविष्णुस्वरूपेण संरक्षितं पालितं, एतादृशमिदं जगत्, पुनः स्वत एव भिन्दन् विनाशयन् तमोगुणप्रचुरां रुद्रतनुमाश्रित्येति भावः । एतावत् कृत्वैव न स विरराम, किं तु पुनर्विधृतानन्दः युक्तं कृतं मयेति मत्वा मोदमान इत्यर्थः । अत एवायं निन्दोचितः निन्दितुं योग्यो न तु स्तोतुं योग्य इत्यर्थः । हन्तेति विषादे । एतदेव लौकिकोदाहरणेन दृष्टान्तयति—**उत्पाद्येति** । जगति लोके यः कश्चित् उन्मत्तोऽपि, न तु सावधान इति अपिशब्दस्वारस्यम् । स्वयं उत्तमान् फलतरून् फलदान् वृक्षान्, उत्पाद्य भूमौ बीजं निक्षिप्य अङ्कुरितान् कृत्वा, अपि च चारूणि वृक्षपोषणपर्याप्तानि च तानि उदकानि जलानि तैः वृक्षपोषणपर्याप्तजलसेचनैरित्यर्थः । ( यद्यप्यमरे "सुन्दरं रुचिरं चारु" इति चारुशब्दस्य सुन्दरवाचकत्वं, तथाप्यत्र जलस्य वृक्षपोषणेनैव सुन्दरत्वमित्यभिप्रेत्यायमुपरितनोऽर्थः कृत इति ज्ञेयम् । ) उल्लास्य संवर्ध्य, स्वयमेव उच्छिनत्ति किम् ? अपि च छित्त्वापि नन्दति आनन्दं करोति किम् ? अपि तु नैव छिनत्ति नैव नन्दति चेत्यर्थः । यदि लोके साधारणोऽपि जनः "विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्" इति नयमनुसृत्य स्वयमुत्पादितस्य स्वत एवोच्छेदकरणमनुचितमिति जानाति, तर्हि यस्त्रिलोकीमुत्पादयति पालयति च, तेन नारायणेनायं नयः किं न ज्ञातुं शक्यः ? अपि तु शक्य एव । तथापि यदायं स्वयमुत्पादितान् लोकान् बुद्धिपूर्वकं विनाशयति, तदायमत्यन्तं निर्घृण एवेति भावः । अत्र प्रकृतवाक्यार्थस्य 'स्वेनादौ–' इत्यादेः तद्घटकस्य 'उत्पाद्य' इत्यादिवाक्यार्थस्य च बिम्बप्रतिबिम्बभावात् वैधर्म्येण दृष्टान्तालंकारः । तदुक्तम्—"दृष्टान्तः पुनरेतेषां ( उपमादीनां ) सर्वेषां प्रतिबिम्बनम्" इति । शार्दूलविक्रीडितं वृत्तम् । लक्षणमुक्तं प्राक् ( २ श्लोकटीकायाम् ) ॥ १५ ॥

किंच **स्वानुज्ञामिति** । यः कश्चित् जनः सेवको वा दर्पभरतः गर्वातिशयाद्धेतोः, पञ्चम्यास्तसिल् । स्वस्य ( लौकिकनृपस्य ) अनुज्ञां संमतिं अनवाप्य अगृहीत्वा, स्वस्य ( लौकिकनृपस्य ) आज्ञां विलङ्घेत उल्लङ्घेत, तदा चण्डः अतिकोपयुक्तः "चण्डस्त्वत्यन्तकोपनः" इत्यमरः । अपि, लोके भवः लौकिकः स चासौ नृपश्चेति

वि०–अहो ! तव मतिरतिस्थूला, यतः परमकारुणिकं भगवन्तं प ङ्कजवासिनीप्राणनाथमपि स्पृशति तवोपालम्भः । आकर्णयेदम् ॥ ४ ॥

चिराय संसृत्युदधौ समज्जनं
नमज्जनं मज्जन इत्यधोक्षजः ॥
दयापयोधिः परिगृह्य दुर्लभं
निजं पदं प्रापयति स्वयं प्रभुः ॥ १७ ॥

---

विग्रहः । लौकिको राजेत्यर्थः । रुषा स्वाज्ञोल्लङ्घनजनितक्रोधेन, तस्यैव आज्ञोल्लङ्घनकर्तुरेव इह दण्डं शिक्षां तनोति करोति । न त्वन्यस्यानपराधिन इत्यर्थः । योऽयं नारायण स्तु अन्तः मनः यमयति प्रेरयति तच्छीलः अन्तर्यामी । ताच्छील्ये णिनिः । हृद तिष्ठन् शुभाशुभकर्मप्रेरक इत्यर्थः । "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्राम यन् सर्वभूतानि यन्त्रारूढानि मायया" इति स्मृतेः । एतादृशः सन् स्वभाव एव भविनः संसारयुक्तान् जनान् अपथे दुर्मार्गे दुष्कर्मणीत्यर्थः । प्रवर्त्य स्वयमेव तान् दुष्कर्मकर्तॄन् जनान्, क्रुधा रोषेण नारके निरये "स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम् ।" इत्यमरः । पातयति । हन्तेति खेदे । स निर्घृणः निर्दयः न किम् ? अपि त्वत्यन्तं निर्घृण एवेत्यर्थः । अयमाशयः—लौकिकनृपं हि अपराधिनमनपराधिनं च दृष्ट्वैव अपराधिनं दण्डयति, स्वनियमप्रसिद्ध्या च लोकान् नीतिपथमनुशिक्षयति च; अयं (नारायणः) तु यद्यन्तर्यामी, तर्हि अनेनापि सर्वे लोकाः सन्मार्ग एव प्रवर्तयितव्याः; तथा सति सर्वेऽपि जनाः सत्कर्माणि कृत्वा सद्गति मेवाप्नुयुः, न कश्चिदपि दुर्गतिं, परं तु तदकुर्वन् यदा दुष्कर्मण्येव प्रवर्त्य दुर्गति गमयति तदाऽत्यन्तं निर्घृण इति । अत्र 'स्वाज्ञामनवाप्य–' इत्यादिवाक्यस्य विवक्षितवचनेन हेतुत्वात् काव्यलिङ्गमलंकारः, उत्तरत्र अपराधकारणाभावेऽपि दण्ड कार्यकथनात् विभावनालंकारः । एवं च उभयत्रापि परस्परवाक्यापेक्षणादङ्गाङ्गि भावाच्च द्वावपि मिलित्वा संकरालंकारः । तदुक्तम्–"अविश्रान्तिजुषामात्मन्यङ्गाङ्गि त्वं तु संकरः" इति । वृत्तं च शार्दूलविक्रीडितम् । लक्षणं (२ श्लो० टी०) पूर्वोक्तमेव ॥ १६ ॥

अथ कृशानुना उद्घाटितं निर्घृणत्वरूपं दोषं परिहरन्नाह **विश्वावसुः—अहो** इति । अहो इत्याश्चर्ये । अथवा अहो इति संबोधनार्थम्, हे कृशानो इत्यर्थः । तव **मतिः** बुद्धिः अतिस्थूला सदसद्विवेकशून्या । कुत इत्यत आह—यतः यस्मात् कारणात् परमकारुणिकमत्यन्तदयालुं "स्याद्दयालुः कारुणिकः" इत्यमरः । भगवन्तं षड्गु णैश्वर्यसंपन्नं, पङ्कजवासिन्या लक्ष्म्याः प्राणनाथं पतिं नारायणमपि, तव संबन्धी त्वत्कृत इत्यर्थः । उपालम्भो निन्दा स्पृशति परामृशति, तमपि निन्दसीति यावत् । तस्मात् इदं नारायणविषये करुणाप्रतिपादकं वचः, आकर्णय सावधानमनसा शृणु ॥ ४ ॥

**चिरायेति** । दयापयोधिर्दयासागरः, अनेन नायं प्राकृतलोक इव केनचित्कारणेन दयाशीलः, किंतु कारणं विनापि स्वभावत एवापरिमितदयाशील इति सूचितम् । अधो-

किंच—

लीलालोलतमां रमामगणयन्नीलामनालोकयन्
मुञ्चन् किंच महीमहीश्वरमयं मञ्चं हठाद्वञ्चयन् ॥
आकर्षन् द्विजराजमप्यतिजवाद्धा हन्त लोकान्तरात्
गोप्तुं शौरिरुदित्वरत्वर उदैत्[1] ग्राहग्रहार्तं गजम् ॥ १८ ॥

---

क्षजोऽयं नारायणः संसृतिरूपे संसाररूपे उदधौ समुद्रे, चिराय बहुकालपर्यन्तं, समज्जनं मज्जनेन परिभ्रमणेन सहितं, परं तु संसारदुःखपरिहारायेति शेषः । नमन् भक्तिपूर्वकं नमस्कुर्वंश्चासौ जनो लोकश्च तं, मज्जनः मदीयोऽयं जन इति एवंप्रकारेण स्वयं परिगृह्य स्वीकृत्य, इतिना कर्मणोऽभिहितत्वात् प्रथमा । प्रभुः कर्तुमकर्तुमन्यथा कर्तुमपि समर्थः, दुर्लभं भक्त्या विना दुष्प्रापं, निजमात्मीयं पदं स्थानं वैकुण्ठलोकमित्यर्थः । प्रापयति नयति । अत्र पद्ये पूर्वार्धे अनुप्रासालंकारः, तच्च वाक्यं निजजनत्वेन स्वीकरणस्य निजपदप्रापणस्य च हेतुरूपं, तेन काव्यलिङ्गमलंकारः । एवं चात्र काव्यलिङ्गानुप्रासयोः संसृष्टिः "सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः" इति तल्लक्षणात् । वंशस्थवृत्तम् । लक्षणमुक्तं प्राक् ( १० श्लोकटीकायाम् ) ॥ १७ ॥

यदुक्तं 'नमज्जनं मज्जन इति परिगृह्य निजं पदं प्रभुः प्रापयति' इति, तदेव कैश्चित् पुराणप्रसिद्धैस्तदवतारचरित्रैर्दर्शयति—तत्र तावत् प्रथमं भगवत्कृतं गजेन्द्रमोक्षं कथयति—**लीलेत्यादिना** । किंच ग्राहस्य नक्रस्य "ग्राहोऽवहारो नक्रस्तु" इत्यमरः । ग्रहात् ग्रहणात् आर्तं पीडितं गजं हस्तिनं "दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः । मतंगजो गजो नागः" इत्यमरः । गोप्तुं रक्षितुं, उदित्वरा आविर्भवन्ती त्वरा संभ्रमो यस्य सः । उदित्वरेत्यत्र उत्पूर्वकात् 'इण् गतौ' इत्यस्मात् धातोः सकाशात् "इण्-नश-जि-सर्तिभ्यः क्वरप्" इति क्वरप्प्रत्ययः "ह्रस्वस्य पिति कृति—" इति तुक् । शूरस्य वसुदेवस्य अपत्यं शौरिः "अत इञ्" इत्यपत्यार्थे इञ् । कृष्ण इत्यर्थः । लीलया शृङ्गारभावेन "हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः" इत्यमरः । अतिशयं लोला कामतृष्णायुता तां, "लोलश्चल-सतृष्णयोः" इत्यमरः । रमां, लक्ष्मीं अगणयन् अपश्यन्, नीलां कालिन्दीं अनालोकयन् तामप्यपश्यन्नित्यर्थः । भगवता हि कृष्णावतारे कालिन्दीनाम्न्यास्तपस्यन्त्याः स्त्रियाः स्वीकारः कृतः इति श्रीभागवते दशमस्कन्धे प्रसिद्धम् । यद्वा नीला नाग्नजिती तस्मिन्नेवावतारे परिणीता ज्ञेया । "नीलां नग्नजितः पुत्रीं" इति मणिमञ्जरीकाव्ये तथा दर्शनात् । किंच महीं पृथिवीदेवीं मुञ्चन् त्यजन्, पृथिव्यपि विष्णुपत्नीति "समुद्रवसने देवि पर्वतस्तनमण्डले । विष्णुपत्नि नमस्तुभ्यम्—" इत्याद्यागमप्रसिद्धम् । तथा अहीश्वरमयं शेषस्वरूपं मञ्चं शयनं च "शयनं मञ्च-पर्यङ्क—" इत्यमरः । हठात् सहसा वञ्चयन् तिरस्कुर्वन्, अपि च द्विजानां पक्षिणां राजा गरुडस्तं, "राजाहः सखिभ्यः—" इति टच् । "दन्त-विप्राण्डजा(पक्षिणः) द्विजाः" इति "गरुत्मान्

---

[1] 'उपैत्'.

वैकुण्ठो महताहताखिलमहारम्भं मदेनोच्चकै–
श्चण्डं खण्डयितुं हिरण्यकशिपुं वेतण्डमुत्कण्ठया ॥
सैंहं वेषमशेषभीषणमहो गृह्णन् त्वरागौरवात्
प्रह्लादव्यसनासहिष्णुरुदगादाकण्ठकण्ठीरवः ॥ १९ ॥

गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः" इति चामरः । आकर्षन् भक्तपीडापरिहारार्थं सत्वरं गन्तुमित्यर्थः । लोकान्तरात् वैकुण्ठात्, अतिजवात् अतिवेगेन, उदैत् आगमत् 'इण् गतौ' इति धातोः कर्तरि लङ् । हा हन्त इति निपातसमुदायात् भक्तपीडापरिहारार्थमत्यन्तदयावत्त्वं भगवतः सूच्यते "हा विषाद-शुगर्तिषु । हन्त हर्षेऽनुकम्पायां" इत्यमरात् । एतेन पद्येन यदि गजस्य पशोरपि भक्तिं दृष्ट्वा तत्राणार्थं भगवान् एवं करोति, तदा मनुष्यार्थं कुर्यादित्यत्र किमु वक्तव्यमिति सूचितम् । गजस्येयं कथा महाभारते शान्तिपर्वणि प्रसिद्धा । यथा–चित्रकूटपर्वते एकं परमरमणीयं सरोवरमासीत् । यस्मिन्नेको महानक्रः प्रतिवसति स्म । तस्मिन्नेव सरसि क्रीडार्थं करिणीभिः सह कश्चिन्महागजः समाययौ । स च जले प्राविशत् । तदा स नक्रेण निजास्येन सुदृढं पादे धृतः । तदा गजस्तं नक्रं केनाप्युपायेन निवारयितुमशक्नुवन्ननन्यभावेन भगवन्तं नारायणमेव शरण्यं मत्वा पुष्कराग्रेण सरःस्थमेकं पङ्कजं तस्मै समर्प्य "ॐ नमो मूलप्रकृतये अजिताय महात्मने ।" इत्यत आरभ्य "नमस्ते पुण्डरीकाक्ष भक्तानामभयंकर । सुब्रह्मण्य नमस्तेऽस्तु त्राहि मां शरणागतम् । तावद्भवति मे दुःखं चिन्ता संसारसागरे । यावत् कमलपत्राक्षं न स्मरामि जनार्दनम् ॥" इत्यन्तं स्तोत्रं जगौ । तदा परमकारुणिको भगवान् सत्वरमुपेत्य ग्राहात् गजममोचयदिति । शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

अथ नृसिंहावतारे कृतं निजभक्तस्य प्रह्लादस्य रक्षणमाह—**वैकुण्ठ इति** । प्रह्लादस्य हिरण्यकशिपुपुत्रस्य स्वभक्तस्य व्यसनासहिष्णुः तत्पित्रा दीयमानं दुःखमसहमानः "अलंकृञ्-निराकृञ्–" इत्यादिना इष्णुच् प्रत्ययः । वैकुण्ठोऽयं नारायणः विकुण्ठयति पराभवं प्रापयति शत्रूनिति विकुण्ठः 'कुठि प्रतिघाते' इति धातोः "अन्येभ्योऽपि दृश्यन्ते" इत्युणादिसूत्रेणाच्प्रत्ययः । विकुण्ठ एव वैकुण्ठः इति विग्रहः । "विष्णुर्नारायणः कृष्णो वैकुण्ठः" इत्यमरः । महता मदेन गर्वेण, हता विनाशिताः अखिलाः सकला महान्तः आरम्भाः तपोयज्ञादिकाः क्रिया येन तं, गजपक्षे तु महता मदेन मदजलेन उपलक्षितं, महान् आरम्भो येषां ते महारम्भाः हताः अखिला महारम्भा उद्यानोपवनादयो येन तं, उच्चकैरतिशयेन चण्डं महाभयंकरं हिरण्यकशिपुं एतद्रूपं वेतण्डं गजं, खण्डयितुं विनाशयितुं, उत्कण्ठया हिरण्यकशिपुरूपगजमारणातिशयवाञ्छया, त्वरायाः शीघ्रतायाः गौरवात् अतिशयेन अतीव शीघ्रमित्यर्थः । अशेषाणां संपूर्णानां ( शत्रूणां ) भीषणं भयंकरं, सैंहं सिंहसंबन्धिनं वेषं आकारं, गृह्णन् धारयन्, आ–

१ 'महसा'.

अन्यच्च—

अवेमव्यापाराकलनमतुरीस्पर्शमचिरा-
दनुन्मीलत्तन्तुप्रकरघटनायासमसकृत् ॥
विषीदत्पाञ्चालीविपदपनयैकप्रणयिनः
पटानां निर्माणं पतगपतिकेतोरवतु नः ॥ २० ॥

---

कण्ठं कण्ठपर्यन्तं "आङ् मर्यादाभिविध्योः" इति समासः । कण्ठीरवः सिंहरूपः सन् अर्थात् नरसिंहशरीरः सन्नित्यर्थः । "कण्ठीरवो मृगरिपुः" इत्यमरः । उदगात् आविर्बभूव । स्तम्भादिति शेषः । अहो इत्याश्चर्ये । 'इण् गतौ' इति धातोर्लुङ् "इणो गा लुङि" इति 'गा' आदेशः । "गाति-स्था-" इत्यादिना सिचो लुक् । एतत् प्रह्लाद-चरित्रं श्रीमद्भागवते सप्तमस्कन्धे प्रसिद्धम् । अत्र पूर्वार्धे 'हिरण्यकशिपुं वेतण्डं' इति हिरण्यकशिपावेव गजत्वस्याभेदेनारोपाद्रूपकमलंकारः, उत्तरत्र च 'अशेषभीषणं' इत्याद्युक्तेः साभिप्रायत्वात् परिकरालंकारः । "तद्रूपकमभेदो य उपमानोपमेययोः" इति "विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः" इति च द्वयोर्लक्षणात् । द्वावपि मिलित्वा संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥

अथेदानीं कृष्णावतारे कृतं भक्तिमत्या द्रौपद्याः कौरवसदसि वस्त्रपूरणात्मकं भगवच्च-रित्रमाह—**अन्यच्चेति । अवेमेति ।** विषीदन्त्याः कुरुसदसि दुःशासनकृतवस्त्रापहरणेन दुःखवत्याः पाञ्चाल्याः द्रौपद्याः विपदः वस्त्रापहारकृतदुःखस्य अपनये दूरीकरणे एकः मुख्यः प्रणयः स्नेहोऽस्यास्तीति तथाभूतस्य । मत्वर्थे इनिः । पतगानां पक्षिणां "पतत्त्रि-पत्त्रि-पतग-" इत्यमरः । पतिर्गरुडः केतुर्ध्वजो यस्य तथाभूतस्य भगवतः संबन्धि, भगव-त्कर्तृकमित्यर्थः । अवेमव्यापाराकलनं न विद्यते वेम्नः वयनदण्डस्य "पुंसि वेमा वायदण्डः" इत्यमरः । व्यापारस्य आकलनं स्वीकरणं यस्मिन् तत् वयनदण्डग्रहणरहितमित्यर्थः । तथा न विद्यते तुर्याः तन्तुवेष्टनसूक्ष्मदारुविशेषस्य स्पर्शो यस्मिंस्तत् तुरीस्वीकाररहि-तमपीति यावत् । तथैव च अनुन्मीलत्तन्तुप्रकरघटनायासं अनुन्मीलन् अप्रकटीभवन् तन्तुप्रकरघटनायाः वस्त्रसंबन्धिसूत्रसमूहरचनायाः "सूत्राणि नरि तन्तवः" इत्यमरः । आयासो यत्नो यस्मिंस्तत् । अचिरात् शीघ्रं, असकृत् वारंवारं च पटानां वस्त्राणां निर्माणं उत्पादनं नोऽस्मान् अवतु रक्षतु । एतच्चरित्रं श्रीमहाभारते सभापर्वणि विस्तरेण वर्णितम् । तच्च सर्वे जानन्त्येव परं च तत्समये द्रौपद्या कृतः कृष्णस्तवः प्रेमभक्तियुत-त्वात्, भगवत्कृतपटनिर्माणप्रकारश्चात्र लिख्यते । यथा—"आकृष्यमाणे वसने द्रौपद्या चिन्तितो हरिः । गोविन्द द्वारकावासिन् कृष्ण गोपीजनप्रिय ॥ कौरवैः परिभूतां मां किं न जानासि केशव । हे नाथ ! हे रमानाथ! व्रजनाथार्तिनाशन ॥ कौरवार्णवमग्नां मामुद्धरस्व जनार्दन । कृष्ण कृष्ण महायोगिन् विश्वात्मन् विश्वभावन ॥ प्रणतां पाहि गोविन्द कुरुमध्येऽवसीदतीम् । इत्यनुस्मृत्य कृष्णं सा हरिं त्रिभुवनेश्वरम् ॥ प्रारुदद्दुः-खिता राजन् मुखमाच्छाद्य भामिनी । याज्ञसेन्या वचः श्रुत्वा कृष्णो गह्वरितोऽभवत् ॥

अपरं च—

काकः शोकं व्यसृजदमितं[1] वृद्धगृध्रोऽप्यनेकान्
लोकान् लेभे कुशलमगमन्निर्विषादं निषादः ॥
राज्यं प्राप्तौ कपि-निशिचरौ राघवत्वे मुरारेः
पारे वाचां जयति करुणा पश्य पद्मासखस्य ॥ २१ ॥

---

त्यक्त्वा शय्यासनं पद्भ्यां कृपालुः कृपयाभ्यगात् । आकृष्यमाणे वसने द्रौपद्यास्तु विशां पते । तद्रूपमपरं वस्त्रं प्रादुरासीदनेकशः ॥ नानाराग-विरागाणि वसनान्यथ वै प्रभो" इति । अत्र 'अवेमव्यापाराकलनम्' इत्यादिना पटनिर्माणकारणाभावेऽपि कार्यकथनाद्विभावनालंकारः । तदुक्तम्—"क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना" इति । वृत्तं शिखरिणी "रसै रुद्रैश्छिन्ना य-म-न-स-भ-ला गः शिखरिणी" इति तल्लक्षणात् ॥ २० ॥

सांप्रतं रामावतारप्रसिद्धानि भगवतः कानिचिच्चरित्राणि वर्णयति—**अपरं चेति । काक इति ।** मुरारेर्मुरनामकदैत्यशत्रोर्नारायणस्य, राघवत्वे रामावतारे, काकः एतद्रूप इन्द्रपुत्रो जयन्त इत्यर्थः । अमितं अतिशयितं शोकं दुःखं व्यसृजत् तत्याज । तद्वृत्तं हि रामायणे इत्थं—चित्रकूटपर्वते कदाचित् सीताया उत्सङ्गे शिर आधाय भगवान् रामः सुष्वाप, तदैवेन्द्रलोकात् काकरूपधरो जयन्त आगत्य निजनख-तुण्डैः सीतायाः पादाङ्गुष्ठं विदारयामास, सा च भर्तृनिद्राभङ्गभिया पादं न चालयामास । अनन्तरं प्रबुद्धो रामस्तादृशीं प्रियां सीतां दृष्ट्वा काकं च असकृदुत्पतन्तं दृष्ट्वा, तस्यैवायमपराध इति ज्ञात्वा, एकं दर्भखण्डं संमन्त्र्य तस्मिन् मुमोच । तदा शरणार्थी स काको ब्रह्मादिदेवान् प्रति जगाम, परं तु रामप्रभावाभिज्ञास्ते तं रक्षितुं नाशक्नुवन् । तदा स राममेव शरणमाययौ, शरण्यो रामश्च अमोघास्त्रत्वात् तस्यैकं नेत्रमपहृत्य तं ररक्ष इति । तथा वृद्धगृध्रोऽपि अनेकान् बहून् लोकान् वैकुण्ठादीन् लेभे प्राप्तवान् 'डुलभष् प्राप्तौ' इत्यस्माल्लिट् । "अत एकहल्—" इत्यादिना एत्वाभ्यासलोपौ । अयं गृध्रोपि दशरथसखः परमभक्तश्च रामस्य, अनेन सीताहरणसमये रावणेन सह बहु युद्धं कृतं, परं च रावणास्त्रव्यथितः स रामदर्शनाकाङ्क्षी विपिने न्यपतत् । ततो रामेणापि सीतां विचिन्वता स्वकरस्पर्शात् कृपया स्वं धाम प्रापितः इति । तथा निषादः कश्चित् गुहनामा श्वपचः "निषाद-श्वपचावन्तेवासि-चाण्डाल-पुक्कसाः" इत्यमरः । निर्विषादं दुःखरहितं कुशलं क्षेमं "कुशलं क्षेममस्त्रियाम्" इत्यमरः । अगमत् प्राप्तः । गमधातोर्लुङ् लृदित्त्वादङ् । अयमपि रामभक्तस्तत्कृपया दुःखान्मुक्त इत्यपि रामायणे प्रसिद्धम् । तथा कपि-निशिचरौ सुग्रीव-विभीषणौ वानर-राक्षसौ राज्यं प्राप्तौ, तस्यैव कृपयेति शेषः । तस्मात् पद्मासखस्य

---

[1] 'व्यजहद०' अस्मिन् पाठे व्यजहदिति रूपं प्रामादिकम्, तस्मादयमपपाठ एवेति भाति । न च तावदभिरूपः कविश्छन्दोभङ्गभियाप्येतादृशं रूपं प्रयुङ्क्ते ।

तदेवं देव[1]परिवृढे दयापयोनिधा[2]वपि उपन्यस्तं नैर्घृण्यं तव तावदनैपुण्यमपुण्यफलं बुद्धेः पिशुनयति ॥ ५ ॥

शृणु तावत्—

जीवानां दृष[3]दादिमत्त्वमयतां स्वर्गापवर्गास्पदं
देहं दत्तवति श्रियः प्रियतमे नैवोपकारस्मृतिः ॥

---

लक्ष्मीप्रियस्य नारायणस्य करुणा दया वाचां पारे वाणीमतिक्रम्येत्यर्थः । जयति सर्वोत्कर्षेण वर्तते । पश्य अवलोकय । अत्र वाक्यार्थः कर्म । 'लीलालोलतमां—' इत्यादिश्लोकचतुष्टयेनैतत्सूचितं भगवतस्तावद्भक्तिं विना न किंचिदपि प्रियं, तस्मात् भक्तिं कुर्वाणा जनाः केऽपि सन्तु न तेषु अल्पत्व-महत्त्व-स्त्रीत्व-पुरुषत्वादिविवक्षा, नापि मनुष्यत्वपशुत्वादिविचारः, किंतु भक्तिप्रभावात् सर्वेऽपि समाना इति भावः । तदुक्तं स्वयं भगवतैव गीतायाम्—"मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥" इति । किंच भक्त्या प्रसन्नो भगवान् भक्तान् प्रति यद्ददाति न तल्लक्ष्मी-ब्रह्मादयोऽपि लब्धुं शक्नुवन्ति । तदुक्तं श्रीमद्भागवते यशोदाकृतश्रीकृष्णबन्धनसमये—"नेमं विरिञ्चो न भवो न श्रीप्यङ्गसंश्रया । प्रसादं लेभिरे गोपी यत्तत् प्राप विमुक्तिदात् ॥ नायं सुखापो भगवान् देहिनां गोपिकासुतः । ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह ॥" इति । तस्मादेतस्मिन्नैर्घृण्यारोपो न युज्यत इति भावः । मन्दाक्रान्ता वृत्तम् । लक्षणमुक्तं प्राक् ( ८ श्लोकटीकायाम् ) ॥ २१ ॥

तदेवाह—**तदेवमि**त्यादिना । तत् वस्तुतो भगवतः अपरिमितदयावत्त्वाद्धेतोः देवपरिवृढे देवानां प्रभौ "प्रभुः परिवृढोऽधिपः" इत्यमरः । दयापयोनिधौ दयासागरेऽपि एवं 'स्वेनादौ निखिलं जगद्विरचितम्-' इत्यादिप्रकारेणोक्तं उपन्यस्तमारोपितं नैर्घृण्यं निर्दयत्वं कर्तृ, तावत् तव बुद्धेः अपुण्यस्य पापस्य फलं, अनैपुण्यं च सूक्ष्मविचारराहित्यं मूढत्वमिति यावत्। पिशुनयति सूचयति । भगवत्स्वरूपयाथार्थ्यविचारोऽपि बुद्धौ प्राक्तनपुण्यकर्म विना न स्फुरति । तदुक्तं भगवद्गीतायाम् योगभ्रष्टगतिनिर्णयप्रसङ्गे—"शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते । अथवा योगिनामेव कुले भवति धीमताम् । एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् । तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ॥" ॥ इति ॥ ५ ॥

नन्वेतावतापि जगत्संहरणरूपस्य नरकपातरूपस्य च दूषणस्य न तावत् परिहारः, भक्तस्य सद्गतिप्रापणं तु न खलुवि शिष्टगुणापादकं, निर्दयेष्वपि स्वीयरक्षणस्य तत्सुखप्रदानस्य च संभवादित्याशङ्कयाह—**शृणु तावत्—जीवाना**मित्यादि । दृषत् पाषाणः "पाषाण-प्रस्तर-ग्रावोपलाश्मानः शिला दृषत्" इत्यमरः । आदिमः प्रथमो येषां ते दृषदा-

---

१ 'तस्मिन्'. २ 'पयोधौ'. ३ 'दृषदामिवत्व'. 'दृषदामिषत्व'.

दुःखे जातुचिदागते स्वकलिताद्दुष्कर्मणः पक्त्रिमा-
न्नाथे हन्त निरागसि व्यसनिभिर्नैर्घृण्यमारोप्यते ॥ २२ ॥

हन्त जन्तवः पामराः स्वापराधं परमकारुणिके परस्मिन् ब्रह्मण्यध्यं-स्यन्ति ॥ ६ ॥

---

दिमाः देहाः तेषां भावः दृषदादिमत्त्वं पाषाण-तरु-पश्वादिदेहत्वमित्यर्थः। अयतां प्राप्नुवत 'अय गतौ' इत्यस्मात् शतृप्रत्ययः। अयं धातुर्यद्यप्यात्मनेपदी, तथापि चक्षिङो ङित्क रणात् ज्ञापकात् अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात् साधुः। यद्वा 'इट किट कटी गतौ' इत्यत्र प्रश्लिष्टस्य इधातोः शतृप्रत्ययः इति समाधेयम्। अत एव 'उद यति विततोर्ध्वरश्मिरज्जौ' इति माघः, 'उदयति हि शशाङ्कः कामिनीगण्डपाण्डुः' इति मृच्छकटिके शूद्रकश्च प्रयुक्तवान्। अर्थात् प्राक्तनस्वकर्मवशादिति ज्ञेयम्। एव हि शरीरप्राप्तिर्भवति—"योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्ये प्रपद्यन्ते यथाकर्म यथाश्रुतम्" इति श्रुतिप्रसिद्धम्। एतादृशां जीवानां स्वर्गश्च अपवर्गो मोक्षश्च "मोक्षोऽपवर्गोऽथाज्ञानम्-" इत्यमरः। तयोः आस्पदं संपादक देहं मनुष्यदेहं नैसर्गिकस्वकीयापरिमितकृपयेति शेषः। दत्तवति श्रियो लक्ष्म्याः प्रि यतमेऽस्मिन्नारायणे विषये, उपकारस्य एतादृशश्रेयःसंपादकदेहप्रदानरूपस्य, स्मृति स्मरणं नैव। भवतु नाम न हि तावत्तादृशसूक्ष्मविवेकिनो जीवास्तेन विस्मरणं भवति परं च न ह्येतावदेव, किंतु तस्मिन्निरुपमकृपालौ दोषारोपं कुर्वन्तीत्याह—**दुःखे इति** जातुचित् कदाचित्, "कदाचिज्जातु सार्धं तु" इत्यमरः। स्वकलितात् स्वकृतात् दुष्कर्मणः पापकर्मणः पक्त्रिमात् फलाभिमुखात् 'डुपचष् पाके' इत्यस्मात् "ड्वित क्त्रिः" इति क्त्रिप्रत्ययः। तस्य च 'क्त्रेर्मम्नित्यम्' इति मप्। दुःखे आगते प्राप्ते सति व्यसनं स्वपापकर्मजनिता विपत् अस्ति येषां ते व्यसनिनः तैः, अर्थात् विपद्युक्तैर्जे नैरित्यर्थः। "व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इत्यमरः। निरागसि एताह शदुःखप्रदानविषये निरपराधे "आगोऽपराधो मन्तुश्च" इत्यमरः। निरपरा एतावदेव नैव, प्रत्युत नाथे सर्वेषामधिपतौ नारायणे, न हि योऽधिपतिः स दुःखप्र दानशील इति भावः। तस्मिन्नपि निर्घृणस्य भावः नैर्घृण्यं निर्दयत्वमिति यावत् आरोप्यते। हन्त एतदतिकष्टमित्यर्थः। अत्र नारायणे दुःखारोपस्य दुःखप्राप्ति कारणस्य च अत्यन्तविलक्षणत्ववर्णनात् विषमालंकारः "क्वचिद्यदतिवैधर्म्यान्न श्लेष घटनामियात्" इत्यादितल्लक्षणात्। शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

'व्यसनिभिर्नैर्घृण्यमारोप्यते' इति यदुक्तं तदेव स्पष्टयति—**हन्तेति**। पामरा वास्तविकदुःखकारणानभिज्ञत्वात् नीचाः, जन्तवः प्राणिनः स्वेषां अपराधं दुःखापादन रूपं, करुणा एव शीलमस्य कारुणिकः "शीलम्" इति ठक्। परमश्चासौ कारुणिक तस्मिन् परस्मिन् इन्द्रियादिसंघात् परे, ब्रह्मणि ब्रह्मरूपे नारायणे अध्यस्यन्ति आरोपयन्ति। हन्तेति खेदे ॥ ६ ॥

---

१ 'अध्यास्यन्ति'.

तथाहि—

क्लेशत्यागकृतेऽर्पितेन करणव्यूहेन देहेन च
स्वानर्थं बत जन्तुरार्जयति चेन्मन्तुर्नियन्तुः कुतः ॥
शस्त्रे शत्रुजयाय नैजगुरुणा दत्तेऽथ तेनैव चेत्
पुत्रो हन्ति निजं वपुः कथय रे तत्रापराधी तु कः ? ॥२३॥

किं बहुना ॥ ७ ॥

---

यदुक्तं कृशानुना 'स्वेनादौ निखिलं जगद्विरचितं' इत्यादिना स्वोत्पादितजीवानां स्वेनैव नाशकरणरूपं दूषणं तत्परिहारं सदृष्टान्तमाह—**तथाहि-क्लेशेति ।** जन्तुः जीवः कर्ता "प्राणी तु चेतनो जन्मी जन्तु-जन्यु-शरीरिणः" इत्यमरः । जातावेकवचनम् । सर्वे प्राणिन इत्यर्थः । क्लेशानां आध्यात्मिकाधिदैविकादिसांसारिकतापानां त्यागकृते नाशार्थं न तु कामाद्यासक्ततया संपादनार्थं, कामाद्यासक्तानां क्लेशहानिस्तु नैव, अपि तु तदधिकप्राप्तिर्भवति । तदुक्तम्—"न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मैव भूय एवाभिवर्धते ॥" इति । कृते इत्यव्ययं तादर्थ्ये "अर्थे कृतेऽव्ययं तावत् तादर्थ्ये वर्तते द्वयम् ।" इति कोशसारः । अर्पितेन समर्पितेन, एतदुभयान्वयि । करणानां चक्षुरादीन्द्रियाणां व्यूहेन समूहेन देहेन शरीरेण च करणेन, स्वस्य आत्मनः अनर्थं विषयासक्ततया दुःखं आर्जयति संपादयति चेत्, नियन्तुः ईश्वरस्य मन्तुः अपराधः, कुतो भवति ? अपि तु नैव भवतीत्यर्थः । क्लेशत्यागार्थं करणानामुपयोगप्रकारः प्रोक्तः श्रीमद्भागवते—"वाणी गुणानुकथने श्रवणौ कथायां हस्तौ च कर्मसु मनस्तव पादयोर्नः । स्मृत्यां शिरस्तव निवासजगत्प्रणामे दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥" इति । "सा वाग्यया तस्य गुणान् गृणीते हस्तौ च तत्कर्मकरौ प्रशस्तौ ।" इत्यादि च । स्वोक्तेऽर्थे दृष्टान्तमाह—**शस्त्रे** इत्यादिना । नैजगुरुणा स्वपित्रा शत्रूणां रिपूणां जयाय पराजयाय "रिपौ वैरि-सपत्नारि-द्विषद्द्वेषणदुर्हृदः । द्विड्विपक्षाहितामित्र-दस्यु-शात्रव-शत्रवः ॥" इत्यमरः । शस्त्रे खड्गाद्यस्त्रे दत्ते समर्पिते सति, अर्थात् शस्त्रविद्यामध्याप्येति यावत् । अथ अनन्तरं "मङ्गलानन्तरारम्भ-प्रश्न-कार्त्स्न्येष्वथो अथ" इत्यमरः । पुत्रः तेनैव पितृदत्तेनैव शस्त्रेण, निजं स्वीयमेव वपुः शिरआदिशरीरं, हन्ति छिनत्ति चेत् यदि "पक्षान्तरे चेद् यदि च" इत्यमरः । तु तर्हि तत्र पितृ-पुत्रयोर्मध्ये, रे हे कृशानो, अपराधी कः ? कथय । अनेन शस्त्रदृष्टान्तेनैतत्सूचितं—यथा तावत् शस्त्रसमर्पणेन पुत्रनाशे सति तत्र पिता नापराधी, तथा ईश्वरोऽपि क्लेशनाशक्षमं शरीरं समर्प्य, तेनैव जन्तुभिः क्लेशोत्पादने कृते अन्तर्यामी सन्नपि तत्र न दूषणार्हः, कुतः एतादृशक्लेशनाशकशरीरसमर्पयितुः क्लेशकरत्वाभावात् । किंतु जीवा एव तादृशाः, ईश्वरस्तु दयालुरेवेति ज्ञेयम् । दृष्टान्तालंकारः । वृत्तं शा० वि० ॥ २३ ॥

**किं बहुना** अधिकेनोक्तेन किमित्यर्थः ॥ ७ ॥

शास्त्रं भूरि निजस्वरूपमतये स्वाराधनार्थं वपुः
स्वध्यानाय मनश्च बुद्धिमनघां[1] लब्धुं च तीर्थादिकम् ॥
तत्त्वान्यप्युपदेष्टुमुत्तमगुरून् दत्त्वाऽनुगृह्णाति नः
संसारे तदपि भ्रमेम यदि किं कुर्वीत ? सर्वेश्वरः ॥ २४ ॥

---

## अथ भूलोकवर्णनम् ३

---

इति परिक्रामन् किंचिदुत्तरम्[2]उपसृत्याधस्तादवलोक्य च-
सखे सकलपुरुषार्थसाधनानुष्ठानस्थानभूतं[3] तावदवलोकय[4] भूलोकम् ॥८॥

---

किंतु सारांशतया यत् कथयामि तच्छृण्वित्याह—**शास्त्रमिति** । यः ईश्वरः निजस्य आत्मनः स्वरूपस्य सर्वत्र व्यापकस्य, मतये ज्ञानार्थं, भूरि बहु "पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च" इत्यमरः । शास्त्रमुपनिषच्छारीरकसूत्रादि च, स्वस्य आराधनार्थं पूजार्थं वपुः करचरणादीन्द्रियसहितं शरीरं, स्वध्यानाय स्वस्मिन् स्वरूपप्रत्ययतया चित्तस्यैकतानतायै "तत्र प्रत्ययैकतानता ध्यानं" इति योगसूत्रात् । तथा अनघां निर्मलां बुद्धिं च लब्धुं, तीर्थादिकं प्रयाग-पुष्करादिरूपं च, तत्त्वानि च उपनिषदादिषु कथितानि 'तत्त्वमसि' इत्यादिमहावाक्यानि उपदेष्टुमपि उत्तमगुरून् दत्त्वा, नोऽस्मान् अनुगृह्णाति । तदपि एवमनुग्रहे कृतेऽपि शास्त्रावलोकन-पूजन-ध्यानाद्यन्यतमस्य कस्यापि साधनस्यानाचरणेन, प्रत्युत कामाद्यासङ्गेन चेति शेषः । संसारे यदि भ्रमेम "पुनरपि जननं पुनरपि मरणं" इत्याद्युक्तरीत्या परिभ्रमामः, 'भ्रमु चलने' इत्यस्माद्विधिलिङ्युत्तमपुरुषः । तदा सः सर्वेश्वरः किं कुर्वीत ? एवं च जगत्संहार-नरकपातादिरूपोऽयं न भगवतोऽपराधः, किं तु तादृशकर्मकर्तृणां जीवानामेव, तस्माच्च परमकारुणिके भगवति नारायणे दोषारोपो न युक्त इति भावः । शा० वि० वृत्तम् ॥ २४ ॥

एवं सविस्तरं सूर्यवर्णनमुपसंहृत्य भूलोकवर्णनप्रस्तावमाह—**इतीति** । इति वदन् विश्वावसुरिति शेषः । परिक्रामन् विमानेन परिभ्रमन् 'क्रमु पादविक्षेपे' इत्यस्मात् शतृप्रत्ययः । "क्रमः परस्मैपदेषु" इत्युपधादीर्घः । किंचिदुत्तरमुपसृत्य पुरतो गत्वा, अधस्तादधोभागे अवलोक्य दृष्ट्वा च, आहेति शेषः ॥

**सखे इति** । हे सखे कृशानो, सकलाश्चत्वारश्च ते पुरुषार्था धर्मार्थादयस्तत्साधनानां कर्मणामनुष्ठानस्य स्थानभूतं भूलोकमवलोकय पश्य ॥ ८ ॥

---

१ 'शुद्धिम्'. २ 'किंचिदन्तरं'. ३ 'हेतुभूतं'. ४ 'त्वमवलोकय'.

सबहुमानम्—

स्वर्गौकोभिरदोनिवासिपुरुषारब्धातिशुद्धाध्वर-
स्वाहाकार-वषट्क्रियोत्थममृतं स्वादीय आदीयते ॥
आम्नायप्रवणैरलंकृतिजुषेऽमुष्यै मनुष्यैः शुभै-
र्दिव्यक्षेत्रसरित्पवित्रवपुषे [1]देव्यै **पृथिव्यै** नमः ॥ २५ ॥

**कृशानुः**—ननु सखे नाकगतोऽपि भवान् न मध्यम[2]लोकं नमस्कर्तुमर्हति ॥ ९ ॥

तथाहि—

जनन-मरण-क्वाधि-व्याधिप्रभेदशुभेतरा-
कलनमलिना लोकाः शोकातुराश्च भुवं गताः ॥

---

सकलपुरुषार्थसाधनत्वमेव सबहुमानं प्राह—**स्वर्गौकोभिरिति** । स्वर्गः सुरलोकः ओको निवासस्थानं येषां तैर्देवैरित्यर्थः । अदः अस्मिन् भूलोके निवसन्ति ते अदोनिवासिनस्तैः पुरुषैरारब्धाश्च ते अतिशुद्धा मन्त्र-तन्त्रविपर्यासादिदोषरहिता अध्वरा यज्ञास्तेषु स्वाहाकारश्च वषट्क्रिया च ताभ्यां, स्वाहाकार-वषट्क्रिये हि स्वाहा वषट् इत्यव्यये ते च देवतार्थं हविस्त्यागकाले मन्त्रान्ते प्रयुज्येते । तेन तादृशमन्त्रोच्चारणेन त्यक्तहविर्भ्यामित्यर्थः । "स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा" इत्यमरः । उत्थमुत्पन्नं, स्वादीयः अतिमधुरं, स्वादुशब्दात् अतिशायने ईयसुन्प्रत्ययः । अमृतं हवीरूपं आदीयते स्वीक्रियते । अपि च आम्नायेषु वेदेषु "श्रुतिः स्त्री वेद आम्नायः" इत्यमरः । प्रवणैः निपुणैः अर्थात् तदध्ययन-तद्विहितकर्मानुष्ठानासक्तैरिति यावत् । अत एव शुभैः कल्याणयुक्तैः मनुष्यैः, अलंकृतिजुषे अलंकारयुक्तायै 'जुषी प्रीति-सेवनयोः' इत्यस्मात् क्विप् । दिव्यानि च तानि क्षेत्राणि वाराणसी-बदरिकाश्रमादीनि तैः सरिद्भिः गङ्गा-यमुनादिभिश्च पवित्रं शुद्धं वपुः शरीरं यस्यास्तस्यै, अमुष्यै दृश्यमानायै देव्यै देवतारूपायै पृथिव्यै नमः अस्तु इति शेषः । शा० वि० वृत्तम् ॥ २५ ॥

अथ भुव्यपि दोषारोपं कुर्वन् प्राह **कृशानुः—नन्विति** । नन्विति विरोधे । "ननु च स्याद्विरोधोक्तौ" इत्यमरः । सखे हे विश्वावसो, भवान् नाकगतोऽपि अत्रापिर्हेत्वर्थकः । यतः स्वर्गस्थस्तत इत्यर्थः । मध्यमश्चासौ लोकश्च तं भूलोकमिति यावत् । नमस्कर्तुं नार्हति, त्वं नार्हसीत्यर्थः । भवच्छब्दयोगात् "शेषे प्रथमः" इति प्रथमपुरुषः ॥ ९ ॥

तथाहि नमस्कारानर्हत्वमेवोपपादयति—**जननेति** । भुवं गता लोका जनाः, जननं जन्म च "जनुर्जनन-जन्मानि" इत्यमरः । मरणं च क्वाधिः कुत्सितः आधिः मानसी व्यथा च चिन्तेति यावत् । "पुंस्याधिर्मानसी व्यथा । स्याच्चिन्ता-" इत्यमरः । व्याधिप्रभेदा ज्वरादयो नानारोगाश्च शुभेतराणामशुभानां कर्मणामाकलनं आचरणं च

---

१ 'तस्यै'. २ 'मध्यलोकं'.

तदिह मदिभिः क्षुद्रैश्छिद्रैकमार्गणतत्परैः
प्रभुभिरुदितक्षत्यै क्षित्यै बुधः स्पृहयेत कः ? ॥ २६ ॥

बालत्वे वा तरुणिमनि वा प्रायशो वार्द्धके वा
मृत्वा मर्त्या बत यमभटैर्बद्ध्यमाना[१] व्यथन्ते ॥
श्रेयस्तेषाममितविपदां जीवतां वा किमास्ते ?
कस्मिन् ग्रामे पुनरनडुहां कर्षणक्लेशहानिः ? ॥ २७ ॥

---

तैर्मलिनाः, अत एव शोकेन दुःखेन आतुराः पीडिताः, सन्तीति शेषः । न त्वेतावदेव, किंतु राजानोऽपि भूःस्था अविनयमनुसरन्तीत्याह–**तदिहेत्या**दिना । तत् तस्मात् कारणात् छिद्राणां परकीयदोषाणामेकं मुख्यं यथा स्यात्तथा मार्गणे अन्वेषणे तत्परा आसक्तास्तैः "तत्परे प्रसितासक्तौ" इत्यमरः । अत एव क्षुद्रैः नीचैः मदिभिर्वृथाहंकारयुक्तैः । मदशब्दान्मत्वर्थ इनिः । प्रभुभी राजभिः उदिता प्रारब्धा क्षतिर्नाशो यस्याः, अर्थात् अधिककरग्रहणादिद्वारेति ज्ञेयम् । तस्यै क्षित्यै पृथिव्या इत्यर्थः । कः बुधः ज्ञाता, न तु मूर्खः, इह स्वर्गस्थः सन् स्पृहयेत ? न कोपीत्यर्थः । "स्पृहेरीप्सितः" इति चतुर्थी । हरिणी वृत्तम् । "रस-युग-हयैन्छिन्ना न्सौ म्रौ स-लौ हरिणी गुरुः" इति तल्लक्षणात् ॥ २६ ॥

अन्यदपि भूलोकदूषणमाह—**बालत्वे इति** । प्रायशो बहुधा मर्त्या मनुष्याः बालत्वे बाल्यावस्थायां वाथवा तरुणस्य भावस्तरुणिमा तस्मिन् तारुण्ये इत्यर्थः । "पृथ्वादिभ्य इमनिज्वा" इति भावार्थे इमनिच्प्रत्ययः । वृद्धस्य भावो वार्द्धकं तस्मिन् वृद्धे वयसीत्यर्थः । "द्वन्द्वमनोज्ञादिभ्यश्च" इति वुञ्प्रत्ययः । मनोज्ञादेराकृतिगणत्वात् । मृत्वा, यमभटैर्यमदूतैः कर्तृभिः, बध्यमानाः निजपाशैर्दृढं बद्ध्वा नीयमाना इत्यर्थः । तादृशाः सन्तः व्यथन्ते दुःखिनो भवन्ति । ननु मरणोत्तरं दुःखिनो भवन्ति चेत् भवन्तु नाम, परंतु जीवितकालपर्यन्तं सुखिन एव ते इत्याशङ्क्याह–**श्रेयस्तेषामि**त्यादि । तेषां पूर्वोक्तरीत्या दुःखभागिनां जनानां, अमिताः असंख्येया विपदो व्याध्यादिरूपा येषां तेषां, जीवतां सतां वाऽपि, श्रेयः सुखं किमास्ते ? अपि तु नैवेत्यर्थः । अपि च पुनः अनडुहां बलीवर्दानां कर्षणेन क्षेत्रादिभूम्यां हलाद्याकर्षणेन शकटाद्याकर्षणेन च यः क्लेशो दुःखं तस्य हानिर्विनाशः, कर्षणादिक्लेशं विना लोकपूज्यानामपि बलीवर्दानां तृणादिना पोषणमिति भावः । कस्मिन् ग्रामे वर्तते ? अपि तु कस्मिंश्चिदपि नैवेति भावः । तस्मात्स्वर्गस्थसुकृतिजनैर्नायं पापिजनाधिष्ठितो भूलोकः प्रशंसनीय इति । मन्दाक्रान्ता वृत्तम् । लक्षणमुक्तं प्राक् ( ८ श्लोकटीकायाम् ) ॥२७॥

---

१ 'मथ्यमाना'.

**विश्वावसुः**—सत्यमेवं[1] तथापि सखे मह्याश्रयं मानुषजन्म मा दूदुषः[2] ॥ १० ॥

तथाहि[3]—

रामः क्षेमस्य दाता भुवि ननु मनुजो रावणस्य प्रहर्ता
तत्तातः किं न मर्त्यस्त्रिदशकुलपतेर्दैत्ययुद्धे सहायः ॥
कृष्णो वृष्णो मदं योऽहरत नरतया न श्रुतः किं? त्वयासौ
के वा[4] देवाः प्रभावात् स्वयमतिशयिताः? मानवाद्दानवा वा ॥२८॥

---

एवं **कृशानु**नोक्तं दूषणमुद्धारयन्नाह **विश्वावसुः—सत्यमिति** । सत्यमित्यर्धाङ्गीकारे । यत्किंचिद्दूषणसत्त्वेऽपि सर्वथा दूषणानर्हत्वं तस्यार्थः । तदेव द्योतयति-हे सखे **कृशानो**, तथापि यत्किंचिदंशेन दूषणसत्त्वेऽपि, मह्याश्रयं पृथिव्याश्रयं मानुषाणां मनुष्याणां जन्म उत्पत्तिं, मा दूदुषः मा दूषय । 'दुष वैकृत्ये' इत्यस्माण्णिजन्ताल्लुङि रूपम् । "णि-श्रि—" इति चङ् "चङि" इति द्वित्वम् । "णेरनिटि" इति णिलोपः । "णौ चङि—" इत्युपधाह्रस्वः "दीर्घो लघोः" इत्यभ्यासस्य दीर्घः "न माङ्योगे "इत्यडागमाभावः ॥ १० ॥

'मानुषजन्म मा दूदुषः' इत्युक्तं तदेव सहेतुकमुपपादयति—**राम इत्यादिना** । भुवि क्षेमस्य कुशलस्य "कुशलं क्षेममस्त्रियाम्" इत्यमरः । दाता, रावणस्य प्रहर्ता नाशको रामो दशरथपुत्रः, मनुजो ननु मनुष्य एव । बभूवेति शेषः । 'रावणस्य प्रहर्ता' इति हेतुगर्भं विशेषणम् । लोककण्टकीभूतरावणविनाशात् लोकानां सुखोत्पादक इत्यर्थः । तथा त्रिदशकुलपतेर्देवसमूहाधिपतेरिन्द्रस्य दैत्ययुद्धे वृषपर्वाख्यदैत्ययुद्धप्रसङ्गे इत्यर्थः । सहायः, तस्य रामस्य तातः पिता दशरथः, मर्त्यः मनुष्यः न किम्? अपि तु मनुष्य एवेत्यर्थः । तथैव यः नरतया मनुष्यत्वेन "तस्य भावः" इति भावार्थे तल्प्रत्ययः । कृष्णः वसुदेवपुत्रत्वेन प्रसिद्धः, वृष्णः इन्द्रस्य "इन्द्रो मरुत्वान्—" इत्यारभ्य "वासवो वृत्रहा वृषा" इत्यन्तोऽमरः । मदं गर्वं लोकपालत्वाभिमानमित्यर्थः । "दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः" इत्यमरः । अहरत हृतवान्, गोवर्द्धनोद्धरणेनेति भावः । असौ कृष्णः त्वया न श्रुतः किम्? 'वृष्णो मदमहरत' इत्युपलक्षणम् । तेन कंसवध—ब्रह्ममायानिरासादिकान्यन्यान्यपि बहूनि कार्याणि ज्ञेयानि । एवं सति के वा देवाः दानवा दैत्याः वा मानवात् ल्यब्लोपे पञ्चमी । मनुष्यसहायमनपेक्ष्येत्यर्थः । स्वयं प्रभावात् स्वपराक्रमादेव अतिशयिताः संजातोत्कर्षाः? "तदस्य संजातं—" इति तारकादित्वादितच् । न केऽपीत्यर्थः । एवं च यत्र एतादृशा देवेभ्योऽपि वीर्यवन्तो मनुष्या बभूवुस्तादृशभूलोकनिन्दनमयुक्तमिति भावः । स्रग्धरा वृत्तम् । लक्षणमुक्तं प्राक् (१ श्लोकटीकायाम्) ॥ २८ ॥

---

१ 'सत्यमेव तथापि मा स्म'. २ 'द्विषः'. ३ एतत्क्वचित्पुस्तके नोपलभ्यते. ४ 'ते'.

किंच—

मांधाता च भगीरथश्च सगरो मान्यः ककुत्स्थो रघुः
पूरुः सोऽपि पुरूरवाः स च शिबिः पुण्यश्च रुक्माङ्गदः ॥
वैदेहो नहुषश्च हैहयपतिर्वीरो ययातिर्नलः
पार्थश्चेति नृपाः प्रशस्तयशसः प्रादुर्बभूवुर्न किम्? ॥ २९ ॥

---

ननु राम-कृष्णयोरीश्वरावतारत्वाद्दशरथस्य च रामपितृत्वाद्युक्तमेव तथाविधत्वं, किंतु तावता सर्वेऽपि तादृशा एवेति न शक्यं वक्तुमित्याशङ्क्य समाधत्ते—**मांधातेति**। मांधात्रादयो युगान्तरभवा नृपाः ज्ञातव्याः । एतेषां पुण्यचरितानि श्रीमद्भागवते भारते च विस्तरतो वर्णितानि विद्यन्ते । तत्र भागवते नवमस्कन्धे यथा—मांधाता हि सूर्यवंशीयो युवनाश्वनाम्नो राज्ञः पुत्रः । अयं च स्वपितुः कुक्षिं भित्त्वैवोत्पन्नः तदा च स्तन्यार्थी रुरोद । तद्रोदनं श्रुत्वा च युवनाश्वश्चिन्तयामास—"कं धास्यति कुमारोऽयं स्तन्यं रोरूयते भृशम्" इति । तदा कृपया इन्द्रेणैवमुक्त्वा रक्षितः—मां धाता वत्स मा रोदीरितीन्द्रो देशिनीमदात्" इति । अस्यैव त्रसद्दस्युरितीन्द्रेणान्यदपि नामाकारि । तथानेन स्वप्रौढे वयसि स्वपराक्रमात् सर्वाञ्शत्रून्निर्जित्य सार्वभौमत्वं संपादितम् । यज्ञादिपुण्यकर्मभिश्च भगवन्तमतोषयत् । सगरश्चाश्वमेधशतकर्ता आसीत् । शततमेऽश्वमेधे च इन्द्रेणाश्वापहारः कृतः । अनन्तरमस्यैव वंशभवेन भगीरथनाम्ना राज्ञा कपिलमहामुनिकोपदग्धस्वपूर्वजोद्धारकाम्यया तपःप्रभावेण सुरनदी (भागीरथी) भूलोकमानीता । तथा ककुत्स्थः अयमपि सूर्यवंशीयो विकुक्षिनृपतेस्तनयः अतीव वीर्यवान् स्वपराक्रमादेवान्यान्यन्वर्थनामानि संपादितवान् । तत्प्रकारस्तु यथा—"कृतान्त आसीत्समरो देवानां सह दानवैः । पार्ष्णिग्राहो वृतो वीरो देवैर्दैत्यपराजितैः ॥ वचनाद्देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः । वाहनत्वे वृतस्तस्य बभूवेन्द्रो महावृषः ॥ स संनद्धो धनुर्दिव्यमादाय विशिखाञ्शितान् । स्तूयमानः समारुह्य युयुत्सुः ककुदि स्थितः । तेजसाप्यायितो विष्णोः पुरुषस्य महात्मनः । प्रतीच्यां दिशि दैत्यानां न्यरुणत्रिदशैः पुरम् ॥ तैस्तस्य चाभूत्प्रधनं तुमुलं लोमहर्षणम् । यमाय भल्लैरनयद्दैत्यान् येऽभिययुर्मृधे ॥ तस्येषुपाताभिमुखं युगान्ताग्निमिवोल्बणम् । विसृस्य दुद्रुवुर्दैत्या हन्यमानाः स्वमालयम् ॥ जित्वा पुरं धनं सर्वं सश्रीकं वज्रपाणये । प्रत्ययच्छत् स राजर्षिरिति नामभिराहृतः ॥" इति । एवं च पुरंजयः, इन्द्रवाहनः, ककुत्स्थः, इति नामानि अत एवात्रास्य मान्य इति विशेषणं दत्तम् । तथैव रघुर्दिलीपसूनुः । अनेन विश्वजिन्नाम्नि यज्ञे सर्वस्वं ब्राह्मणेभ्यः समर्पितम् । एतन्महाकविश्रीकालिदासकृतरघुवंशे प्रसिद्धम् । ययातिः सोमवंशीयो नृपो यः शुक्रकन्यां देवयानीं वृषपर्वसुतां शर्मिष्ठां च परिणीतवान् । तयोर्द्वयोरपि भार्ययोः सुतानुत्पाद्य वार्द्धक्ये च पूरुनाम्ने सुताय राज्यं समर्प्य तपसे वनं ययौ । पूरुस्तु तत्सुतः, यः शुक्राचार्यदत्तशापसमये स्वपितुर्ययाते-

**कृशानुः—साद्धाङ्गीकारम्—**

कामं जनाः केऽपि गुणाभिरामाः क्षमातले सन्तु[1] युगान्तरेषु ॥
कलौ युगेऽस्मिन् गुणलेशवन्ध्याः सर्वेऽपि खर्वेतरदोषभाजः॥३०॥

किंच[2]—

मन्देतरस्मरमलीमसमानसानां
मन्यु-स्पृहा-दुरभिमान-मदास्पदानाम् ॥
काले कलौ कलुषतः[3] कलितोदयानाम्
दोषाय दृष्टिरपि हन्त दुरीश्वराणाम् ॥ ३१ ॥

---

र्जरां गृहीत्वा तस्मै स्वतारुण्यं ददौ । पुरूरवा अयमपि सोमवंशीयो बुधसुतः ऐलनामा राजा । यत्सौन्दर्यमोहिता उर्वशी स्वर्लोकात् भूलोकमाययौ । अस्यैव पुत्रो नहुषः । य इन्द्रस्य ब्रह्महत्यादोषावसानपर्यन्तं सुरलोकमशिषत् । शिबिः यः स्वमांसं श्येनाय समर्प्य कपोतं शरणागतं ररक्ष । रुक्माङ्गदो नाम भगवतः श्रीविष्णोः परमभक्तः, यः एकादशीव्रतं सर्वराष्ट्रे प्रवर्तयामास । एतद्द्योतनार्थमेव पुण्य इति तस्मै विशेषणं दत्तम् । वैदेहो जनकः, यो राज्यकर्ता सन्नपि देहाद्यासक्तिरहित आसीत् शुकाचार्यस्य तत्त्वोपदेष्टा च । हैहयदेशानामधिपतिः सहस्रार्जुनः । यस्य श्रीदत्तप्रसादात् बाहुसहस्रं शत्रुभ्योऽपरिभूतत्वं च संप्राप्तम् । अत एव वीरः इति तद्विशेषणं संगच्छते । एते प्रशस्तं स्तुत्यं यशः कीर्तिर्येषां तथाविधा नृपाः राजानः, न प्रादुर्बभूवुः किम्? अपि तु एवंविधाः शतशो मानवा बभूवुरित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ २९ ॥

एवं तद्वचनं श्रुत्वा पुनरपि एतेषां कृतादिपूर्वयुगभवत्वात्सांप्रतं कलियुगे तच्चरित्रमनुपयुक्तमित्यभिप्रेत्याह **कृशानुः—काममिति** । गुणैः सौशील्यादिभिः अभिरामाः मनोहराः केपि अनिर्वाच्याः, पूर्वोक्ता मांधातृप्रभृतयो जनाः लोकाः, युगान्तरेषु एतत्कलियुगादन्येषु कृतादियुगेषु, मयूरव्यंसकादिसमासः । अन्यानि युगानि युगान्तराणीति विग्रहः । क्षमातले पृथ्वीतले, कामं यथेष्टं । "कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्" इत्यमरः । सन्तु भवन्तु । किंतु अस्मिन् कलौ कलिसंज्ञके युगे, गुणस्य लेशेन लवेन "लव-लेश-कणाणवः" इत्यमरः । वन्ध्या हीनाः, गुणस्य यत्किंचिदंशेनापि रहिता इत्यर्थः । एवंविधाः सन्तः सर्वेऽपि सकला एव न तु केचिदेव । खर्वात् अल्पात् इतरे खर्वेतरे तान् महत इति यावत्, दोषान् भजन्ति सेवन्ते इति तथाभूताः । विद्यन्ते इति शेषः । वृत्तमुपजातिः । लक्षणमुक्तं प्राक् (५ श्लोकटीकायाम्) ॥ ३० ॥

दोषभाक्त्वमेव प्रपञ्चयति—**मन्देतरेति** । मन्देतरो बहुलश्चासौ स्मरश्च कामः

---

१ 'सन्ति'. २ एतत्क्वचित् पुस्तके नैवोपलभ्यते. ३ 'कलुषताक०'.

**विश्वावसुः**—तथापि सर्वथा¹ कलिकालिका अपि मानुषा न दूषणीयाः। यतः सर्वकालमपि² केचन सन्त्येव साधवः॥ ११॥

पश्य—

दुरितभरितक्षीबक्ष्मापप्रसादनिरादराः
कमलनयनस्वैरक्रीडागृहायितहृद्गुहाः॥
निगमपदवीनिर्वाहाय क्षितावुदिताः स्वयं
कति न कृतिनः संदृश्यन्ते? कलावपि निर्मलाः॥ ३२॥

---

"कामः पञ्चशरः स्मरः" इत्यमरः। तेन मलीमसं मलिनं "मलीमसं तु मलिनं" इत्यमरः। "ज्योत्स्ना-तमिस्रा-" इत्यादिनिपातनात् साधु। मानसं मनो येषां तेषां, तथा मन्युः क्रोधश्च "मन्युर्दैन्ये क्रतौ क्रुधि" इति हैमः। स्पृहा विषयेच्छा च "इच्छा काङ्क्षा स्पृहेहा तृट्-" इत्यमरः। दुरभिमानः 'अहं श्रेष्ठः, अहं धनी, अहमेव प्रभुः' इत्यादिरूपो वृथाहंकारश्च मदो युक्तायुक्तविवेकराहित्यं च तेषां आस्पदानां स्थानभूतानां, अत एव कलौ कले एतस्मिन् पापिनि कलियुगे, कलुषतः प्राक्तनपापकर्मवशादेव, कलितः संप्राप्तः उदयः उत्पत्तिर्येषां तथाभूतानां, दुरीश्वराणां दुष्टनृपाणाम्, दृष्टिर्दर्शनमपि, दोषाय पापार्थमेव भवति। तादर्थ्ये चतुर्थ्येषा। किमुत स्पर्शन-भाषणादिकम्। एवं च एतादृशजनाधिष्ठिता भूमिर्न खलु प्रशंसनीयेति भावः। वसन्ततिलका वृत्तम्। "उक्ता वसन्ततिलका त-भ-जा ज-गौ गः" इति तल्लक्षणात्॥ ३१॥

एतदपि दूषणमपाकुर्वन्नाह **विश्वावसुः—तथापीति**। तथापि त्वदुक्तदोषयुक्तेषु केषुचिल्लोकेषु सत्स्वपि, सर्वथा सर्वे इत्यर्थः। कलिकालिकाः कलिकालभवा अपि "तत्र भवः" इत्यधिकारे कालाट्ठञ्। मानुषा मनुष्याः न दूषणीयाः दूषितुं योग्या न भवन्तीत्यर्थः। यतो यस्मात् कारणात्, सर्वकालेऽपि केचन कतिपयाः साधवः सज्जनाः सन्त्येव भवन्त्येव॥ ११॥

एतदेवोपपादयति—**पश्येति—दुरितेति**। दुरितेन पापेन भरितानां पूर्णानां अत एव मद्यादिपानेन क्षीबानां मत्तानां च क्ष्मापाणां भूमिपानां राज्ञां प्रसादे प्रसन्नतायां निरादरा आदररहिताः। यतः कमलनयनः कमलपत्राक्षः विष्णुः, यद्वा कमलं कुरङ्गं नयति हस्तं प्रापयतीति कमलनयनः शिवश्च "स्यात् कुरङ्गोऽपि कमलं" इत्यमरः। एवं च विष्णोः शिवस्य वा स्वैरक्रीडा स्वेच्छाविहारः तदर्थं गृहायिता गृहवदाचरन्त्यः हृद्गुहा हृदयस्थदहराकाशा येषां ते, सम्यग्ध्यानादिसाधनैरन्तःस्थपरमात्मज्ञानसंपन्ना इत्यर्थः। तेनैव राज्ञः प्रसादेऽपि निःस्पृहाः। अत एव निगमानां वेदानां पदवी मार्गः तस्य निर्वाहाय संरक्षणाय, अर्थात् वेदविहितकर्माद्यनुष्ठानेन तत्सार्थक्यापादनायेत्यर्थः। स्वयं क्षितौ पृथिव्यां उदिता उत्पन्नाः कृतिनः पुण्यवन्तः निर्मलाः शुद्धान्तःकरणाः एतादृशाः सज्जनाः, कलौ युगेऽपि कति न संदृश्यन्ते? अपि तु

---

१ 'सर्वे'. २ 'सर्वकाले'.

अथवा यदि ते[1] मद्वचसि न विस्रम्भस्तर्हि तत्र तत्र संचारमारचय्य तत्तद्गुणदर्शनं करवाव ॥ १२ ॥

---

## अथ बदरिकाश्रमवर्णनम् ४.

---

इति विमानमग्रतः प्रस्थापयन्नङ्गुल्या निर्दिश्य–

**विश्वा०**—

इदं बदरिकाश्रमस्थलमिहैष नारायण–
स्तपस्यति नमस्यतां स्थिरतमं[2] तमः शोषयन् ॥
विकासिधिषणोन्मिषद्विषयवर्जनाः सज्जना
जनार्दनमहर्दिवं भुजगमञ्चमर्चन्त्यमी ॥ ३३ ॥

---

बहवो दृश्यन्त एवेत्यर्थः । हरिणीवृत्तम् । लक्षणमुक्तं प्राक् ( २६ श्लोकटीकायाम् ) ॥ ३२ ॥

स्ववचसि **कृशानोः** किंचिद्विश्वासवैधुर्यं दृष्ट्वा बदरिकाश्रमादिपुण्यक्षेत्रवर्णनप्रस्तावार्थमाह–**अथवेति** । अथवेति पक्षान्तरे । यदि मदीये मदुक्ते वचसि भाषणे न विस्रम्भः विश्वासो नास्ति चेत्, "समौ विस्रम्भ–विश्वासौ" इत्यमरः । तर्हि तत्र तत्र पुण्यक्षेत्रे संचारं गमनं आरचय्य कृत्वा, तत्तद्गुणदर्शनं तत्तत्पुण्यक्षेत्राणां सम्यग्गुणनिरीक्षणं करवाव कुर्वः ॥ १२ ॥

इति एवमुक्त्वा विमानमग्रतः अग्रभागे प्रस्थापयन् प्रापयन्नङ्गुल्या निर्दिश्य, किंचित् प्रदेशमिति शेषः ।

**इदमिति** । इदं पुरोभागवर्ति बदरिकाश्रमाख्यं स्थलं स्थानं, वर्तत इति शेषः । इह अस्मिन् बदरिकाश्रमे एष प्रसिद्धो नराणां समूहो नारं जीवसमूहः तस्य अयनं आश्रयः । यद्वा नारं उदकं अयनं आश्रयो यस्य सः जलशायीत्यर्थः । तदुक्तं मनुस्मृतौ—"आपो नारा इति प्रोक्ता आपो वै नरसूनवः । तस्य ता अयनं प्रोक्तास्तेन नारायणः स्मृतः ॥" इति । नारायणः, नमस्यतां भक्तिभावेन नमस्कुर्वतां जनानां, नमःशब्दात् "नमो-वरिवस्" इत्यादिक्यजन्तात् शतृप्रत्ययः । स्थिरतमं अतिशयेन स्थिरं, अतिशायने तमप् । तमः अज्ञानं शोषयन् विनाशयितुम्, हेतौ शतृप्रत्ययः । तपस्यति तपश्चर्यां करोति । तपःशब्दात् "तपसः परस्मैपदं च" इति वार्तिकात् क्यङ् परस्मैपदं च । अत एव अमी एतत्क्षेत्रनिवासिनः विकासिन्याः परमात्मज्ञानेन विकसनशीलायाः धिषणायाः बुद्धेः "बुद्धिर्मनीषा धिषणा" इत्यमरः । उन्मिषत् उत्पद्यमानं विषयाणां शब्दादीनां वर्जनं निरसनं येषां

---

१ एतत् कचित् कचिन्न दृश्यते.   २ 'स्थिरतरम्'.

**कृशानुः**—सखे तवात्र गुणवत्तासमर्थनं न रोचते मह्यम् ॥ १३ ॥

कुतः—

यदत्र जागर्ति शिलासमं हिमं सुशीतला गन्धवहाश्च दुःसहाः ॥
जलावगाहाच्चकितो जनस्ततः कुतस्त्वनुष्ठास्यति कर्म निर्मलम् ॥ ३४ ॥

**विश्वावसुः**—अस्मन्मतानुकूलमेवैतद्भवति[1] भवदुक्तम् ॥ १४ ॥

---

तथाभूताः शब्द-स्पर्शादिविषयाद्यनासक्ततया केवलमीश्वरपरायणा इत्यर्थः । अत एव सज्जनाः साधुजनाः, भुजगः शेषः मञ्चः शयनं यस्य तथाभूतं जनार्दनं, जननं जनः भावे घञ् "जनि-वध्योश्च" इति वृद्ध्यभावः । जनः जन्म अर्दयति नाशयतीति विग्रहः । 'अर्द हिंसायाम्' इति धातोर्नन्द्यादित्वात् ल्युः । यद्वा जनैः अर्द्यते प्राप्यते इति विग्रहः । 'अर्द गतौ याचने च' इत्यस्मात् "कृत्य-ल्युटो बहुलम्" इति कर्मणि ल्युट् । एतादृशं नारायणं अहर्दिवं प्रतिदिनं "अचतुर-विचतुर-सुचतुर-" इत्यादिना समासः । अर्चन्ति पूजयन्ति । पृथ्वी वृत्तम् । लक्षणमुक्तं प्राक् ( १२ श्लोकटीकायाम् ) ॥ ३३ ॥

पुनरपि स्वानुरूपमाह **कृशानुः—सखे इति** । हे सखे मित्र, तव त्वत्कृतमित्यर्थः । अत्र बदरिकाश्रमे, गुणाः भगवन्निवासादयः सन्ति यस्मिंस्तत् तस्य भावः तत्ता तस्याः समर्थनं प्रतिपादनं, मह्यं मे न रोचते न प्रीणयति । "रुच्यर्थानां" इति चतुर्थी ॥ १३ ॥

कुतो न रोचते इत्याह–**यदत्रेति** । यद्यस्मात् कारणात् अत्र बदरिकाश्रमे, शिलासमं घनीभूतत्वात् पाषाणसदृशं हिमं तुहिनं "तुषारस्तुहिनं हिमम्" इत्यमरः । जागर्ति विद्यते । कदापि वसन्त-ग्रीष्माद्युष्णकालेऽपि न विनश्यतीति द्योतनार्थं जागृधातोः प्रयोगः । तथा गन्धवहाः वायवश्च " —वायुर्मातरिश्वा सदागतिः । पृषदश्वो गन्धवहो–" इत्यमरः । सुतरामत्यन्तं शीतलाः शीतयुक्ताः, अत एव दुःसहाः सोढुमशक्याः वहन्तीति शेषः । तत एव च जले योऽवगाहः स्नानं तस्मात् चकितो भीतो जनः । जातावेकवचनम् । सर्वेऽपि जनाः स्नातुं न शक्नुवन्तीत्यर्थः । "भीत्रार्थानां भयहेतुः" इति पञ्चमी । ततः ततस्तु उपर्युक्तदोषबाहुल्यादेव निर्मलं पूर्वोक्तं पूजादिरूपं कर्म, कुतः अनुष्ठास्यति तादृशकर्मणोऽनुष्ठानं कथं करिष्यतीत्यर्थः । एवं च पूर्वोक्तं तव गुणवत्ताप्रतिपादनं नात्र संगच्छते इति भावः । वंशस्थवृत्तम् । लक्षणमुक्तं प्राक् ( १० श्लोकटीकायाम् ) ॥ ३४ ॥

एवं **कृशानु**प्रोक्तं दूषणमपि गुणपरतया संग्रहीतुमाह **विश्वावसुः–अस्मदिति** । एतत् 'यदत्र जागर्ति शिलासमं हिमं' इत्यादि भवदुक्तं त्वया प्रतिपादितं, अस्माकं मतस्य बदरिकाश्रममहत्त्ववर्णनरूपस्य अनुकूलं युक्तमेव भवति ॥ १४ ॥

---

१ 'अस्मदनुकूलमेतद्भवति'.

यतः—

परमहिमयुतत्वात् प्राप्तवैकुण्ठसाम्यं
पदमिदमुपयान्तः पण्डिताः शान्तिमन्तः ॥
मुहुरिह समयेषु स्नानहेतोः सरोगा-
स्तदपि भृशमरोगास्तार्क्ष्यकेतोः प्रसादात् ॥ ३५ ॥

---

इति विमानमन्यतः प्रस्थाप्य साञ्जलिबन्धम्—

---

तदेवाह—**यत इति—परमेति** । परमं अतिशयितं च निबिडमिति यावत् । तत् हिमं तुहिनं तेन युतत्वात् युक्तत्वात्, पक्षे पर उत्तमश्चासौ सर्वलोकातिरिक्त इति यावत् महिमा माहात्म्यं च तेन युतत्वात्, प्राप्तं विशेषेण कुण्ठः क्रियामन्दः किंचिदपि कार्यं कर्तुमशक्त इत्यर्थः । "कुण्ठो मन्दः क्रियासु यः" इत्यमरः । विकुण्ठः, विकुण्ठ एव वैकुण्ठः तस्य साम्यं सादृश्यं येन, पक्षे प्राप्तं वैकुण्ठस्य वैकुण्ठलोकस्य साम्यं येन, तादृशं इदं पदं बदरिकाश्रमस्थानं प्रति, उपयान्तः आगच्छन्तः, शान्तिमन्तः शान्तियुक्ताः, पण्डा आत्मज्ञानविषया बुद्धिः सा प्राप्ता येषां ते पण्डिताः । पण्डाशब्दात् तारकादित्वादितच् । इह बदरिकाश्रमे समयेषु प्रातर्मध्याह्नादिकर्मकालेषु स्नानहेतोः स्नानकारणादेव "हेतुर्ना कारणं बीजं" इत्यमरः । मुहुर्वारंवारं, सरोगाः शीत-वातादिरोगयुक्ताः, पक्षे सरः सरोवरं गच्छन्तीति तथाभूताः भवन्तीति शेषः । तदपि तथापि, ते तार्क्ष्यः गरुडः "गरुत्मान् गरुडस्तार्क्ष्यः" इत्यमरः । केतुर्ध्वजो यस्य सः विष्णुः तस्य प्रसादात् अनुग्रहात् भृशमत्यन्तं अरोगा रोगरहिताः कुशलिन इत्यर्थः । भवन्ति । एतदुक्तं भवति—यत्पूर्वमुक्तं दूषणं 'जलावगाहाच्चकितो जनः' इत्यादि, तत्तु भगवद्भक्तेषु न संगच्छते, ते तु भगवत्प्रसादान्निरन्तरं कुशलिन एव, परं च ये तावदभक्ताः काम-रागादिदोषयुक्ताश्च ते एव भगवदनुग्रहाभावात् शीतादिरोगयुक्ताः भवन्तीति । अत्र विरोधालंकारः । भगवत्प्रसादेन 'सरोगाः' इत्यत्र सरोवरगमनरूपश्लेषार्थेन च विरोधपरिहारः । तदुक्तम्—"विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः" इति । मालिनी छन्दः । "न-न-म-य-य-युतेयं मालिनी भोगिलोकैः" इत्यादितल्लक्षणात् ॥ ३५ ॥

अथ अयोध्यापुरवर्णनमाक्षिपन्नाह कविः—**इतीति** । इत्येवंप्रकारेणोक्त्वा विमानमन्यतोऽन्यत्र प्रस्थाप्य नीत्वा अञ्जलिः करसंपुटः तस्य बन्धः करणं तेन सहितं यथा तथा आहेति शेषः ॥

# अथायोध्यावर्णनम् ५.

साकेताय नमः पुराय भवतु स्तोकेतरश्रीपुषे
नानादोषमुषे तदन्तिकजुषे[1] देव्यै सरय्वै नमः ॥
येऽमी तत्तटभूमिषु प्रविलसद्रूपाश्च यूपाः स्थिता–
स्तेभ्यो भानुकुलीनकीर्तिलतिकोपघ्नायितेभ्यो नमः ॥ ३६ ॥

पुनः[2] पुरीं निरीक्ष्य सभक्त्युन्मेषम्–
भवसागरशोषणेन पश्यच्चरणान्तःपुरजीवनौषधेन ॥
रजसा रघुनाथपादभाजा रचितांहःप्रशमामिमां नमामि ॥ ३७ ॥

---

**साकेतायेति**। स्तोकात् अल्पात् "स्तोकाल्प-क्षुल्लकाः सूक्ष्मं" इत्यमरः। इतरा भिन्ना अर्थात् अनल्पा तां श्रियं शोभां पुष्णाति धारयतीति तस्मै स्तोकेतरश्रीपुषे 'पुष पुष्टौ' इत्यस्मात् क्विप्। साकेताय पुराय अयोध्यानगर्यै नमः भवतु अस्तु। तथा नानादोषान् बहुविधपापानि मुष्णाति नाशयतीति तथाभूतायै। 'मुष स्तेये' इत्यस्मात् क्विप्। तस्य अयोध्यापुरस्य अन्तिकं समीपं जुषति सेवते तिष्ठतीति यावत्। तस्यै 'जुषी प्रीति-सेवनयोः' इत्यस्मात् क्विप्। देव्यै दिव्यरूपायै सरय्वै सरयूनाम्न्यै नद्यै च नमः। तथा तस्याः सरय्वाः तटभूमिषु तीरभूमिषु "कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु" इत्यमरः। प्रविलसत् शोभायमानं रूपं येषां तथाभूताः ये अमी दृश्यमाना यूपाः यज्ञीयपशुबन्धनस्तम्भाः स्थिताः सन्ति। कीदृशास्ते। भानुकुले सूर्यवंशे भवा भानुकुलीनाः कुलशब्दात् भवार्थे खप्रत्ययः "आयनेयीनी–" इत्यादिना च खस्य ईना-देशः। सूर्यवंशोत्पन्ना राजान इत्यर्थः। तेषां कीर्तिरूपा या लतिका लतास्तासां उपघ्नाः अन्तिकाश्रया इव "स्यादुपघ्नोऽन्तिकाश्रयः" इत्यमरः। आचरन्ति ते उपघ्नायितास्तथाभूतेभ्यः। सूर्यवंशोत्पन्ननृपतिकीर्तिसूचकेभ्य इति यावत्। उपघ्नशब्दात् उपमानार्थे "कर्तुः क्यङ्–" इति क्यङि क्तप्रत्ययः। तेभ्यो यूपेभ्यश्च नमः अस्तु। अत्रोपमावाचकस्येवशब्दस्य लोपात् लुप्तोपमालंकारः। "वादेर्लोपे समासे सा कर्माधार-क्यचि क्यङि" इति तल्लक्षणात्। शार्दूलविक्रीडितं वृत्तम् ॥ ३६ ॥

**पुनरिति**। पुनः पुरीमयोध्यां निरीक्ष्यावलोक्य, भक्तेः पूज्येष्वनुरागस्य उन्मेषेण विकासेन सहितं यथा भवति तथा प्राहेति शेषः ॥

**भवसागरेति**। भवसागरस्य संसारसमुद्रस्य शोषणेन विनाशकेन, पश्यच्चरणो गौतमर्षिः तस्य अन्तःपुरं पत्नी अहल्या तस्य जीवनं गौतमदत्तशापमोचनं तस्य औषधं औषधरूपं तेन, रघुनाथस्य श्रीरामचन्द्रस्य पादौ चरणौ भजति सेवते इति रघुनाथपादभाक् तेन रामचन्द्रचरणसंबन्धिनेति यावत्। रजसा रेणुना "रेणुर्द्वयोः स्त्रियां

---

१ 'तदन्तर'. २ 'पुनः पुनर्नि'.

पुनः सानुस्मरणरोमाञ्चम्—

कल्याणोल्लाससीमा कलयतु कुशलं कालमेघाभिरामा
काचित्साकेतधामा भवगहनगतिक्लान्तिहारिप्रणामा ॥
सौन्दर्यह्रीणकामा धृतजनकसुतासादरापाङ्गदामा[1]
दिक्षु प्रख्यातभूमा दिविषदभिनुता देवता रामनामा ॥३८॥

---

धूलिः पांसुर्ना न द्वयो रजः" इत्यमरः । रचितः । कृतः अंहसां पापानां "पापं किल्बिष-कल्मषम् । कलुषं वृजिनैनोऽघमंहः—" इत्यमरः । प्रशमो नाशो यया तां इमां अयोध्यां नमामि । औपच्छन्दसिकं वृत्तम्, "पर्यन्तेयौं तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम्" इति तल्लक्षणात् ॥ ३७ ॥

**पुनरिति ।** अनुस्मरणं मनसि चिन्तनं तेन ये रोमाञ्चाः रोमहर्षास्तैः सहितं यथा भवति तथा प्राहेति ॥

एवमयोध्यां वर्णयित्वाथ तत्रस्थं श्रीरामचन्द्रं वर्णयति—**कल्याणेति ।** कल्याणस्य मङ्गलस्य य उल्लास आधिक्यं तस्य सीमा मर्यादा । एतस्मादधिकं कल्याणसाधनं नास्तीत्यर्थः । तथा कालमेघवत् अभिरामा मनोहरा वर्षाकालीनमेघ इव श्यामवर्णेत्यर्थः । अपि च भवः संसारस्तदेव गहनं वनं "गहनं काननं वनम्" इत्यमरः । तस्मिन् गत्या परिभ्रमणेन या क्लान्तिः श्रमः तस्या हारी हरणशीलो विनाशक इति यावत् । प्रणामो नमस्कृतिर्यस्याः सा तथाभूता, यस्याः प्रणाममात्रेणैव सकलसांसारिकदुःखनिरसनं भवतीत्यर्थः । पुनश्च सौन्दर्येण लावण्येन ह्रीणः लज्जितः "ह्रीण-ह्रीतौ तु लज्जिते" इत्यमरः । कामो मदनो यस्याः सा तथाभूता । अत एव धृता जनकसुतायाः सीतायाः सादरं यथा स्यात्तथा अपाङ्गदामा कटाक्षपङ्क्तिर्यया तथाभूता च । "अपाङ्गौ नेत्रयोरन्तौ कटाक्षोपाङ्गदर्शने" इत्यमरः । यथा दिक्षु पूर्वादिदशदिशासु प्रख्यातः प्रसिद्धः भूमा माहात्म्यं यस्याः सा, तत एव च दिवि स्वर्गे सीदन्ति तिष्ठन्तीति दिविषदो देवाः 'षद्लृ विशरण-गत्यवसादनेषु' इत्यस्माद्धातोः "सत्सू-द्विष-द्रुह–" इत्यादिना क्विप् । "आदितेया दिविषदो लेखा अदितिनन्दनाः" इत्यमरः । तैः अभिनुता संस्तुता । एतादृशी साकेतमयोध्या "साकेतं स्यादयोध्यायां" इति कोशः । धाम स्थानं यस्याः सा, काचिदनिर्वाच्या रामनामा रामाख्या देवता, सर्वेषामिति शेषः । कुशलं क्षेमं कलयतु करोतु । अत्र—'सीमा—धामा—दामा—नामा' इति सर्वत्र स्त्रीत्वविवक्षायां "डाबुभाभ्यामन्यतरस्याम्" इति डाप्प्रत्ययः । स्रग्धरा वृत्तम् लक्षणं पूर्वोक्तं ( १ श्लोकटीकायामुक्तम् ) ॥ ३८ ॥

---

१ 'धामा'.

किंच—

दशाननकुशासनत्रसदशेषलोकव्यथा—
विलोपकर[1]कोपको वसुमतीसुतावल्लभः ॥
कृपारसमपारसंसृतिप[2]योनिधेस्तारकं
कृषीष्ट स ऋषीष्टकृत्कृपणतैकताने मयि ॥ ३९ ॥

अपि च—

स जयति चित्रचरित्रो यस्य हि वरचरणपुष्करकरेणुः ॥
महिषीमृषिसिंहस्य प्राजीजनदपि वृषोदये हेतुः[3] ॥ ४० ॥

---

**दशाननेति** । किं च पुनः दशाननस्य रावणस्य यत् कुत्सितं शासनं राज्यकरणं तस्मात् त्रसन्तो बिभ्यतो ये अशेषाः सकला लोकास्तेषां व्यथाया दुःखस्य विलोपं नाशं करोतीति तथाभूतः कोपः क्रोधः यस्य सः विलोपकरकोपकः शैषिकः कप् प्रत्ययः । क्वचित्-'रोपकः' इति पाठस्तत्पक्षे—व्यथाविलोपकरः रोपः बाणः यस्य तथाभूत इत्यर्थः । "पत्री रोप इषुर्द्वयोः" इत्यमरः । एतादृशः वसुमतीसुतायाः पृथ्वीसुतायाः सीताया वल्लभः प्रियकरः । अपि च ऋषीणां इष्टकृत् यज्ञादिसकलकर्मप्रत्यूहभूतरावणादिराक्षसविनाशनेन तत्कर्मप्रवर्तक इत्यर्थः । सः श्रीरामचन्द्रः, कृपणतायाः दीनतायाः एकताने अनन्यवृत्तौ "एकतानोऽनन्यवृत्तिः" इत्यमरः । अत्यन्तकृपणे इत्यर्थः । मयि अपारः तर्तुमशक्यः यः संसृतिपयोनिधिः संसारसागरः तस्मात् तारकं उद्धारकं कृपारसं दयारसं, कृषीष्ट कुर्यात् । 'डुकृञ् करणे' इत्यस्मादात्मनेपदिनः (अयमुभयपदी तस्मादात्मनेपदविवक्षायां) आशीर्लिङि रूपम् । अत्र कृपारसकरणस्य 'दशाननकुशासन—' इत्यादिवाक्यं हेतुरूपं, तेन काव्यलिङ्गमलंकारः । "काव्यलिङ्गं हेतोः—" इत्यादितल्लक्षणात् ॥ ३९ ॥

ननु इतरबहुतरसंसारसागरतारकदेवतासत्त्वात्कुतोऽयमेव प्रार्थ्यते इत्याशङ्कां निवारयन्नाह—**स इति** । अपि च न तावत् पूर्वोक्तमेव, अन्यदपि तन्माहात्म्यमस्तीत्यर्थः। तदिदम्—यस्य हि श्रीरामचन्द्रस्यैव वरं श्रेष्ठं यच्चरणपुष्करकं चरणकमलं तत्संबन्धी रेणुः धूलिः । पक्षे वराण्युत्तमानि चरणानि पुष्करं शुण्डाग्रं "पुष्करं करिहस्ताग्रे वाद्य—भाण्ड-मुखे जले । व्योम्नि खड्गफले पद्मे" इति नानार्थः । च यस्य तथाभूतः करेणुः गज इति चार्थः । "करेणुरिभ्यां स्त्री नेभे" इत्यमरः । अत एव (एतद्रामपक्षे) वृषस्य धर्मस्य बलीवर्दस्य च उदये उत्पत्तौ हेतुः कारणं "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" "उक्षा भद्रो बलीवर्दो ऋषभो वृषभो वृषः" इत्युभयत्राप्यमरः । अपिः समुच्चयस्य विरोधस्य च द्योतकः । "गर्हा-समुच्चय-प्रश्न-शङ्का-संभावनास्वपि" इत्यमरः । ऋषन्ति जानन्ति तत्त्वमिति ऋषयः 'ऋषी गतौ' इति धातोः "इगु-

---

१ 'विलोपकररोपकः'. २ 'पयोधिनिस्तारकं'. ३ 'हेतुम्'.

श्रेयांसि भूयांसि महावदान्यः प्रेयान्स देयाज्जनकात्मजायाः ॥
काकाय कङ्काय च योऽदितेष्टं दाशाय कीशाय च राक्षसाय ॥४१॥

अपि च[1]—

अभीष्टघटकः क्षितावतुलदीप्तिकोदण्डभा[2]—
गिति क्षममिदं पुनः परममद्भुतं ब्रूमहे ॥
विधूतपरमार्तिको विघटितारिचक्रः स्वयं
स कुम्भजनकं प्रभुः शर्कलयांबभूव[3] क्रुधा ॥ ४२ ॥

---

पधात् कित्" इत्युणादिसूत्रात् इन् प्रत्ययः । गत्यर्थत्वात् ज्ञानार्थत्वम् । तेषां सिंहस्य श्रेष्ठस्य "सिंह-शार्दूल-नागाद्याः पुंसि श्रेष्ठार्थगोचराः" इत्यमरः । गौतमस्येत्यर्थः । महिषीं पत्नीं प्राजीजनत् शिलारूपत्वादुद्दधार । पक्षे ऋषेः सिंहस्य च महिषीं महिषस्त्रियं चेत्यर्थः । अत एव चित्रमाश्चर्यजनकं चरित्रं यस्य सः, सः प्रसिद्धः श्रीरामः, जयति सर्वोत्कर्षेण वर्तते । अत्र श्लेषानुप्राणितो विरोधालंकारः । गीतिश्छन्दः "आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः । दलयोः कृतयतिशोभां तां गीतिं—" इति तल्लक्षणात् ॥ ४० ॥

अपि च—**श्रेयांसीति** । यः श्रीरामः काकाय वायसाय, कङ्काय जटायुनाम्ने गृध्राय, (यद्यप्यमरे कङ्कशब्दस्य गृध्रवाचकत्वं कुत्रापि नोपलभ्यते, तथाप्यत्र गृध्रवाचकत्वमेवेष्टं, गृध्रं प्रत्येव श्रीरामादिष्टप्राप्तेः । कोशान्तरे च गृध्रवाचकत्वं कङ्कशब्दस्योपलभ्यते चेत् तद्वयं न जानीमः । ) च तथा दाशाय गुहाख्यधीवराय, कीशाय सुग्रीवाय मारुतये वा वानराय, राक्षसाय विभीषणाय च, इष्टं तत्तदभीष्टमनोरथं, अदित दत्तवान् 'डुदाञ् दाने' इत्यस्मात् लुङि आत्मनेपदविवक्षायां तङि "स्था-घ्वोरिच्च" इतीत्वे सिज्लोपे च सिद्धमिदं रूपम् । सः महावदान्यः महांश्चासौ वदान्यश्चेति विग्रहः । अतीव दानशूर इत्यर्थः । "आन्महतः समानाधि-" इत्यादिना महच्छब्दस्यात्वम् । "स्युर्वदान्य-स्थूललक्ष्य-दानशौण्डा बहुप्रदे" इत्यमरः । जनकात्मजायाः सीतायाः प्रेयान् अतिशयप्रियः पतिः श्रीराम इत्यर्थः । प्रियशब्दात् अतिशयार्थे ईयसुनि "प्रिय-स्थिर-स्फिरोरु-बहुल." इत्यदिना प्रादेशः । भूयांसि अतिशयानि । बहुशब्दादीयसुनि "बहोर्लोपो भू च बहोः" इति बहुशब्दस्य 'भू' आदेश ईकारलोपश्च । श्रेयांसि कल्याणानि देयात् ददातु । ददातेराशीर्लिङि "एर्लिङि" इत्येत्त्वम् । इन्द्रवज्रा वृत्तम् । "स्यादिन्द्रवज्रा यदि तौ ज-गौ गः" इति तल्लक्षणम् ॥ ४१ ॥

अन्यदपि तद्वृत्तमाह—**अपि चेति । अभीष्टेति** । क्षितौ पृथिव्यां अयं श्रीराम इति शेषः । अभीष्टं भक्तजनेष्टं घटयति जनयतीति तथोक्तः स्वार्थे कः । तथा अतुला अतिशयिता दीप्तिः कान्तिर्यस्य तत् तादृशं कोदण्डं धनुः "धनुश्चापौ धन्व-शरा-

---

[1] 'अन्यच्च.'　[2] 'क्षितावमित'.　[3] 'प्रशमयां'.

**कृशानुः**—कथं नाम रामभद्रमनुचितकर्माणमप्येवमीडिडिषे[1]? ॥१५॥

वर्षीयानपि जानकीसहचरो मातुः सपत्न्या मुदे
संपन्नं रथ-हस्ति-पत्ति-तुरगैः संत्यज्य राज्यं निजम् ॥
विन्दन् हन्त घनं वनं कथमसौ न स्यादयुक्तक्रियो
गव्यं दुग्धमपास्य पास्यति? जनः को वा यवागूरसम्॥४३॥

---

सन-कोदण्ड-कार्मुकम्" इत्यमरः । भजति धारयतीति कोदण्डभाक् अस्ति । इतीदं क्षमं युक्तम् वक्तुमिति शेषः । पुनः इदं वक्ष्यमाणं च परममत्यन्तं अद्भुतं विचित्रं, ब्रूमहे ब्रूमः । 'ब्रूञ् व्यक्तायां वाचि, इति धातोर्ञित्त्वादात्मनेपदमपि । किं तत् । सः पूर्वोक्तः अभीष्टघटक इत्यादिविशेषणविशिष्ट एव, स्वयं विघटितं नाशितं अरीणां शत्रूणां चक्रं समूहो येन तथाभूतः, अत एव विधूता विनाशिता परमा अतिशयिता आर्तिः जन्ममरणादिपीडा (अर्थात् भक्तानां) येन सः विधूतपरमार्तिकः । शैषिकः कप् । प्रभुः श्रीरामः क्रुधा रोषेण, कुम्भस्य कुम्भनाम्नो राक्षसस्य जनकं रावणं, कुम्भनामा राक्षसो रावणपुत्रत्वेन रामायणादौ प्रसिद्धः । शकलयांबभूव खण्डयामास विनाशितवानिति यावत् । रावणस्य देवादिभिरप्यजेयत्वात्तन्नाशकरणमाश्चर्यजनकमिति भावः । इति वास्तवोऽर्थः । श्लिष्टार्थोऽप्यत्र संभवति यथा—क्षितौ अभीष्टः इच्छितः घटः यस्य स अभीष्टघटकः । शैषिकः कप् । दीप्यते प्रकाश्यते उत्पाद्यत इति यावत् । घटोऽनया दीप्तिर्मृत्पिण्डः अतुला अप्रतिमा दीप्तिर्यस्य स तथाभूतः अत्रापि शैषिकः कप् । दण्डं भजति स्वीकरोतीति दण्डभाक् । घटस्य निमित्तकारणरूपदण्डग्रहीतेति यावत् । इत्येवं क्षमं योग्यमेव । परं च पुनः इदं वक्ष्यमाणं, परममद्भुतमत्याश्चर्यकरं ब्रूमहे । किं तत् । सः अभीष्टघट एव प्रभुः पुमान् विधूता परा उत्कृष्टा मृत्तिकैव मार्तिका स्वार्थेऽण् । येन तथाभूतः, अराः चक्रान्तर्भूततिर्यक्काष्ठानि यस्य तच्च तत् चक्रं च तत् विघटितं विनाशितं येन तथाभूतः सन् , क्रुधा कुम्भजनकं घटोत्पादकं दण्डादिकमपि, शकलयांबभूव शकलीचकार । शकलब्दात् 'तत्करोति-' इत्यर्थे णिचि लिटि च प्रत्ययान्तत्वादाम् तदन्तात् "कृ-भ्वस्तयोऽनु-" इत्यादिना भवतेरनुप्रयोगः । घटस्पृहावत एव मृद्दण्डादितत्साहित्यनाशनमतिविचित्रमिति भावः । अत्र श्लिष्टविशेषणैरप्रकृतार्थसंभवात्समासोक्तिरलंकारः । तदुक्तम्—"परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः" इति । पृथ्वी वृत्तम् ॥ ४२ ॥

अथ **कृशानुराह—कथं नामेति** । अनुचितानि अयोग्यानि कर्माणि यस्य तथाभूतमपि रामभद्रं रामचन्द्रं, एवमुक्तप्रकारेण ईडिडिषे स्तोतुमिच्छसि । 'ईड स्तुतौ, इति धातोः सन् "पूर्ववत्-" इति तङ् ॥ १५ ॥

अनुचितकर्मत्वमेव प्रपञ्चयति—**वर्षीयानिति** । यः वर्षीयान् चतुर्ष्वपि दशरथपुत्रेषु ज्येष्ठः, वर्षीयस्शब्दस्य ज्येष्ठभ्रातृवाचकत्वे व्याकरणकोशादिना केनापि न

---

[1] 'ईडिषे'.

किंच—

धिक्कृत्यैव दशास्यदर्पशमनं[1] धीशालिनं वालिनं
　सोऽयं राक्षसवर्गनिग्रहकृते सुग्रीवमन्वग्रहीत् ॥
तुङ्गप्रस्तरभङ्गलिप्सुरिह निश्शङ्कं तु टङ्कं त्यजन्
　संकल्पं कलयेत पङ्कजदलादानप्रसङ्गाय कः ॥ ४४ ॥

---

सिद्ध्यति । यथा—वृद्धशब्दादीयसुनि "प्रिय-स्थिर-स्फिरोरु-बहुल-गुरु-वृद्ध-" इत्यादिना वृद्धशब्दस्य वर्षादेशः । अत एव "वर्षीयान् दशमी ज्यायान्" इत्यमरटीकायां महेश्वरभट्टः—'अतिशयेन वृद्धो वर्षीयान्' इत्येवं व्याचख्यौ । तस्मादत्रायं प्रयोगः कविमतिभ्रमद्योतक एवेति भाति । यद्वा वृद्धशब्दस्य श्रेष्ठवाचित्वं संगृह्य समाधेयम् । अपि च जानकी सीता सहचरी सह गच्छन्ती यस्य तथाभूतश्च सन् । सीतासहित इति यावत् । मातुः सपत्न्याः कैकेय्याः, सपतिशब्दस्य स्त्रीत्वविवक्षायां "नित्यं सपत्न्यादिषु" इति नकारादेशो ङीप् च । मुदे संतोषार्थं, रथाश्च हस्तिनश्च पत्तयः पादातयश्च "पादाति-पत्ति-पदग-" इत्यमरः । तुरगा अश्वाश्च तैः संपन्नं समृद्धं, निजं ज्येष्ठभ्रातृत्वात्स्वकीयं राज्यं संत्यज्य त्यक्त्वा, घनं निबिडं वनमरण्यं विन्दन् गच्छन्, 'विद्लृ लाभे' इति धातोः शतृप्रत्ययः मुचादित्वान्नुम् । हन्तेति विषादे । असौ रामः अयुक्ता अयोग्या क्रिया वनगमनरूपा यस्य तथाभूतः कथं न स्यात् ? अपि तु स्यादेवेत्यर्थः । अयमाशयः—यद्यसौ (श्रीरामः) स्वजनन्याः संतोषार्थं वनं गच्छति स्म, तर्हि तस्य तद्गमनमुचितमेव । किंतु केवलं मात्सर्यभरितायाः एकाकिन्याः सापत्नमातुः सुखार्थमेव स्वमातरं पित्रादींश्च शोकसागरे निमज्ज्य यदसौ वनमगमत् तदत्यन्तानुचितमेवेति । एतदेव दृष्टान्तेन स्पष्टयति—**गव्यमिति** । लोके गव्यं गोसंबन्धि "गोपयसोर्यत्" इति यत्प्रत्ययः । दुग्धं क्षीरं अपास्य त्यक्त्वा, अपपूर्वात् 'असु क्षेपणे' इत्यस्मात् क्त्वाप्रत्यये ल्यबादेशः । यवागूरसं उष्णिकारूपं रसं (अयं महाराष्ट्रभाषायां 'आटवल' 'पातळ भात' इति नाम्ना प्रसिद्धः) "यवागूरुष्णिका श्राणा" इत्यमरः । को वा जनः पास्यति पिबेत् न कोऽपीत्यर्थः । दृष्टान्तालंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४३ ॥

नैतावदेव अन्यदप्येतस्मात् (पूर्वोक्तात्) अवद्यं कृत्यमाह—**धिक्कृत्यैवेति** । सः राज्यं संत्यज्य वनं गच्छन् अयं रामः, दशास्यस्य रावणस्य दर्पशमनं गर्वनिवारकं अत एव धीशालिनं बुद्धिमन्तं वालिनं वालिनामानं वानरं, वालिना हि पूर्वं रावणो निगृह्य निजबालकस्यान्दोलिकायां पुत्रिकेव बालक्रीडनकीकृत इति प्रसिद्धिः । धिक्कृत्य तिरस्कृत्य तं हत्वेत्यर्थः । पुनश्च राक्षसानां रावणादीनां वर्गः समुदायः तस्य निग्रहकृते वधार्थं, सुग्रीवं अल्पपराक्रमं तद्भ्रातरं अन्वग्रहीत् स्वीकृतवान् । एतदेव सदृष्टान्तमुपपादयति—**तुङ्गेति** । इह लोके तुङ्गः कठिनश्चासौ प्रस्तरः पाषाणश्च

---

१ 'दर्पदमनं'.

अपि च—

कृत्वा सेतुं किल जलनिधौ खण्डयित्वा दुरध्वान्
लब्ध्वा देवीं स्फुटविदितसंशुद्धिमग्निप्रवेशात् ॥
भूयोऽप्येनां भुवनजननीं भूमिकन्यामनन्या-
मन्तर्वत्नीमनयत वनं हन्त पौलस्त्यहन्ता ॥ ४५ ॥

**विश्वा०**—सखे गुणिषु[1] दोषाविष्कारं कथंकारमारचयसि[2] ॥ १६ ॥

---

"पाषाण-प्रस्तर-ग्राव-" इत्यमरः। तस्य भङ्गः स्फोटनं तत् लिप्सुः इच्छुः, 'डु-लभष् प्राप्तौ' इति धातोः सनि "सनि मी-माघु-रभ-लभ-" इत्यादिना इस् आदेशः "अत्र लोपः–" इत्यभ्यासलोपश्च। निःशङ्कं शङ्कारहितं यथा स्यात्तथा टङ्कं पाषाणदारकमायुधविशेषं "टङ्कः पाषाणदारणः" इत्यमरः। 'टांकी' इति महाराष्ट्रभाषायां प्रसिद्धम्। त्यजन् सन्, पङ्कजस्य कमलस्य दलं पत्रं तस्यादानं पाषाणभेदनार्थं स्वीकारः तद्रूपो यः प्रसङ्गः संबन्धः तं कर्तुं, "क्रियार्थोपपदस्य" इत्यादिना चतुर्थी। कः संकल्पं विचारं कलयेत कुर्यात्? अपि तु न कोऽपीत्यर्थः॥ दृष्टान्तालंकारः। शार्दूलविक्रीडितं वृत्तम् ॥ ४४ ॥

अन्यदपि गर्हणीयं कृत्यं शृण्वित्याह—**अपि चेति**। अपि च अन्यच्चेत्यर्थः।

**कृत्वेति**। पुलस्त्यस्य अपत्यं पुमान् पौलस्त्यो रावणः "तस्यापत्यम्" इत्यपत्यार्थेऽण्। तस्य हन्ता घातकः रामः, जलनिधौ समुद्रे सेतुं कृत्वा बद्ध्वा, तथा दुरध्वान् दुष्टमार्गान् "उपसर्गादध्वनः" इति समासान्तोऽच् प्रत्ययः। खण्डयित्वा नाशयित्वा किलेति प्रसिद्धार्थम्। अग्निप्रवेशाद्धेतोः स्फुटं यथा तथा विदिता ज्ञापिता सं सम्यक् शुद्धिः सतीत्वपावित्र्यं यस्यास्तां देवीं सीतां लब्ध्वा संप्राप्यापि, भूयः पुनः एनां भुवनजननीं न तु सामान्यां, एतेन रावणस्यापीयं मातृवत्पूज्येति सूचितम्। पुनश्च अनन्यां एकाकिनीं अपि च अन्तर्वत्नीं गर्भिणीं "अन्तर्वत्नी च गर्भिणी" इत्यमरः। "अन्तर्वत्-पतिवतोः–" इति नुगागमः तत्संनियोगशिष्टो ङीप् च। अनेन तस्यास्त्यागायोग्यत्वं सूचितम्। भूमिकन्यां न तु लोकवद्योनिजां किंतु शुद्धयज्ञभूम्युत्पन्नां एतादृशीं सीतां वनं अनयत। केनचिदतिपामरेण प्रयुक्तादपवादादरण्यं प्रापयामासेत्यर्थः। हन्तेति खेदे। अनेन तदर्थं ये वानरसाहाय्य-सेतुबन्धन-रावणहननादि-महाप्रयत्नाः कृतास्ते सर्वेऽपि व्यर्थीकृता एवेति ज्ञापितम्। एवंचैतादृशविवेकविधुरस्य स्तुतिकरणमनुचितमिति भावः। अत्र सीतासंप्रापण–पुनर्वननयनक्रिये विरुद्धे इति विषमोऽलंकारः। तदुक्तम्–"गुण-क्रियाभ्यां कार्यस्य कारणस्य गुण-क्रिये। क्रमेण च विरुद्धे यत्स एव विषमो मतः" इति। मन्दाक्रान्ता वृत्तम्। लक्षणमुक्तं प्राक् ( ८ श्लो० टीकायाम् ) ॥ ४५ ॥

अथ **कृशानु**प्रोक्तनिखिलदोषानपाकुर्वन्नाह **विश्वावसुः—सखे इति**। हे सखे

---

१ 'गुणेषु'. २ 'कथमारचयसे.'

गुरावसत्योक्तिनिरासहेतोः स्वराज्यमग्र्योऽपि स रामचन्द्रः ॥
तृणाय मेने निपुणायते न फणाभृदीशोऽपि पणायितुं[1] तम् ॥ ४६ ॥

किंच—

वालिनि बलोर्मिमालिनि जाग्रति सुग्रीवमग्रहीद्यदयम् ॥
अस्य श्रुतिशतविदितं सुव्यक्तं तेन दीनबन्धुत्वम् ॥ ४७ ॥

किंच—

लक्ष्मीं वक्षसि बिभ्रदप्यविरतं[2] रामाकृतिः श्रीपति-

---

मित्र, गुणिषु पित्राज्ञापालनादिरूपप्रशस्तगुणयुक्तेषु, दोषाणां राज्यत्यागादिरूपदोषाणां आविष्कारं आरोपं कथंकारं कथमित्यर्थः । "अन्यथैवं-कथमित्थंसु—" इत्यादिना कथमित्युपपदे करोतेर्णमुल्प्रत्ययः । आरचयसि करोषि ॥ १६ ॥

तत्र तावत्प्रथमं 'वर्षीयानपि जानकीसहचरः—' इत्यादिनोक्तं वनवासगमनरूपं दूषणं निराकुर्वन्नाह—**गुराविति** । अग्र्यो ज्येष्ठोऽपि स पूर्वोक्तो रामचन्द्रः, गुरौ पितरि दशरथविषये, असत्योक्तेः वृषपर्वयुद्धप्रसङ्गे प्रतिश्रुतवरद्वयाप्रदानरूपायाः निरासः निवारणं तद्रूपाद्धेतोः कारणात्, स्वराज्यं ज्येष्ठत्वात् स्वसत्ताकमपि राष्ट्रं, तृणाय मेने तृणवत्तुच्छं मेन इत्यर्थः । "मन्यकर्मण्यनादरे—" इत्यादिना चतुर्थी । अत एव फणाः बिभ्रति धारयन्तीति फणाभृतः सर्पास्तेषां ईशः शेषः अपि सहस्रमुखः सन्नपीत्यर्थः । तं रामचन्द्रं पणायितुं स्तोतुं 'पण व्यवहारे स्तुतौ च' इति धातोस्तुमुन् प्रत्ययः "गुपू-धूप-विच्छि-पणि—" इत्यादिनाऽऽयप्रत्ययः । न निपुणायते समर्थो न भवति । निपुणशब्दात् "कर्तुः क्यङ् सलोपश्च" इति क्यङ् । तत्रान्येषां का कथा । उपजातिर्वृत्तम् । लक्षणं प्राक् ( ५ श्लोकटीकायां ) कथितम् ॥ ४६ ॥

अथ द्वितीयं 'धिकृत्यैव—' इत्यादिनोक्तं दूषणमपाकरोति—**वालिनीति** । बलस्य सामर्थ्यस्य ( ऊर्मीणां लहरीणां मालाः सन्त्यस्येति तस्मिन् ) ऊर्मिमालिनि समुद्रे अपरिमितबलवतीत्यर्थः । वालिनि जाग्रति विद्यमाने सत्यपि, अयं श्रीरामचन्द्रः, यत् यस्मात् सुग्रीवं अग्रहीत् गृहीतवान् । ग्रहेर्लुङ् । तेन सुग्रीवग्रहणेन अस्य श्रीरामस्य श्रुतीनां शतेन विदितं प्रतिपादितं श्रुतिशते प्रसिद्धमिति वा । दीनानां दुर्बलानां बन्धुत्वं बन्धुवद्धितकारित्वं, सुतरां व्यक्तं स्फुटीभूतं, बभूवेति शेषः । सदाचरणशीलस्य दुर्बलस्यापि बलमुत्पाद्य तत्स्वीकरणं, दुराचरणशीलस्य बलवतोऽपि निग्रहणं च अधिकगुणापादकमेव महतां न दोषापादकमिति भावः । आर्या वृत्तम् । "यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या ।" इति तल्लक्षणात् ॥ ४७ ॥

इदानीं तृतीयं 'कृत्वा सेतुं—'इत्यादिनोक्तं सीतावनवासप्रापणरूपं दूषणमपास्यन्नाह—**लक्ष्मीमिति** । रामस्य दाशरथेराकृतिरवयवसंनिवेश एवाकृतिर्यस्य सः । रामरूपी-

---

१ 'फणायितुं'. २ 'अवितथं'.

वृत्तिं कामपि मानुषीमभिनयन्वीराग्रयायी प्रियाम् ।
कल्याणीं तु वनीमनीनयदहो कस्याप्यमृष्यन्वचो
मेदिन्यामवलोकितः किमपरो मानी पुमानीदृशः ॥ ४८ ॥

वस्तुतस्तु—

गातुं क ईष्टे श्रितरामभद्रान् गणान् गुणानां गणनादरिद्रान् ॥
प्राचेतसाद्याः कवयोऽनवद्या यदेकदेशाकलनेऽपि नेशाः ॥ ४९ ॥

---

त्यर्थः । श्रीपतिर्लक्ष्मीपतिः, अविरतं संततं "सततेऽनारताश्रान्त-संतताविर-तानिशम्" इत्यमरः । लक्ष्मीं वक्षसि हृदये बिभ्रत् धारयन् सन्नपि । 'डुभृञ् धारण-पोषणयोः' इति धातोः शतृप्रत्ययः । "नाभ्यस्तात्–" इति नुमभावः । भगवता हि अवतारे धृते सत्यपि लक्ष्म्या न कदाचिदपि विरह इति द्योतनार्थमविरतशब्दः । तदुक्तं रामायणे—"राघवत्वेऽभवत्सीता विष्णोरेषाऽनपायिनी" इति । कामप्यनिर्वा-च्यां मनुष्यस्येयं मानुषी तां वृत्तिं वर्तनमभिनयन् अनुकुर्वन्, वीराग्रयायी वीर-श्रेष्ठः रामः, कस्यापि अपरिचितस्यानधिगतगुण-शीलस्य, किमुत सच्छील-सद्गुणयु-क्तस्य महत इत्यपिशब्दस्वारस्यात् । वचः अपवादरूपं भाषणं, अमृष्यन् असहमानः सन् । 'मृषु सहने' इत्यस्मात् लटः शत्रादेशः । कल्याणीं पातिव्रत्यादिकल्याण-गुणविशिष्टां प्रियां सीतां, तुरप्यर्थकः । प्रियामपि सीतामित्यर्थः । वनीमरण्यं अनी-नयत् प्रापयामास । 'णीञ् प्रापणे' इति धातोर्णिजन्ताल्लुङ् "णि-श्रि-द्रु-" इत्या-दिना चङ् । तस्मात् अहो! ईदृशः यस्यकस्यापि वचनमसहमानः मानी अभिमान-युक्तः पुमान् अपरोऽन्यः मेदिन्यां पृथिव्यां, अवलोकितः दृष्टः किम्? केनापीति शेषः । अपि तु नैवेत्यर्थः । एतेन यदा श्रीरामचन्द्रः सीतां वनमनयत् तदा स रा-ज्याधिरूढ आसीत् । तदैव च केनचिद्रजकेन रावणसदनस्थितसीतायाः पुनः स्वीकार-संबन्धेन दत्तं दूषणमसहमानः सीतां तत्याज । एवमेव राज्यकर्त्रा पुंसा प्रजानुरञ्जि-तव्या, लोकानां संकटानि परिहर्तव्यानि, स्वकीयोदात्ताचारेण च लोकाः सन्मार्गे प्रवर्तयितव्याः । अन्यथा लोके अनाचारः लोकानां मनःकालुष्यं च स्यात्, तेन च काला-न्तरेण राज्यक्रान्त्यादिरूपानर्थपरंपरा प्राप्नुयादिति सूचितम् । तदुक्तं मनुना–"मोहा-द्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया । सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः ।" इति । भगवता श्रीकृष्णेनाप्येतदेव ज्ञापितम् । तथाहि–"यद्यदाचरति श्रेष्ठस्तत्तदेवे-तरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनु वर्तते" इति "यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् । संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥" इति च । शार्दूलविक्रीडितम् ॥ ४८ ॥

**वस्तुतस्त्विति** । सत्यतया विवेचिते सतीत्यर्थः ।

**गातुमिति** । श्रितः आश्रितः रामभद्रः श्रीरामचन्द्रो यैस्तान् रामचन्द्राधिष्ठिता-

तथापि तदीयगुणार्णवकणैकदेशकोटितमांशकलामात्रमिदमत्रभवता श्रोतव्यम् ॥ १७ ॥

ककुत्स्थकुलपर्यायकलशार्णवकौस्तुभः ॥
कौसल्यासुकृतव्रातकल्पकप्रसवोदयः ॥ ५० ॥

---

निति यावत् । गणनया संख्यया दरिद्रान् रहितान् असंख्येयानित्यर्थः । गुणानां दया-दाक्षिण्यादीनां गणान् समुदायान्, गातुं सविस्तरं वर्णयितुं, कः (पुमान्) ईष्टे स-मर्थो भवति? कोऽपि नैवेत्यर्थः । 'ईश ऐश्वर्ये' इति धातोर्लट् प्रथमपुरुषः । कुत एत-दित्यत आह—**प्राचेतसाद्या इति** । प्राचेतसः वाल्मीकः "प्राचेतसश्चादिकविः स्यान्मैत्रावरुणिश्च सः । वाल्मीकः–" इत्यमरः । आद्यः प्रथमो येषां ते व्यास-वाल्मीक-पराशरप्रभृतय इत्यर्थः । न अवद्याः गर्हणीयाः अनवद्याः अनिन्द्याः प्रशंसनीया इति यावत् । "अवद्य-पण्य-वर्या–" इत्यादिना वदेर्नञुपपदात् यत् । कवयः येषां श्रीरा-मगुणानां एकदेशस्य यत्किंचिल्लेशमात्रस्य आकलनं वर्णनं तस्मिन्नपि न ईशाः न समर्थाः भवन्तीति शेषः । इतरे तु किमुतेत्यर्थः । एतेन श्रीराममाहात्म्यं सामग्र्येण वर्णयितुं ब्रह्मादयो देवा अपि न शक्नुवन्तीति सूचितम् । तदुक्तं श्रीमदध्यात्मरामा-यणे स्वयं ब्रह्मणैव–"श्रीरामचन्द्रमाहात्म्यं कृत्स्नं जानाति शंकरः । तदर्द्धं गिरिजा वेत्ति तदर्द्धं वेद्म्यहं मुने ।" इति । अत्र पूर्ववाक्यस्योत्तरवाक्यार्थहेतुत्वात् काव्य-लिङ्गमलंकारः । इन्द्रवज्रा वृत्तम् । "स्यादिन्द्रवज्रा यदि तौ ज-गौ गः" इति तल्लक्षणम् ॥ ४९ ॥

**तथापीति** । तथापि श्रीरामगुणवर्णनस्याशक्यत्वेऽपि तदीयाः श्रीरामचन्द्रसंब-न्धिनः ये गुणाः सौशील्यादयस्तद्रूपो योऽर्णवः समुद्रस्तस्य कणः लेशः तस्याप्येकदेशः किंचिदंशः तस्यापि कोटितमोंऽशः तस्य कला षोडशभाग एव कलामात्रं "कला तु षोडशो भागः" इति "मात्रं कार्त्स्न्येऽवधारणे" इति चामरः । मात्रशब्देन न त्वेतस्मादधिकं मादृशपामरजनैर्वक्तुं शक्यत इति द्योतितम् । इदं वक्ष्यमाणं अत्रभवता पूज्येन, अथवा अत्र श्रीरामविषये भवता त्वया श्रोतव्यमाकर्ण-नीयम् ॥ १७ ॥

तदेवाहैकोनविंशतिश्लोकैः—**ककुत्स्थेति** । ककुत्स्थकुलं ककुत्स्थकुलशब्दः पर्यायः वाचकान्तरं यस्य अर्थात् ककुत्स्थकुलरूपो यः कलशार्णवः क्षीरसागरः तस्य कौस्तुभः एतन्नामा मणिः, पुनः कौसल्यायाः सुकृतव्रातः पुण्यपुञ्जः स एव कल्पकः कल्पवृक्षः तस्य प्रसवोदयः पुष्पोद्गमः । इत आरभ्य सर्वेषां श्लो-कानां 'रमते मम तेजस्वी रामः कामसमो हृदि' इत्यनेनान्वयः । सर्वत्र रूपकालंकारः अनुष्टुप् वृत्तं च ॥ ५० ॥

---

१ 'कणानामेकदेशलेश'. २ 'काकुत्स्थ'.

प्रौढपङ्क्तिरथागारपरिष्कारहरिन्मणिः ॥
जानकीलोचनद्वन्द्वचकोरानन्दचन्द्रमाः ॥ ५१ ॥
संसारमार्गसंचारश्रान्तच्छायामहीरुहः ॥
सर्वराक्षसवेतालसमुच्चाटनमान्त्रिकः ॥ ५२ ॥
करुणारसकल्लोलकदम्बवरुणालयः ॥
तपोधनजनाकाङ्क्षातटाकनवतोयदः ॥ ५३ ॥
विद्याविहरणोद्यानं विनयास्थानमण्डपः ॥
सौलभ्यप्राभवोत्कर्षसमावेशनिवेशनम् ॥ ५४ ॥
सौजन्यवादान्यकयोः सामानाधिकरण्यभूः ॥
सौमुख्य-मुख्यभवनं सौहार्दैकवितर्दिका ॥ ५५ ॥

**प्रौढेति ।** प्रौढः समर्थो यः पङ्क्तिरथो दशरथः तस्यागारं गृहं तत्र यः परिष्कारोऽलंकारः । अत्र "संपरिभ्यां करोतौ भूषणे" इति सुट् । तस्य हरिन्मणिः मरकतमणिः । जानक्याः सीतायाः लोचनद्वन्द्वं नयनयुगलं तदेव चकोरः चकोरपक्षी तस्य आनन्दकरश्चन्द्रमाः चन्द्रः ॥ ५१ ॥

**संसारेति ।** संसारमार्गे संचारः भ्रमणं तेन श्रान्तानां (जनानां) छायामहीरुहः छायाकारको वृक्षः । सर्वे ये राक्षसा वेतालाः पिशाचविशेषाश्च तेषां समुच्चाटने निवारणे मान्त्रिकः मन्त्रवेत्ता । मन्त्रशब्दात् 'वेत्ति' इत्यस्मिन्नर्थे ठक् प्रत्ययः ॥५२॥

**करुणेति ।** करुणारसस्य दयारसस्य कल्लोलानां महातरङ्गाणां "महत्सूल्लोल-कल्लोलौ" इत्यमरः । कदम्बानि समूहास्तेषां वरुणालयः सागरः । तप एव धनं येषां ते तपोधनास्तपस्विनो मुनयः तेषां जनः समूहः तस्य यदाकाङ्क्षातटाकं इच्छारूपं सरोवरं तस्य नवतोयदः नवीनो मेघः ॥ ५३ ॥

**विद्येति ।** विद्याया विहरणोद्यानं क्रीडोपवनं, विनयस्य आस्थानमण्डपः सभामण्डपः । सौलभ्यं समता च प्रभोर्भावः प्राभवं प्रभुत्वं च तयोरुत्कर्षस्याधिक्यस्य समावेशनिवेशनं सामानाधिकरण्यावच्छेदकमेकाधिकरणमिति यावत् ॥ ५४ ॥

**सौजन्येति ।** सुजनस्य भावः सौजन्यं सज्जनत्वं च वदान्यस्य दातुः भावः वादान्यकम् दातृत्वं "योपधाद्गुरूपोत्तमात्—" इति भावार्थे वुञ्प्रत्ययः । तयोः, सामानाधिकरण्यभूः सहवासस्थलम् । एतद्धि दुर्घटं, यदेकत्र सुजनत्व—दातृत्वयोः सहवास इति । तस्माल्लोकोत्तरत्वमस्य द्योत्यते। सुमुखस्य भावः सौमुख्यं सुमुखत्वं, भावार्थे ष्यञ् । प्रसन्नवदनत्वमिति यावत् । तस्य मुख्यभवनं, सुहृदो भावः सौहार्दं प्रेम तस्य वितर्दिका वेदिका उपवेशनस्थलमिति यावत् । "स्याद्वितर्दिस्तु वेदिका" इत्यमरः ॥ ५५ ॥

१ 'प्राञ्चत्पङ्क्ति'. २ 'सर्वपातकवेताल'. ३ 'पीयूष'. ४ 'तटाकवनतोयदः'. ५ 'विनयस्थान'. ६ 'सौरभ्य'. ७ 'प्रभवोत्कर्ष'. ८ 'निवेशनः'.

अद्भुतोत्साहशक्तीनामसाधारणजीविका ॥[1]
प्रसादलक्ष्म्याः प्रासादः प्रतापस्य[2] परा गतिः ॥ ५६ ॥
प्राणप्रतिष्ठा क्लिष्टानां[3] प्रपन्नानां परायणम् ॥
अनपायसमृद्धीनामवगाहनदीर्घिका ॥ ५७ ॥
जम्भशासनजीवातुर्जन्मगेहं जयश्रियः ॥
दुर्वारघोरदारिद्र्यदर्वीकरखगेश्वरः ॥ ५८ ॥
तत्तादृक्ताटकादेहध्वान्तराजीवबान्धवः ॥
सुबाहुमत्तमातङ्गसंहारवरकेसरी ॥ ५९ ॥
भार्गवाग्रहदावाग्निपरिमार्जननिर्झरः[4] ॥

---

**अद्भुतेति** । अद्भुताः आश्चर्यकारका ये उत्साहा वनवासादिकष्टभाक्त्वेऽपि खेदाप्रदर्शनरूपाः तेषां याः शक्तयः सामर्थ्यानि तेषां, असाधारणा असामान्या जीविका जीवनसाधनम् । न त्वेतादृशः शक्तयः साधारणपुरुषे वस्तुं शक्नुवन्तीति भावः । प्रसादरूपा प्रसन्नतारूपा या लक्ष्मीः संपत् तस्याः, प्रासादः भवनं, प्रतापस्य पराक्रमस्य परा गतिः उत्तमं प्राप्यस्थानम् ॥ ५६ ॥

**प्राणेति** । तथा क्लिष्टानां क्लेशयुक्तजनानां प्राणप्रतिष्ठा प्राणानां स्थितिसाधनं, प्रपन्नानां शरणागतानां परमुत्तममयनमाश्रयस्थानं, तथा अनपाया विनाशरहिताश्च ताः समृद्धयः संपत्तयस्तासां अवगाहनस्य स्नानस्य दीर्घिका वापी "सरो वापी तु दीर्घिका" इत्यमरः ॥ ५७ ॥

**जम्भेति** । जम्भशासनस्य इन्द्रस्य रावणकृतस्थानभ्रंशादित्रासात् मृतप्रायस्येत्यर्थः । जीवातुर्जीवनौषधं, रावणवधात् पुनः स्वस्थानस्थापनात् । तथा जयश्रियः जयसंपत्तेः अथवा जयेन या श्रीः शोभा तस्याः "शोभा-संपत्ति-पद्मासु लक्ष्मीः श्रीरपि गद्यते" इति विश्वः । जन्मगेहं उत्पत्तिस्थानम् । तथा दुर्वारं निवारयितुमशक्यं अत एव घोरं भयंकरं यद्दारिद्र्यं तद्रूपो यो दर्वीकरः सर्पः । "सर्पः पृदाकुर्भुजगः–" इत्यत आरभ्य "दर्वीकरो दीर्घपृष्ठः" इत्यन्तोऽमरः । तस्य खगेश्वरो गरुडः ॥ ५८ ॥

**तदिति** । तत्तादृक्ताटकादेहः स चासौ तादृशः यज्ञादिशुभकर्मप्रध्वंसकः प्रसिद्धः ताटकाया एतदभिधाया राक्षस्याः शरीरं तद्रूपो यो ध्वान्तोऽन्धकारः तस्य राजीवबान्धवः सूर्यः । तथा सुबाहुरूपो यो मत्तमातङ्गः मत्तहस्ती तस्य संहारे विनाशे वरकेसरी महासिंहः "सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः" इत्यमरः ॥ ५९ ॥

**भार्गवेति** । भार्गवस्य परशुरामस्य आग्रहः रामस्य सीतापरिग्रहोत्तरं स्वनगरं प्रति

---

१ एतदर्द्धं क्वचिन्न दृश्यते. २ 'प्रसादस्य'. ३ 'शिष्टानां'. ४ 'परिवर्जन'.

विराधाख्यदुरातङ्कविद्रावणमहौषधम् ॥ ६० ॥

खर-दूषणकिम्पाकखण्डनैकपरश्वधः ॥

दुर्मोचनीचमारीचकीचकप्रबलानलः ॥ ६१ ॥

गृध्रराजस्य नाकादिलोकाक्रमणवर्तनी ॥

कबन्धमयकासारकवलीकरणातपः ॥ ६२ ॥

शबरीचित्तकुमुदशारदज्योत्स्निकोदयः ॥

पावमानियशःकाशप्रकाशशरदागमः ॥ ६३ ॥

---

पुनरागच्छतः मार्गे समन्तान्निरोधः तद्रूपो यो दावाग्निः तस्य परिमार्जने शमने निर्झरः जलप्रवाहः । "उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः ।" इत्यमरः । विराधः इति आख्या नाम यस्य सः विराधनामकराक्षसरूप इति यावत् । दुर्दुष्ट आतङ्को रोगः तस्य विद्रावणे विनाशने महौषधम् ॥ ६० ॥

**खरेति** । खरश्च दूषणश्च तौ एतदाख्यौ राक्षसविशेषौ । एतदुपलक्षणम् । तेन त्रिशिरादिचतुर्दशसहस्रराक्षसग्रहणम् । तद्रूपा ये किम्पाका विषवृक्षाः तेषां खण्डने तोडने एकपरश्वधः असहायः परशुः "द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः" इत्यमरः । एकेनैव कस्यापि साहाय्यमन्तरा सर्वेषां विनाशः कृत इति द्योतनार्थमेक इति विशेषणम् । दुर्मोचः मोक्तुमशक्यः वधं विनेत्यूह्यम् । नीचश्च यो मारीचः राक्षसस्तद्रूपो यः कीचको वेणुस्तस्य प्रबलः प्रचण्डः अनलः अग्निः ॥ ६१ ॥

**गृध्रेति** । गृध्राणां पक्षिविशेषाणां राजा गृध्रराजः जटायुः तस्य "राजाहः—" इत्यादिना टच् समासान्तः । नाकः स्वर्गः आदिः प्रथमो येषां ते ये लोकाः ब्रह्म-वैकुण्ठादयः तेषामाक्रमणस्य गमनस्य वर्तनी एकपदी मार्गः "वर्तन्येकपदीति च" इत्यमरः । कबन्धमयः कबन्धनामकराक्षसरूपः यः कासारः सरः तस्य कवलीकरणे ग्रसने शोषणे इति यावत् । आतपः सूर्यकिरणरूपः ॥ ६२ ॥

**शबरीति** । शबर्याः कस्याश्चित् किरातकुलजाया भक्तायाः चित्तमेव कुमुदं चन्द्रविकासि कमलं तस्य शारदज्योत्स्निकोदयः शरत्कालीनचन्द्रिकोदयः । तथा पवमानस्यापत्यं पुमान् पावमानिर्हनूमान् "अत इञ्" इत्यपत्यार्थे इञ् । तस्य यशः किर्तिरेव काशानि काशकुसुमानि 'मोळ' इति महाराष्ट्रभाषाप्रसिद्धदर्भकुसुमानीति यावत् । —"ऽथो काशमस्त्रियाम् । इक्षुगन्धा पोटगलः पुंसि भूम्नि तु बल्वजाः" इत्यमरः । तेषां प्रकाशे उदये शरदागमः शरदृतुप्रादुर्भावः । अत्र 'पावमानं शीलमस्येति पावमानि अतिशयेन पवित्रं यत् यशः तदेव काशकुसुमं तस्य प्रकाशे विकसने शरदागमः इत्यपि व्याख्येयम्' इत्यत्रैव मुद्रितपुस्तके टिप्पणम् दृश्यते, तदपि साधु ॥ ६३ ॥

---

१ 'दुर्मोचनीय': २ 'कल्हार'.

प्रगल्भवालिजीमूतप्रोत्सारणसमीरणः ॥
सुग्रीवराज्यसामग्री सुदिनं काननौकसाम् ॥ ६४ ॥
दुर्निरोधधुनीनाथजाड्यरोगचिकित्सकः ॥
दुष्टनक्तंचरस्तोमधूमकेतुविजृम्भणम् ॥ ६५ ॥
कुम्भकर्णमदाम्भोधिस्तम्भने कुम्भसंभवः ॥
बलीयोरावणप्राणपाषाणदलनाशनिः ॥ ६५ ॥
विभीषणस्य साम्राज्यविश्राणनसुरद्रुमः ॥
अयोध्यापुरनारीणामक्ष्णोरत्यद्भुतोत्सवः ॥ ६७ ॥

---

**प्रगल्भेति ।** प्रगल्भः प्रौढश्चासौ वालिजीमूतः वालिरूपो मेघः "घन-जीमूत-मुदिर-" इत्यमरः । तस्य प्रोत्सारणे विनाशे समीरणः वायुः "समीर-मारुत-मरुज्जगत्प्राण-समीरणाः" इत्यमरः । सुग्रीवस्य राज्यस्य सामग्री साहित्यसमृद्धिः' काननमरण्यमेवौकः स्थानं येषां ते काननौकसः संततं वननिवासिनो वानरा इत्यर्थः । तेषां सुदिनं उत्साहदिवसः ॥ ६४ ॥

**दुर्निरोधेति ।** दुर्निरोधः रोद्धुमशक्यश्चासौ धुनीनाथः समुद्रः तस्य जडस्य मूढस्य भावः जाड्यं मूढत्वं "गुणवचन-ब्राह्मणादिभ्यः-" इति भावार्थे ष्यञ् । अथवा डलयोः सावर्ण्यात् जलस्य भावः जाल्यमिति विग्रहः । तदेव रोगः तस्य चिकित्सकः वैद्यः । "भिषग्वैद्यौ चिकित्सके" इत्यमरः । स्वसामर्थ्यप्रदर्शनपूर्वकं सागरस्य 'अहमेव महान् दुस्तरश्च' इत्यादिरूपं जाड्यमपाहरदित्यर्थः । तथा दुष्टाः ये नक्तंचरा राक्षसास्तेषां स्तोमस्य समूहस्य धूमकेतुः उत्पातसूचकं नक्षत्रं, तद्वत् विजृम्भणं भयप्रदर्शनम् ॥ ६५ ॥

**कुम्भकर्णेति ।** कुम्भकर्णस्य मद एव अम्भोधिः समुद्रः तस्य स्तम्भने प्रतिष्टम्भे नाशने इत्यर्थः । कुम्भसंभवः अगस्त्यः । बलीयानतिशयेन बलवान् यो रावणप्राणः स एव पाषाणः शिला तस्य दलने भेदने अशनिः वज्रम् । "-वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः । शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ।" इत्यमरः ॥ ६६ ॥

**विभीषणेति ।** विभीषणस्य रावणभ्रातुः स्वभक्तस्य सम्राजो भावः साम्राज्यं मण्डलाधिपत्यमिति यावत् । "येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्" इत्यमरः । तस्य विश्राणने दाने "-दानमुत्सर्जनविसर्जने । विश्राणनं वितरणम्" इत्यमरः । सुरद्रुमः कल्पतरुः । अयोध्यापुरनारीणां अयोध्यानगरवासिस्त्रीणां अक्ष्णोः नयनयोः अत्यद्भुतः अतिचमत्काररूपः उत्सवः आनन्दः ॥६७॥

---

१ 'महाम्भोधि'.   २ 'दलने', 'दलनापविः'.

अभिषिक्तो यथावच्च वसिष्ठाद्यैर्महर्षिभिः ॥
रमते मम तेजस्वी रामः कामसमो हृदि ॥ ६८ ॥

अत्र किल पवित्रचरितः कश्चिद्विपश्चिदजस्रमित्थमनुसंधत्ते ॥ १८ ॥

ध्यायामि राममभिरामगिरा मरन्द-
धारामदघ्नमितराममरेर्विरामम् ॥
आराममद्भुततरामलसद्गुणानां
घोरामयघ्नमसुरामरवन्दिताङ्घ्रिम् ॥ ६९ ॥

---

**अभिषिक्त इति ।** अपि च महर्षिभिः वसिष्ठाद्यैर्वसिष्ठ–विश्वामित्रादिभिः, यथावत् शास्त्रविधिमनुसृत्य, राज्ये इति शेषः । अभिषिक्तः, एतादृशः कामसमः मदनतुल्यः तेजस्वी प्रशस्ततेजोयुक्तः "अस्-माया-मेधा–" इत्यादिना मत्वर्थे विनिप्रत्ययः । रामः मम हृदि रमते क्रीडति । अहं तावत् भक्त्यादिसाधनैः सकलप्राणिहृदयनिवासिनं तं जानामीति भावः । अत्र तावत् 'ककुत्स्थकुलपर्याय–' इत्यादिभिरेकोनविंशति-श्लोकैः श्रीरामजन्मन आरभ्य रावणवधोत्तरं पुनरयोध्यामागत्य राज्याभिषेकपर्यन्तः श्रीरामायणकथार्थः सूचितः ॥ ६८ ॥

एवं समग्रं श्रीरामचरितमुक्त्वा तत्स्तवने विद्वदनुमतिं प्रदर्शयति—**अत्रेति ।** अत्र श्रीरामविषये पवित्रं चरितमाचरणं यस्य तथाभूतः कश्चिद्विपश्चित् एतद्ग्रन्थ-कर्ता वेङ्कटाध्वरिनामा पण्डित इत्यर्थः । अजस्रं सततं "सततेऽनारताश्रान्त-संतताविरतानिशम् । नित्यानवरताजस्रम्–" इत्यमरः । इत्थं वक्ष्यमाणप्रकारेण "इदमस्थमुः" इतीदंशब्दात् प्रकारार्थे थमुप्रत्ययः । अनुसंधत्ते अनुसंदधाति उच्चारयतीत्यर्थः । किलेति निश्चयेन ॥ १८ ॥

यदनुसंधत्ते तदेवाह—**ध्यायामीति ।** अभिरामा मनोहरा चासौ गीर्वाक् च तया वाङ्माधुर्येणेति यावत् । मन्दरस्य मकरन्दस्य "मकरन्दः पुष्परसो मरन्दोऽपि नि-गद्यते" इति कोशः (?) धाराया मदं हन्तीति मदघ्नः तं, मकरन्दमाधुर्यमपि तुच्छीकुर्वन्तमित्यर्थः । मदघ्नमित्यत्र हन्तेः मूलविभुजादेराकृतिगणत्वात् कप्रत्ययः । "हो हन्तेः" इति कुत्वम् । तदुक्तम् सिद्धान्तकौमुद्याम् "अमनुष्यकर्तृके च" इति हन्तेष्टग्विधायके सूत्रे—'अथ कथं 'बलभद्रः प्रलम्बघ्नः' 'कृतघ्नः' 'शत्रुघ्नः' इत्यादि । मूलविभुजादित्वात्सिद्धम्' इति । अरेः एतज्जातावेकवचनम् । शत्रूणामित्यर्थः । विरामं नाशकम् । अत एव इता प्राप्ता रामा सीता येन तम् । सीतापहारकरावणादिशत्रुविनाशात् प्राप्तस्त्रीकमित्यर्थः । अतिशयेन अद्भुताः आश्चर्यावहाः अद्भुततराः, अतिशायने तरप् । च अमलाः निर्मलाश्च ते सद्गुणाः लोकत्रासावहशत्रुनिराकरण–लोकसुखोत्पादनादिरूपाः सुन्दरगुणास्तेषाम् । अद्भुततरत्वममलत्वं चैतद्विशेषणद्वयं गुणानां, न केवलमाश्चर्योत्पाद-

---

१ एतदर्द्धं क्वचिन्न दृश्यते.

दयासमुदयालये मुदधिकानने कानने
पलाशनपलायनप्रणयिकार्मुके धार्मिके ॥
समीरजसमीडिते प्रविश चित्त मे सत्तमे
बलीकृतवलीमुखे मनुजधर्मिणि ब्रह्मणि ॥ ७० ॥

अस्त्रामास तृणं प्रियाद्रुहि तृणाभास स्मरारेर्धनु—
र्दारामास मुनेः शिलाऽपि नृवरामास स्वयं पादुका ॥

---

का एव गुणाः किंतु निर्मलाः कुत्रापि दूषणोत्पादनानर्हाः इतरलोकानुकरणार्हाश्च इति यावत् । अन्यथा केवलं गुणानामाश्रयीवहत्वं दुष्टानां रावण-कुम्भकर्णादीनामपि वर्तते इति द्योतनार्थम् । तादृशगुणानां आरामं उपवनं, सकललोकानां सुखशान्त्युत्पाद-कत्वेनारामसादृश्यम् । घोरा भयंकराश्च ते आमयाः संसारसंबन्धिनो रोगाश्च तान् हन्ति विनाशयतीति घोरामयघ्नं "घोरं भीमं भयानकम्" इति "रोग-व्याधि-गदामयाः" इति चाप्युभयत्रामरः । जन्म—जरा—मरणादिसकलप्रापञ्चिकदुःख-निवारकमित्यर्थः । असुरा दैत्याश्च अमरा देवाश्च तैर्वन्दितौ अङ्घ्री चरणौ यस्य तथाभूतम् । रामं ध्यायामि मनसि चिन्तयामि । इन्द्रवज्रावृत्तम् । लक्षणमुक्तं प्राक् ( ४९ श्लोकटीकायाम् ) ॥ ६९ ॥

**दयेति** । दयायाः समुदयस्य समुदायस्य "समुदायः समुदयः" इत्यमरः । आलयं स्थानं तस्मिन् । काननेऽरण्ये वनवासे सत्यपीत्यर्थः । मुदा आनन्देन "मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोद—संमदाः । स्यादानन्दथुरानन्दः—" इत्यमरः । अधिकं उल्लासयुक्तं आननं मुखं यस्य तस्मिन् । पलं मांसं "अधः—स्वरूपयोरस्त्री तलं स्याच्चामिषे पलम्" इत्यमरः "पलमुन्मानमांसयोः" इति रुद्रश्च । अशनं भक्षणं येषां ते पलाशना राक्षसास्तेषां पलायने विद्रावणे प्रणयि परिचययुक्तं समर्थमिति यावत् । कार्मुकं धनुः यस्य तस्मिन्, धर्मं चरतीति धार्मिकः तस्मिन् "धर्मं चरति" इति ठञ् । बलीकृताः शक्तियुताः कृताः वलीमुखा वानरा येन तस्मिन् । "कपि-प्लवङ्ग-प्लवग-शाखामृग-वलीमुखाः । मर्कटो वानरः कीशः" इत्यमरः । समीरात् वायोः जात उत्पन्नः समीरजो मारुतिस्तेन समीडितः स्तुतः तस्मिन् । मनुजधर्मिणि लीलार्थं मनुष्यधर्मवति, वस्तुतस्तु ब्रह्मणि ब्रह्मस्वरूपे सत्तमे अतिशयसाधौ श्रीरामे इत्यर्थः । हे मे चित्त मन्मानस, प्रविश प्रवेशं कुरु तं भजेत्यर्थः । पृथ्वी वृत्तम् । लक्षणं पूर्वोक्तम् ( १२ श्लोकटीकायां कथितम् ) ॥ ७० ॥

किंच—**अस्त्रामासेति** । हे भगवन् श्रीरामचन्द्र, प्रियायै सीतायै द्रुह्यतीति ध्रुक् तस्मिन् सीताचरणाङ्गुष्ठभेदके ऐन्द्रकाके इत्यर्थः । तृणं दर्भखण्डं अस्त्रामास अस्त्रवदाचचार । अस्त्रशब्दात् "कर्तुः क्यङ्—" इति सूत्रस्थेन "आचारेऽवगल्भ—" इत्यादिवार्तिकात् 'आचारे' इत्यनुवर्तमाने सति "सर्वप्रातिपदिकेभ्यः क्वि-

कुल्यामास महार्णवोऽपि कपयो योधांबभूवुस्तदा
पौलस्त्यो मशकांबभूव[1] भगवंस्त्वं मानुषामासिथ[2] ॥ ७१ ॥

अशिलाप्राणदपदैर्[3]चराचरमुक्तिदैः ॥
असर्वभूताभयदैरशर्वधनुरर्दनैः ॥ ७२ ॥

अब्रह्मास्त्रीकृततृणैरतृणीकृतरावणैः ॥
अलं कातरदेवैस्तैरलङ्कापुरसाधकैः ॥ ७३ ॥

---

च्वा वक्तव्यः" इति वार्तिकेनाचारक्किपि तदन्तस्य धातुत्वात् तस्माल्लिड्विवक्षायां च तस्मिन् परे अनेकाच्त्वादामि अस्तेरनुप्रयोगः, क्वचिद्भवतेरपि। एवमग्रेऽप्यूह्यम्। तथा सीतास्वयंवरप्रसङ्गे इति शेषः। स्मरारेः शिवस्य धनुः तस्मिन् समये पणीकृतमित्यर्थः। तृणामास तृणवदाचचार। तत्रभवता तृणवद्भग्नमित्यर्थः। शिलाऽपि दृषदपि मुनेर्गौतमस्य दारामास स्त्री बभूव। पादुका, भवतः इत्यर्थः। स्वयं नृणां मनुष्याणां वरः श्रेष्ठः "देवाद्वृते वरः श्रेष्ठे" इत्यमरः। राजा तद्वत् आचचारेति नृवरामास। वनवासगमनप्रसङ्गे भरताग्रहात् तस्मै समर्पितेत्यर्थः। भरतेनापि श्रीरामागमनपर्यन्तं राज्यं पादुकायां निवेद्य स्वयं प्रधानवत् आचरितमिति प्रसिद्धिः। तथैव महार्णवः समुद्रः अपि कुल्यामास अल्पा सरिदिव बभूव। "कुल्याल्पा कृत्रिमा सरित्" इत्यमरः। श्रीरामस्य लङ्कागमनसमये तत्कोपाद् भीतः समुद्रः क्षुद्ररूप आसीदिति श्रीरामायणे। तथा कपयो वानराः योधांबभूवुः योद्धारः बभूवुः। "भटा योधाश्च योद्धारः।" इत्यमरः। पुलस्त्यस्य विश्रवसः अपत्यं पौलस्त्यो रावणः मशकांबभूव मशकवदास। युद्धे मशकवदनायासेन पराभूत इत्यर्थः। त्वं श्रीरामश्च मानुषामासिथ मनुष्यवदाचेरिथ। शार्दूलविक्रीडितं वृत्तम् ॥ ७१ ॥

एवं चैतादृशमहाप्रभावत्वाद्यदि भजनीयः स्यात्तर्हि श्रीराम एवेति द्योतयन्नेतत्प्रकरणं (अयोध्यावर्णनं) उपसंहरति—**अशिलेति**। श्लोकद्वयस्यैकान्वयः। प्राणं जीवनं ददातीति प्राणदं शिलायाः अहल्यारूपायाः प्राणदं जीवनप्रदं उद्धारकमिति यावत्। तादृशं पदं चरणः न भवति येषामित्यशिलाप्राणदपदास्तैः। तथा चराचराणां स्थावरजङ्गमानां मुक्तिदाः कैवल्यप्रदाः न भवन्तीति तथाभूतैः। तथा सर्वभूतानां प्राणिनां अभयदाः न भवन्ति तैः। शर्वस्य शिवस्य "शिवः शूली महेश्वरः। ईश्वरः शर्व ईशानः" इत्यमरः। धनुषः अर्दना भञ्जकाः न भवन्तीति तथा तैः। तथा ब्रह्मास्त्रमिव न कृतं तृणं यैस्तैः, न तृणीकृतः तृणवत्तुच्छीकृतः रावणः यैस्तैः, अत एव न साधितं लङ्कापुरं लङ्कानगरी यैस्तथाभूतैश्च अत एव कातरा भीरवश्च "अधीरे कातरस्त्रस्ते भीरु-भीरुक-भीलुकाः" इत्यमरः। ते देवाश्च तैः। अलं कृतम्। ये तावदुपरिवर्णितानि लोकोपकारभूतानि कार्याणि कर्तुं न शक्नुवन्ति ते देवा मा सन्त्वित्यर्थः। अनुष्टुप् ॥ ७२ ॥ ७३ ॥

---

१ 'मशकी'. २ 'मासिथाः'. ३ 'परै'.

## अथ गङ्गानदीवर्णनम् ६.

इति विमानं दक्षिणतः प्रस्थाप्य **कृशानुमुद्दिश्य**—

शिथिलितभवखेदा श्लिष्टवैकुण्ठपादा
कृतविपदपनोदा क्लृप्तचित्तप्रसादा[1] ॥
विमलतरतरङ्गा विश्रुताम्भोधिसङ्गा[2]
विहितदुरितभङ्गा वीक्ष्यतामत्र गङ्गा ॥ ७४ ॥

**कृशानुः**—उपेक्षणीयानि भागीरथीयानि पानीयानि किमिति वीक्षणीयानि? ॥ १९ ॥

**यतः**—

येषां जनिश्चरणतस्तु हिरण्यहर्तु-
र्दोषाकरेण गुरुदारविटेन मूर्ध्नि[3] ॥

---

**इति विमानं** दक्षिणतः दक्षिणस्यां दिशि, 'दक्षिणोत्तराभ्यामतसुच्' इत्यतसुच् । प्रस्थाप्य नीत्वा **कृशानु**मुद्दिश्य, आहेति शेषः ।

**शिथिलितेति ।** शिथिलतः विनाशितः भवस्य संसारस्य खेदः दुःखं यया तादृशी । श्लिष्टौ आलिङ्गितौ आश्रिताविति यावत् । वैकुण्ठस्य विष्णोः पादौ यया तथाभूता । कृतः विपदां आपत्तीनां अपनोदो निवारणं यया तथाभूता । पुनश्च क्लृप्तः रचितः चित्तस्य प्रसादः प्रसन्नता यया तादृशी । यस्या दर्शनमात्रेणैव मनः-संतोषो जायते इत्यर्थः । विमलतराः अतिशयेन निर्मलास्तरङ्गा वीचयो यस्याः सा तथाभूता । "भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु" इत्यमरः । विश्रुतः प्रसिद्धः अम्भोधेः समुद्ररूपस्य पत्युः सङ्गः संगतिर्यस्याः सा । अत एव विहितः कृतः दुरितानां पापानां भङ्गः विनाशो यया तथाभूता च । अत्रास्मिन्स्थले गङ्गा भागीरथी नदी वीक्ष्यतां दृश्यतां, त्वयेति शेषः । मालिनी वृत्तम् । लक्षणमुक्तं प्राक् ( ३५ श्लोकटीकायाम् ) ॥ ७४ ॥

अथाह **कृशानुः—उपेक्षणीयानीति ।** उपेक्षितुं तिरस्कर्तुं योग्यानि उपेक्षणीयानि भागीरथीयानि गङ्गासंबन्धीनि पानीयान्युदकानि किमिति कुतो हेतोः वीक्षणीयानि अवलोकनीयानि? अत्रोपेक्षणीयानीत्यस्य 'उप समीपे ईक्षणीयानि दर्शनीयानि' इति श्लिष्टार्थो मुद्रितपुस्तके मधुरसुब्बाशास्त्रिविरचितटीकायामुपलभ्यते । परं च स न युक्तः । 'वीक्षणीयानि' इत्यग्रिमपदेनैव तदर्थलाभात् पुनरपि तथैवार्थकरणे श्लेषस्वरसाभावात् पुनरुक्तिदोषापत्तेश्च ॥ १९ ॥

वीक्षणीयत्वाभावमेव दर्शयति—**यतः—येषामिति ।** येषां गङ्गायाः इमानि

---

१ 'प्रमोदा'. २ 'विस्तृताम्भोधिसङ्गा'. ३ 'मौलौ'.

ब्रह्मोत्तमाङ्गभिद एव सहस्थितिश्च
ख्यातो लयो जलनिधौ किल गाङ्गवाराम् ॥ ७५ ॥

**विश्वा०**—शान्तं पापम्[1]। मन्दमते किं मुकुन्दपादारविन्दनिष्यन्दि[2]नीं धुनीमपि निन्दसि[3]? ॥ २० ॥

---

गाङ्गानि तादृशानि च वारि उदकानि च तेषां, "आपः स्त्री भूम्नि वार्वारि" इत्यमरः। गङ्गोदकानामित्यर्थः। जनिरुत्पत्तिस्तु " जनिरुत्पत्तिरुद्भवः " इत्यमरः । हिरण्यहर्तुः सुवर्णचोरस्य चरणतः आचरणात्, जातेति शेषः। तथा ब्रह्मणः ब्राह्मणस्य उत्तमाङ्गं शिरः। "उत्तमाङ्गं शिरः शीर्षं" इत्यमरः। भिनत्ति छिनत्तीति उत्तमाङ्गभित् तस्य ब्रह्महन्तुरित्यर्थः । मूर्ध्नि मस्तके " मूर्धा ना मस्तकोऽस्त्रियाम् " इत्यमरः। गुरोर्व्यापकस्य दाराणां भार्यायाः विटेन जारेण " भार्या जायाऽथ पुंभूम्नि दाराः " इत्यमरः। " विटोऽद्रौ लवणे षिङ्गे (जारे) मूषिके खदिरेऽपि च" इति मेदिनी च। अत एव दोषाणां आकरेण उत्पत्तिस्थानेन सह स्थितिः वासश्च। तथा लीयते एकीभूयते अनेनेति लयः मैत्रीति यावत्। जलानां डलयोः सावर्ण्यात् जडानां मद्यपानेन मत्तानां निधौ समुदाये, ख्यातः प्रसिद्धः एव। किलेत्यैतिह्ये । अनेन भागीरथीजलानां पञ्चमहापातकवत्त्वं सूचितम्। तथा चाह मनुः—" ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुः संसर्गश्चापि तैः सह" इति । अयमर्थस्त्वापाततः। वास्तवस्तु येषां गाङ्गवारां जनिः प्रादुर्भावः, हिरण्यहर्तुर्हिरण्यकशिपुनामकदैत्यस्य हन्तुः। नामैकदेशेन नामग्रहणात् हिरण्यशब्देन हिरण्यकशिपुग्रहणम्। विष्णोरिति यावत्। चरणतः पादात्, ब्रह्मणः ब्रह्मदेवस्योत्तमाङ्गं पञ्चमशिरः तद्भिनत्ति छिनत्तीति तथाभूतस्य शिवस्येत्यर्थः। शिवेन हि ब्रह्मणः पञ्चमशिरश्छिन्नमिति पुराणप्रसिद्धिः। मूर्ध्नि, गुरुदारविटेन बृहस्पतिपत्नीविटेन दोषाकरश्चन्द्रः तेन सह स्थितिश्च ख्याता। जलनिधौ समुद्रे च लयः ख्यातः इति। एवं च विष्णुचरणोत्पत्त्या, शिवमस्तके चन्द्रेण सह स्थित्या च परमपावनत्वं गङ्गाजलानां सूचितमिति ज्ञेयम् । अत्र श्लेषमूलका व्याजस्तुतिर्ज्ञेया । मुखनिन्दायाः स्तुतौ पर्यवसानात् । तदुक्तम्— " व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा" इति। अतः परं पूर्वकथितवृत्तानां नामलक्षणं नैवोच्यते ॥ ७५ ॥

एवं **कृशानू**क्तं निन्दनमसहमान आह **विश्वावसुः—शान्तमिति**। शान्तं पापं पापवचनं नोच्चारणीयमित्यर्थः । हे मन्दमते मन्दबुद्धे, मुकुन्दस्य श्रीकृष्णस्य पादारविन्दाच्चरणकमलात् निष्यन्दिनीं प्रस्रवन्तीं, अनेन तस्याः परमपावित्र्यं सूचितम्। धुनीं गङ्गानदीमपि किं कस्माद्धेतोः निन्दसि? ॥ २० ॥

---

१ एतत् क्वचित्पुस्तके नैव दृश्यते. २ 'मरन्दधारा'. ३ 'विनिन्दयसि'.

पश्य—

गाङ्गानि वारि गरुडध्वजपादपद्मा-
दाविर्बभूवुरपुनन् पुनरिन्दुमौलिम् ॥
निन्युर्विचित्रममृतं सगरान्वयं च
[1]नेतोऽधिकं भुवि पवित्रतमं समं वा ॥ ७६ ॥

किंच—

सा सर्वतोमुखवती तटिनी सरागां
मूर्तिर्विधेरिव बिभर्ति सरस्वतीं च ॥
भेदस्त्वियान् बलिभिद[2]श्चरणारविन्दा-
दाद्या बभूव चरमा किल नाभिपद्मात् ॥ ७७ ॥

---

निन्दानर्हत्वमेव प्रतिपादयति—**गाङ्गानीति** । गाङ्गानि गङ्गासंबन्धीनि वारि जलानि, रेफान्तोऽयं वार्शब्दः । गरुडः ध्वजे यस्य तस्य विष्णोरित्यर्थः । पादपद्माच्चरणकमलात्, आविर्बभूवुः प्रकटीबभूवुः । नैतावदेव, अपि तु इन्दुश्चन्द्रः "चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः" इत्यमरः । मौलौ मस्तके यस्य तं शंकरमित्यर्थः । अपुनन् पवित्रीचक्रुः । कालकूटदाहं शमयामासुरित्यर्थः । 'पूञ् पवने' इत्यस्मात् धातोर्लङ् प्रथमपुरुषबहुवचनम् । अपि च विचित्रं कपिलमहामुनिशापात् अधोगतिरूपविचित्रदशापन्नं, सगरस्य राज्ञोन्वयं वंशं च "संततिर्गोत्र-जनन-कुलान्यभिजनान्वयौ । वंशोऽन्ववायः" इत्यमरः । अमृतं मोक्षं निन्युः प्रापयामासुः । तस्मात् उपर्युक्तप्रभावात्, इतः गङ्गाजलेभ्योऽधिकं, इत इत्यत्र सार्वविभक्तिकस्तसिः । भुवि पवित्रतममतिशयपवित्रं वाथवा समं तुल्यमपि न । अस्तीति शेषः । अपि तु अन्यानि सर्वाण्यपि तीर्थानि न्यूनान्येवेति भावः ॥ ७६ ॥

**किंच—सेति** । सर्वतोमुखवती प्रशस्तजलयुक्ता, प्राशस्त्ये मतुप् । "पुष्करं सर्वतोमुखम्" इत्यमरः । यद्वा सर्वतः स्वर्ग-पाताल-भूलोकेषु मुखानि प्रवाहरूपेण प्रसरणानि यस्याः सा तथाभूता "मुखं निःसारणे वक्त्रे प्रारम्भोपाययोरपि" इति मेदिनी । पक्षे सर्वतश्चतुःपार्श्वेषु मुखानि यस्याः सा तथाभूता च । सा प्रसिद्धा तटिनी नदी भागीरथीत्यर्थः । "तटिनी ह्रादिनी धुनी" इत्यमरः । विधेः ब्रह्मणः मूर्तिर्देह इव रागेण रक्तिम्ना अनुरागेण च । "रागोऽनुरागे लाक्षादौ मात्सर्यालोकयोरपि" इति वैजयन्ती । सहिता युक्ता तां सरस्वतीं नाम नदीं, वाणीं च "ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती" "चन्द्रभागा सरस्वती" इत्युभयत्राप्यमरः । बिभर्ति धारयति । उभयोर्भेदमाह—**भेद इति** । उभयोर्भागीरथीब्रह्ममूर्त्योः आद्या प्रथमा भागीरथी, बलिं भिनत्तीति बलिभिद्विष्णुस्तस्य "सत्सू"—इत्यादिना क्विप् । चरणारविन्दात्

---

१ 'नातोऽधिकं'. २ 'बलिजितः'.

अपि च—

भागीरथीं प्राप्य बुधाः पितृभ्यो
जलाञ्जलिं सादरमर्पयन्ति ॥
पापानि सर्वाणि ततः पितॄणां
भवन्त्यहो दत्तजलाञ्जलीनि ॥ ७८ ॥

अन्यच्च—

भागीरथीं यः पटुधीरुपास्ते
यथाक्रतुन्यायत एष धन्यः ॥
देवत्वमेत्य त्रिदिवे सुधायां
भागी रथीति व्यपदेशमेति ॥ ७९ ॥

---

चरणकमलात् बभूव उत्पन्ना । चरमा अन्त्या ब्रह्ममूर्तिरित्यर्थः । नाभिपद्मान्नाभिकमलात् बभूव । इयानेव तु भेदः । किलेति निश्चये । उपमालंकारः ॥ ७७ ॥

नैतावदेव, अन्यदपि तन्महित्वं शृण्वित्याह—**अपि चेति—भागीरथीमिति।** बुधाः पण्डिताः शास्त्रतस्तन्माहात्म्याभिज्ञा इत्यर्थः । भागीरथीं प्राप्य गत्वा, पितृभ्यः जलाञ्जलिमुदकाञ्जलिं आदरेण पूज्यभावेन सहितं यथा स्यात्तथा अर्पयन्ति ददति । एवं कृते किं भवति तदाह—**तत इति।** ततः उदकाञ्जलिसमर्पणात्, पितॄणां सर्वाणि पापानि दुरितानि, दत्तः समर्पितः जलाञ्जलिरुदकाञ्जलिः 'अद्यप्रभृति पितॄणामस्माकं च न कोऽपि संबन्धः' इत्युक्त्वा जलनिक्षेपो यैस्तथाभूतानि भवन्ति । अर्थात् अञ्जलिसमर्पणक्षण एव पितॄणां सर्वाणि पापानि नश्यन्तीति भावः । अहो इति विस्मये ॥ ७८ ॥

अन्यदप्याह—**भागीरथीमिति।** यः पट्वी कुशला धीर्बुद्धिर्यस्य सः "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्—" इत्यादिना पटुशब्दस्य पुंवद्भावः । भागीरथीं गङ्गां उपास्ते सेवते भजते इति यावत् । उपपूर्वकस्य 'आस उपवेशने' इत्यादादिकस्य लटि रूपम् । अत एव धन्यः पुण्यवान् "सुकृती पुण्यवान् धन्यः" इत्यमरः । एषः भागीरथ्युपासकः । यथाक्रतुन्यायतः क्रतुन्यायमनतिक्रम्य क्रत्वनुष्ठायीवेति यावत् । देवत्वं देवरूपमेत्य प्राप्य, त्रिदिवे स्वर्गे, सुधायां अमृतमध्ये इत्यर्थः । भागी भागवान्, रथी रथयुक्तः विमानयुक्त इति यावत् । इत्येवंरूपं व्यपदेशं व्यवहारं एति प्राप्नोति । अर्थात् भागीरथीं संसेव्य स्वर्गे लोके देवस्वरूपं संपाद्य विमानेन संचरतीति ज्ञेयम् ॥ ७९ ॥

---

१ 'सुराणां'.

किंच—

सरस्वत्याऽऽश्लिष्टा सवितृतनयालिङ्गितझरा
स्फुरद्गुच्छस्वच्छा प्रकृतिरिव भाति त्रिगुणभाक् ॥
तथाप्येषा दोषापनयनपटुः[1] स्वाकलनया
प्रगल्भं संसारं प्रशमयति कंसारिपदभूः ॥ ८० ॥

किंच—

गाम्भीर्येण गदाधरस्य हृदयं माधुर्यतस्तद्गिरं
श्वैतिम्ना च यशस्तदीयमनघं शैतल्यतस्तत्कृपाम् ॥

---

**सरस्वत्येति** । किंच कंसारेः श्रीविष्णोः पदाच्चरणाद्भवति उत्पद्यते इति कंसारिपदभूः श्रीकृष्णचरणकमलोत्पन्ना भागीरथीत्यर्थः । सरस्वत्या रक्तया नद्या आश्लिष्टा आलिङ्गिता कृतसंगमेति यावत् । तथा सवितृतनया सूर्यकन्या यमुनाभिधा नीलवर्णा नदी तया आलिङ्गितः संगतः झरः प्रवाहो यस्याः सा तथाभूता । यमुनाप्रवाहसंगमित्यर्थः । स्वतस्तु स्फुरन् प्रफुल्लितः यः गुच्छः पुष्पस्तबकः स इव स्वच्छा शुभ्रवर्णा एषा पुरोदृश्यमाना गङ्गा, त्रीन् गुणान् सत्त्वरजस्तमोरूपान्, पक्षे शुक्ल–रक्त–कृष्णवर्णान् भजतीति तथाभूता । प्रकृतिरिव प्रपञ्चोत्पादिका मायेव भाति केवलं उपरितनरूपेण दृश्यते । भगवन्मायाया हि "अजामेकां लोहित-शुक्ल-कृष्णां" इत्यादिश्रुत्या "दैवी ह्येषा गुणमयी मम माया दुरत्यया" इति भगवद्गीतया च त्रिगुणत्वं प्रतिपादितम् । अन्ततस्तु न तथा, कुतः तदाह—**तथापीति** । यद्यपि त्रिगुणात्मिकेव भाति, तथापि दोषाणां प्रापञ्चिकदुःखानां अपनयने निवारणे पटुः समर्था । पटुशब्दात् "वोतो गुणवचनात्" इति विकल्पात् ङीषभावः । एषा भागीरथी स्वस्याः आकलनया सेवया, प्रगल्भं प्रौढं विस्तृतमिति यावत् । संसारं जन्म–जरा-मरणादिरूपं प्रशमयति विनाशयति । प्रकृतिस्तु संसारं जनयतीति भावः । तस्मादतुलमाहात्म्यवतीयमित्यर्थः ॥ ८० ॥

किंच इयं तावत्सर्वचेष्टितैः श्रीविष्णुमेवानुसरतीत्याह—**गाम्भीर्येणेति** । तस्य गदाधरस्य श्रीविष्णोरिति यावत् । पदाच्चरणात् भवन्ति उत्पद्यन्ते इति तत्पदभुवः । सर्वनाम्नः प्रकृतपरामर्शकत्वात् तच्छब्दस्य गदाधरपदेन संबन्धः । इमे पुरोवर्तिनः वारां जलानां राशिः समुदायः समुद्रस्तस्य दाराः पत्नी गङ्गेत्यर्थः । दाराशब्दस्य पुंसि नित्यं बहुवचनत्वात् । "भार्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी" इत्यमरः । वाराशिरित्यत्र 'वार् राशिः' इति स्थिते "रो रि" इति रेफस्य लोपः । गम्भीरस्य निम्नस्य भावः गाम्भीर्यं अगाधत्वमिति यावत् । "निम्नं गभीरं गम्भीरं" इत्यमरः । तेन गदाधरस्य विष्णोः हृदयमन्तःकरणं, इत आरभ्य 'गिरम्' 'यशः' इत्यादिसर्वपदानां 'अनुसरति' इत्यनेनान्वयः । माधुर्यतः स्वादुतया,

---

१ 'पटुत्वाकलनया'.

नैर्मल्यातिशयेन तस्य धिषणां नित्यं प्रसादेन त–
द्वक्त्रं चानुसरन्ति तत्पदभुवो वाराशिदारा इमे ॥ ८१ ॥

---

## अथ काशीवर्णनम् ७.

इति बद्धाञ्जलिरग्रतोऽवलोक्य सानन्दम्—
काशी सकाशीभवदिन्द्रगेहसौधाग्रभागा बहुसप्तिनागा ॥
इन्धे मयूखैरियमन्धकारव्युत्पत्तिशून्या शिवशेखरेन्दोः ॥ ८२ ॥

---

तृतीयार्थे तसिः । तस्य विष्णोः गिरं वाणीं, श्वेतस्य शुक्लस्य भावः श्वेतिमा शुक्लत्वेनेत्यर्थः । "वर्ण-दृढादिभ्यः–" इति भावार्थे इमनिच् । तदीयं श्रीविष्णुसंबन्धि अनघं निर्मलं, यशः कीर्तिं, शैत्यतः शीतलत्वेन, 'गुणवचनब्राह्मणादिभ्यः–' इति ष्यञ् प्रत्ययः । तस्य कृपां, नैर्मल्यस्य निर्मलत्वस्य अतिशयेनोत्कर्षेण तस्य विष्णोः धिषणां बुद्धिं "बुद्धिर्मनीषा धिषणा" इत्यमरः । नित्यं प्रसादेन प्रसन्नतया, तस्य भगवतो वक्त्रं मुखं च अनुसरन्ति अनुकुर्वन्ति । एवं च पूर्वोक्तसकलोदात्तगुणविशिष्टत्वाद्भगवती भागीरथी दोषशल्यमपि नार्हति, किंतु संततप्रशंसामेवार्हतीति सूचितमिति भावः ॥ ८१ ॥

एवं भागीरथीं स्तुत्वा तन्निवासस्थानभूतां काशीं वर्णयितुमाह–**इतीति**। इत्येवमुक्त्वा बद्धाञ्जलिः सन् अग्रतोऽवलोक्य दृष्ट्वा, सानन्दमानन्देन सहितं यथा तथा, आहेति शेषः ।

**काशीति** । सकाशीभवत् संनिधित्वेन विद्यमानं इन्द्रगेहं स्वर्गलोको येषां तादृशाः सौधानां उच्चैस्तरगृहाणामग्रभागा यस्यां सा इति बहुव्रीहिगर्भो बहुव्रीहिः । तथा बहवः सप्तयोऽश्वाः नागा गजाश्च यस्यां सा तथाभूता । "घोटके वीति–तुरग–तुरंगाश्व–तुरंगमाः । वाजि–वाहार्व–गन्धर्व–हय–सैन्धव–सप्तयः । " इति "मतंगजो गजो नागः" इति चामरः । तथा शिवस्य विश्वेश्वरस्य शेखरेन्दोर्मस्तकभूषणभूतचन्द्रस्य "शिखास्वापीड-शेखरौ" इत्यमरः । मयूखैः किरणैः "किरणोऽस्रमयूखांशु–" इत्यमरः । अन्धकारस्य व्युत्पत्त्या उद्भवेन शून्या रहिता । भगवतः शंकरस्य नित्यनिवासात् तच्छिरःस्थचन्द्रकिरणैः सूर्याभावेऽपि प्रकाशयुक्तेत्यर्थः । इयं काशी नगरी इन्धे प्रकाशते । 'ञि इन्धी दीप्तौ' इत्यस्माद्धातोर्लट् ॥ ८२ ॥

---

१ 'इव'. २ 'साञ्जलिः'. ३ 'नादा'.

**कृशानुः**—वयस्य[1] किमेषापि तव स्तवास्पदम्? ॥ २१ ॥
पश्य—

ये मिष्टान्न[2]भुजो गजोत्तम[3]हयारोहाः सुगेहान्तरे[4]
मत्ताभि[5]र्महिलाभिरत्र विहरन्त्यामुक्तमुक्तास्रजः ॥
ते घोरास्थिधरा विराजदनड्वाहा विषाहारिणो
नर्तिष्यन्त्यवशाः स्मशाननिलया नीचैः पिशाचैः समम् ॥ ८३ ॥

अथाह कृशानुः—**वयस्येति**। वयस्य भो मित्र "वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत्" इत्यमरः। एषा काशीनगर्यपि, अपिना गर्हा द्योत्यते। तव स्तवास्पदम् स्तुतिस्थानम्। किमिति प्रश्ने। इत्यापाततः। वस्तुतस्तु—एषा महामहिमवती काशी अपि तव स्तवास्पदं किम्? तस्मात् त्वं धन्योऽसि! तत्प्रभावस्य सामान्येन वक्तुमशक्यत्वादिति भावः ॥ २१ ॥

**पश्येति**। स्तुतियोग्यत्वमयोग्यत्वं वेत्यर्थः।

तत्रतावत्प्रथमं काशीनिवासिनां पारमार्थिकफलं निरूपयति—**य इति**। अत्र काश्यां ये जनाः मिष्टं षड्रसयुक्तमन्नं भुञ्जते इति मिष्टान्नभुजः। तथा गजोत्तमा हस्तिश्रेष्ठाश्च हया अश्वाश्च तेषु आरोह आरोहणं येषां तथाभूताः। अश्वादिष्वारुह्य नगरे परिभ्रमन्त इत्यर्थः। किंच आमुक्ताः धृताः मुक्तास्रजो मुक्ताहारा यैस्ते तथा अपि च सुगेहान्तरे शोभनान्तःपुरे मत्ताभिः यौवन–रूपादिभिरित्यर्थात्। महिलाभिः स्त्रीभिः "स्त्री योषित्" इत्यारभ्य "वनिता महिला तथा" इत्यन्तोऽमरः। सह विहरन्ति क्रीडन्ति। एवं विषयासक्तचित्ता अपीति वास्तवोर्थः। प्रातीतिकस्तु एवं सुखिन इत्यर्थः। ते जनाः, परलोके इति शेषः। मुक्ताहाराणां स्थाने घोराणां भयंकराणामस्थ्नां धरा धारकाः, तथा गजाश्वादिस्थाने विराजन् शोभमानः अनड्वान् वृषभो वाहो वाहनं येषां तादृशाः। "उक्षा भद्रो बलीवर्दो ऋषभो वृषभो वृषः। अनड्वान्" इत्यमरः। तथा मिष्टान्नस्थाने विषाहारिणो विषभोजिनः। अन्तःपुरस्थसुन्दरस्त्रीविलासस्थाने च स्मशानमेव निलयो गृहं येषां तथाभूताः स्मशाननिवासिनः सन्त इत्यर्थः। अवशाः उन्मत्ताः स्वतन्त्राश्च, नीचैः क्षुद्रैः, पिशाचैः ब्रह्मराक्षस-मारीच-वेतालादिभिः समं सह, नर्तिष्यन्ति नृत्यं करिष्यन्ति। एवं च अत्रत्यसुखिजनानामप्येवंविधदुःखोत्पादिकेयमिति रभसार्थः। वास्तवस्तु पूर्वोक्तप्रकारेण विषयासक्तत्वेऽपि केवलं काशीवासेनैव जनानां शंकरसारूप्यसंपादयित्रीत्यर्थः। विरोधालंकारः ॥ ८३ ॥

१ 'किमरे वयस्यैषापि तव स्तव्यपदम्'. २ 'मृष्टान्न'. ३ 'गजोद्धतहयारोहाः'. ४ 'स्वगेहान्तरे'. ५ 'सक्ताभिः'.

काशीमुद्दिश्य—

'दत्तं साधुमुदे यदेकमपि तत् क्षेत्रप्रभावाद्भवेत्
कामं कोटिगुणं भवान्तर' इति ख्यातं त्वयि त्वास्थया[2] ॥
वासं प्राप्य मुहुर्बहूनि ददतो वासांसि जन्मान्तरे
लोका हन्त भजन्ति दिग्वसनतां हे काशि तुभ्यं नमः ॥ ८४ ॥

वाराणसि त्वयि सदैव सरोगभूमावारोग्यभूमिरिति[3] काममलीकवादः ॥
संतस्थुषां भवति यत्र वपुः सशूलं जन्मान्तरेऽपि जलभारवदुत्तमाङ्गम्[4] ॥ ८५

एवं **विश्वावसु**मुक्त्वा काशीमुद्दिश्याह—**दत्तमिति** । हे काशि 'यत् यदि साधोः सत्पात्रस्य मुदे संतोषार्थं, एकमपि न त्वधिकं दत्तमर्पितं, तर्हि तत् क्षेत्रस्य अर्थात् त्वदन्यप्रयाग-पुष्करादेः प्रभावात् माहात्म्यात्, भवान्तरे अन्यजन्मनि 'कामं निश्चयेन कोटिगुणं दत्तापेक्षया कोटिसंख्ययाधिकं भवेत् संपद्येत' इति ख्यातं पुराणादौ प्रसिद्धम् । त्वयि तु । वासं वसतिं प्राप्य कृत्वा, मुहुर्वारंवारं आस्थया 'अनेन दानेन जन्मान्तरे सुखिनो भवामः' इत्यादिरूपया, बहूनि वासांसि एतदुपलक्षणम् । तेन महावस्त्र–सुवर्णादीनीत्यर्थः । ददतः सत्पात्रेभ्यः समर्पयन्तः 'डुदाञ् दाने' इत्यस्मात् लटः शत्रादेशः । "नाभ्यस्ताच्छतुः" इत्यभ्यस्तत्वान्नुमभावः । ते लोकाः जन्मान्तरेऽन्यजन्मनि दिग्वसनतां दिगम्बरतां भजन्ति प्राप्नुवन्ति । अर्थात् वस्त्रहीना दरिद्रा भवन्तीति भावः । इति प्रातीतिकोऽर्थः । वास्तवस्तु दिग्वसनतां नाम शिवसारूप्यं प्राप्नुवन्तीति । तस्मात् तुभ्यं नमः । प्रातीतिके दूरत एव त्वां नमस्कुर्मः न तु त्वयि वासं कर्तुमिच्छाम इति । वास्तवे तु एवं शिवसारूप्यप्रदायै तुभ्यं नमः,त्वन्माहात्म्यस्य दुराकलनीयत्वात्केवलं नमाम एवेत्यर्थः । हन्तेत्यानन्दे विषादे वा ॥ ८४ ॥

काशीनिवासिनो जनास्तावद्दिगम्बरत्वं प्राप्नुवन्तीत्येतावदेव न, किंतु अन्यदपि प्राप्नुवन्तीत्याह—**वाराणसीति** । हे वाराणसि काशि, "अम्बार्थ-नद्यो—" इति वाराणसीशब्दस्य संबुद्धौ ह्रस्वत्वम् । सदैव संततमेव रोगेण शीतादिना सहिता सरोगा तादृशी भूमिः यस्यां तस्याम् । वस्तुतस्तु सरः गङ्गाप्रवाहरूपं गच्छति प्राप्नोतीति सरोगा तथाभूता भूमिर्यस्यामित्यर्थः । तस्यां त्वयि आरोग्येण रोगराहित्येन युक्ता भूमिः इति कामं अत्यन्तं निश्चयेनेति यावत् । अलीकवादः असत्यवचनमित्यर्थः । "अलीकं त्वप्रियेऽनृते" इत्यमरः । वास्तवस्तु अः विष्णुर्बिन्दुमाधवरूपः "अकारो वासुदेवः स्यात्" इत्येकाक्षरः । रेण नेत्राग्निना युक्तः उः शिवः अर्थात् विश्वेश्वरः तौ अरौ, "रश्च कामेऽनिले वह्नौ" इति, "उकारः शंकरः प्रोक्तः" इति चैकाक्षरः तौ गच्छतीति अरोगा तस्याः भावः आरोग्यं तेन युक्ता भूमिरिति अलीकवादः किमिति काकुः । अपि तु नैवालीक इत्यर्थः । तथाहि–यत्र त्वयि संतस्थुषां स्थिता-

१ 'अन्यच्च'. २ 'त्वयीत्याख्यया'. ३ 'भूरिति निकाम'. ४ 'जडभाववत्', जलभाववत्'.

**विश्वावसुः**—अनिपुणधिषण गुणमपि[1] किमिति दोषीकरोषि ? यदेतन्नगरवासिना भोगिनाऽपि योगिनामप्राप्यं[2] शिवसारूप्यमाप्यते २२

अत्र देहमपवित्रमपास्यन्नच्छमृच्छति वपुः किल यस्य ॥
लोचने शुचिरवाप्तनिटाले मस्तके हरिपदाम्बु जटाले ॥ ८६ ॥

अदःपुरवासिनामन्याप्येषा धन्यता ॥ २३ ॥

नां, संपूर्वकात् 'ष्ठा गतिनिवृत्तौ' इत्यस्माद्धातोर्भूतसामान्यविवक्षायां लिटि "क्वसुश्च" इति च क्वसौ "वसोः संप्रसारणम्" इत्यामि संप्रसारणम् । वपुः शरीरं, जन्मान्तरेऽन्यजन्मन्यपि किमुतास्मिन् जन्मनि । शूलेन शूलरोगेण पक्षे शूलायुधेन सहितं भवति । उत्तमाङ्गं मस्तकं च जलभारवत् शैत्यरोगयुक्तं, पक्षे जलस्य गङ्गाजलस्य भारेण युक्तं भवतीति । एवं च सर्वथा शिवसारूप्यमेव प्राप्नोतीति भावः । इति वास्तवोऽर्थः । अत्रापि व्याजस्तुतिरलंकारः ॥ ८५ ॥

एवं **कृशानु**प्रोक्तमर्थं दूषणपरतयैव संगृह्याह **विश्वावसुः—अनिपुणेति ।** अनिपुणा सदसद्विवेकविधुरा धिषणा बुद्धिर्यस्य तत्संबोधने हे अनिपुणधिषण मन्दबुद्धे, वाराणस्या इति शेषः । गुणमपि किमिति कस्माद्धेतोरित्यर्थः । दोषीकरोषि दूषणयुक्तमिव करोषीत्यर्थः । यत् यस्मात्कारणात् एतन्नगरवासिना काशीपुरनिवासिना, भोगिना स्त्र्यादिविषयभोगवतापि किमुत वैराग्यादियुतेन जनेन, योगिनां यमनियमासनाद्यष्टाङ्गयोगयुक्तानामपि अप्राप्यं प्राप्तुमशक्यं, शिवस्य विश्वेश्वरस्य सरूपस्य तुल्यरूपस्य भावः सारूप्यं शिवसमानरूपतेत्यर्थः । आप्यते प्राप्यते ॥ २२ ॥

शिवसारूप्यमेवोपपादयति—**अत्रेति ।** अत्र काश्यां, जन इति शेषः । अपवित्रं विषयासक्त्यादिना मलमूत्रादिसंबन्धेन वा अपवित्रं देहं अपास्यन् त्यजन् सन्, अच्छं स्वच्छं पवित्रमिति यावत् । वपुः शरीरं ऋच्छति प्राप्नोति । किलेति निश्चये । यस्य शरीरस्य अवाप्तं प्राप्तं निटालं भालं येन तथाभूते भालदेशस्थिते इत्यर्थः । लोचने नेत्रे शुचिरग्निः । अस्तीति शेषः । "अग्निर्वैश्वानरः-" इत्यतः "शुचिरप्पित्तम्-" इत्यन्तोऽमरः । जटां लाति धारयतीति जटालं तस्मिन् जटायुक्ते इत्यर्थः । मस्तके शिरसि हरिपदाम्बु विष्णुचरणसंबन्धि उदकं, अर्थात् गङ्गोदकं, वर्तते इति शेषः । 'अपास्यन्' 'ऋच्छति' इति च वर्तमानकालनिर्देशेन शरीरत्यागक्षणे एवोक्तविधं शिवसारूप्यं प्रतीयते ॥ ८६ ॥

नैतावदेव अन्यदपि तन्महित्वमाह—**अद इति ।** अदःपुरनिवासिनां अमुष्मिन् पुरे काश्यां निवसन्तीति तथाभूतानां, अन्या पूर्वोक्तसारूप्यप्राप्तेरितरा, एषा वक्ष्यमाणरूपा धन्यता महत्त्वम्, अस्तीति शेषः ॥ २३ ॥

---

१ 'गुणोदयामपि किमिति', 'गुणान् किमिति'. २ 'योगिनां प्राप्यं', 'योगिनामप्यप्राप्यं'.

प्रदोषवत्प्राप्त इह प्रदोषनटोऽन्धकारिव्यपदेशमेति[1] ।
प्रकाशयत्येष हि तारकोद्यद्वर्णान्नृणां कर्णनभःप्रदेशे ॥ ८७ ॥
इति गङ्गातीरजनपदं कृत्स्नमवेक्ष्य साञ्जलिबन्धम्—
प्रातः प्रातर्जान्हवीवारि भक्त्या गाहं गाहं क्लृप्तनित्यक्रियेभ्यः[2] ॥
पुष्पैराद्यं पूरुषं पूजयद्भ्यः पूतात्मभ्यो भूसुरेभ्यो नमोऽस्तु ॥ ८८ ॥

---

का सा धन्यतेत्याकाङ्क्षायामाह—**प्रदोषवदिति** । इह काश्यां प्रदोषवत् रजनीमुखवत् सायंकालवदिति यावत् । "प्रदोषो रजनीमुखम्" इत्यमरः । प्रदोषे सायंकाले नटति नृत्यतीति प्रदोषनटः एषः शिवः प्राप्तः अन्धकस्य एतनाम्नः कस्यचिद्दैत्यस्य अरिः शत्रुः । पक्षे अन्धकारः ध्वान्तं अस्मिन्नस्तीति अन्धकारी । मत्वर्थीय इनिः । इति व्यपदेशं लक्ष्य अभिधानमिति यावत् । एति प्राप्नोति । अपि च नृणां मर्त्यानां देहावसाने इति शेषः । कर्णनभःप्रदेशे श्रोत्रान्तर्गताकाशदेशे, पक्षे किरति सर्वत्र प्रसरति व्याप्नोतीति यावत् । कर्णः व्यापकः, उभयत्रापि "कॄ-वॄ-जॄसि" इत्याद्युणादिसूत्रेण यूप्रत्ययः । तस्य बाहुलकात् केवलो नकारादेशश्च । स चासौ नभःप्रदेशः आकाशदेशः तस्मिन्, तारयति जन्म-जरा-मरणादिदुःखेभ्य इति तारः स एव तारकः स्वार्थे कः । तस्मिन् उद्यन्तः उपदेशरूपेण प्रकटीभवन्तः वर्णाः अकारोकारमकाररूपास्तान् । "वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे" इत्यमरः । पक्षे तारकाभ्यो नक्षत्रेभ्यः उद्यन्तः वर्णाः प्रभारूपास्तान्, प्रकाशयति उपदेशरूपेण कथयति पक्षे प्रकटयति च । केचित्तु तारकशब्देन राममन्त्रं गृह्णन्ति, तत्तु वैष्णव-रामानुजीयादिमतानुसारेण योजनीयम् । अस्यापि श्रीरामायणे शिववाक्यं प्रमाणभूतम् । यथा "अहो भवन्नाम जपन् कृतार्थो वसामि काश्यामनिशं भवान्या । मुमूर्षमाणस्य विमुक्तयेऽहं दिशामि मन्त्रं तव राम नाम" इति । काशीखण्डेऽपि—"पेयं पेयं श्रवणपुटकै रामनामाभिरामं ध्येयं ध्येयं मनसि सततं तारकं ब्रह्मरूपम् । जल्पन् जल्पन् प्रकृतिविकृतौ प्राणिनां कर्णमूले वीथ्यां वीथ्यामटति जटिलः कोपि काशीनिवासी" इति च ॥ ८७ ॥

**इतीति** । इत्येवमुक्त्वा गङ्गातीरजनपदं भागीरथीतीरस्थदेशं, कृत्स्नं सर्वं "अथ समं सर्वम् । विश्वमशेषं कृत्स्नं" इत्यमरः । अवेक्ष्य दृष्ट्वा, अञ्जलिबन्धेन करसंपुटेन सहितं साञ्जलिबन्धं यथा तथा । आहेति शेषः ।

**प्रातः प्रातरिति** । प्रातः प्रातः प्रतिप्रातःकाले "नित्यवीप्सयोः" इति नित्यार्थे द्वित्वम् । जान्हवीवारि गङ्गोदकं भक्त्या आदरेण गाहं गाहं स्नात्वा स्नात्वा 'गाहू विलोडने' इत्यस्मात् आभीक्ष्ण्ये णमुल् । क्लृप्ताः कृताः आचरिता इति यावत् । नित्याः अकरणे प्रत्यवायसाधकाः क्रियाः सन्ध्यादिकाः यैस्तेभ्यः, तथा आद्यं सृष्टेरपि पूर्वं वर्तमानं पूरुषं शंकरं विश्वनाथमित्यर्थः । पूजयद्भ्यः अर्चयद्भ्यः, अत एव पूतः पवित्रः आत्मा चित्तं येषां तथाभूतेभ्यः । "पवित्रः प्रयतः पूतः" इत्यमरः । "आत्मा

---

१ 'व्यपदेशमन्ते'. २ 'प्राप्तनित्यक्रियेभ्यः'.

कृ०—किमेतद्देशवासिनोऽपि ब्राह्मणाः केवलं कलिमाहात्म्याकलितशास्त्रीयचर्याविपर्यया भवता नमस्क्रियन्ते ? पश्य तावत् प्रायेणास्य काशीदेशजनस्य सुचर्याविपर्यासम् ॥ २४ ॥

शस्त्रैर्जीवति शास्त्रमुज्झति परं शूद्राहृतैरम्बुभिः
स्नात्या[1]चामति देवताः स्नपयति स्वैरं पचत्योदनम् ॥
उच्छिष्टान्न बिभेति याति यवनैरुच्चावचैः सङ्गतिं
मातङ्गान्निकटं[2] गतानगणयन् मार्गान् मुहुर्गाहते ॥ ८९ ॥

---

कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च" इति च धरणिः । भूसुरेभ्यः ब्राह्मणेभ्यः नमः अस्तु ॥ ८८ ॥

ब्राह्मणस्तुतिमसहमान आह **कृशानुः—किमिति ।** एतद्देशवासिनः गङ्गातीरनिवासिनः केवलं भृशं कलिमाहात्म्यात् कलियुगप्रभावात् आकलितः स्वीकृतः शास्त्रीयायाः श्रुति-स्मृतिविहितायाः चर्यायाः आचारस्य विपर्ययो वैपरीत्यं यैः तथाभूताः, अर्थात् विहितमकुर्वन्तः प्रतिषिद्धं कुर्वन्तश्च, तेऽपि ब्राह्मणाः भवता नमस्क्रियन्ते किम् ? आश्चर्यमिदमिति भावः । कुत एतदिति चेत् प्रत्यक्षमेव पश्येत्याह—**पश्य तावदिति ।** अस्य काशीदेशजनस्य प्रायेण सुचर्याविपर्यासं स्वाचारवैपरीत्यं पश्य तावत् । इदानीमेव मया कथ्यमानमवधारयेत्यर्थः । प्रायेणेत्यनेन शास्त्रविहिताचरणस्य क्वाचित्कं सूचितम् ॥ २४ ॥

तदेवाह—**शस्त्रैरिति ।** काशीनिवासिब्राह्मण इति शेषः । अत्र सर्वत्र जातावेकवचनम् । शस्त्रैः आयुधधारणैः, जीवति उपजीविकां करोति । ब्राह्मणस्यापत्कालं विना शस्त्रग्रहणनिषेधादेतदयुक्तमिति भावः । तथा परं स्वधर्मभूतत्वादुत्कृष्टं, शास्त्रं वेदाध्ययनादिकं उज्झति त्यजति । अपि च शूद्राहृतैः शूद्रेणानीतैः अम्बुभिः उदकैः, स्नाति स्नानं करोति, आचामति आचमनं करोति, देवताः देवानपि स्नपयति अभिषिञ्चति, किंच स्वैरं यथा तथा ओदनमन्नमपि पचति । एतत्तु अतीवावद्यमिति भावः । तथा उच्छिष्टात् उच्छिष्टभक्षणात् न बिभेति । तदपि भक्षयतीत्यर्थः । उच्चावचैः अनेकविधैः यवनैः नीचम्लेच्छादिजातीयैर्जनैः सह संगतिं सहवासं तैः सह स्पर्शनभाषणादिकं, याति प्राप्नोति, करोतीति यावत् । नैतावदेव, किंतु निकटं गतान् समीपं प्राप्तानपि "समीपे निकटासन्न—" इत्यमरः । मातङ्गान् चाण्डालान् "चाण्डाल-प्लव-मातङ्ग-दिवाकीर्ति-जनंगमाः" इत्यमरः । अगणयन् तेषां स्पर्शास्पर्शविचारमकुर्वन्, मुहुर्वारंवारं मार्गान् गाहते मार्गेषु इतस्ततो भ्रमतीत्यर्थः । एवं चैतत्सर्वं ब्राह्मणाचारविरुद्धमित्यर्थः ॥ ८९॥

---

[1] 'स्नात्वा'. [2] 'निकटागताम्'.

किंच—

प्रातर्हन्त कृताप्लवोऽपि रजकस्पृष्टान् जडो रासभै-
रूढान् धारयते पटाननुदिनं धृत्वा बहिर्गच्छति ॥
गत्वा म्लेच्छमुखाशुचीन् स्पृशति च स्पृष्ट्वापि न स्नात्यहो
नस्नातोऽप्यथ भुङ्क्त एष चपलो भुक्त्वापि न व्रीडति ॥ ९० ॥

अपि च—

नीचैर्दुर्यवनैः शुनीभिरपि वा निःशङ्कमालोकितं
भुङ्क्ते पङ्क्तिविदूषकैः सह नरैरज्ञातवेदाक्षरैः[1] ॥
मद्यास्वादनमत्तचित्तजनतामोहाय भीहानितः[2]
कर्माण्यारभते श्रुति-स्मृतिवचोदूराण्यसाराण्यहो[3] ॥ ९१ ॥

---

नन्वयं जनः प्रातःस्नानं करोति तेन सर्वदोषक्षपणं भवतीति चेत्तत्राह—**प्रातरिति**। किंच अयं जनः प्रातः प्रातःकाले कृतः आप्लवः गङ्गास्नानं येन तथाभूतोऽपि "समे आप्लाव आप्लवः। स्नानं" इत्यमरः। रजकस्पृष्टान् रजकेन कृतस्पर्शान् प्रक्षालितानिति यावत्। किंच रासभैर्गर्दभैः ऊढान् धृतान् गर्दभवाहितानित्यर्थः। पटान् वस्त्राणि अनुदिनं प्रतिदिनं, न त्वेकदिनमपि, धारयते। नत्वेतावदेव। अपि तु धृत्वा बहिर्भ्रमणार्थमित्यर्थः। कार्यार्थं वा गच्छति। गत्वा च म्लेच्छमुखाशुचीन् म्लेच्छ-यवनप्रमुखान् अपवित्रजनान् स्पृशति। स्पृशतु नाम कार्यार्थं, का वा हानिरिति चेत्तत्राह-स्पृष्ट्वापि न स्नाति स्नानमपि न कुरुते। अत एव जडः मूर्खः, चपलः चाञ्चल्ययुक्तश्च एषः नस्नातोऽपि, अत्र नञ्शब्दस्य "सह सुपा" इति समासः। नैकधेत्यादिवत्। अथ भुङ्क्ते भोजनं करोति। भुक्त्वापि च न व्रीडति न लज्जते। अत्र रजकस्पृष्ट-रासभोढपटधारण-बहिर्गमनाद्यनेकलज्जाकारणसत्त्वेऽपि लज्जारूपकार्यस्यावर्णनाद्विशेषोक्तिरलंकारः। "विशेषोक्तिरखण्डेषु कारणेषु फलावचः" इति तल्लक्षणात्॥ ९० ॥

नन्वेते राजाधिकारिणस्तस्माद्राजकार्यव्यापृतत्वान्न तेषां स्वकर्मकरणेऽवकाशः परं तु ये केचित्तदधिकाररहितास्ते तु स्वकर्म कुर्वन्त्येवेति चेत्तत्राह—**अपि च— नीचैरित्यादि**। अत्रत्य जन इति शेषः। नीचैः हीनजातीयैः दुर्यवनैः दुष्टम्लेच्छैः, तथा शुनीभिः श्वस्त्रीभिरपि वा, आलोकितमवलोकितं, अन्नादिकमिति शेषः। नैतावदेव, अपि तु अज्ञातं वेदस्य अक्षरमपि किमुत मन्त्रादिकं यैस्तैः, अत एव मद्यपान-मांसाशनादिशास्त्रनिषिद्धकर्माचरणात् पङ्क्तिविदूषकैः पङ्क्तिबाह्यैर्नरैः सह निःशङ्कं कस्यापि लोक-शास्त्रादेः शङ्कारहितं यथा स्यात्तथा भुङ्क्ते। भोज्यान्नं चाण्डालादिभिर्न द्रष्टव्यमिति हि धर्मशास्त्रम्। तदाह मनुः—"चाण्डालश्च वराहश्च कुक्कुटः श्वा तथैव च॥ रजस्वला च षण्ढश्च नेक्षेरन्नश्नतो द्विजान्" इति। दृष्टे किं भवति

---

१ 'वेदाक्षरः'. २ 'हानतः'. ३ 'असाराणि च'.

अपि च–

कन्यां कामप्युदूह्य प्रविजहदुदयद्यौवनामज्ञ एनां
द्रव्याशापाशकृष्टो भ्रमति चिरतरं हन्त देशान्तरेषु ॥
अन्योन्याश्लेषवाञ्छाविगलितवयसोरात्तमालिन्यमत्यो-
र्दम्पत्योर्व्याकृतैवं हतविधिरुभयोर्लोकयोः शोकयोगम् ॥ ९२ ॥

अपि च—

नाऽधीतेऽत्र जनो यदि कश्चिदधीते शते सहस्रे वा ॥

---

तदाह–"घ्राणेन सूकरो हन्ति पक्षवातेन कुक्कुटः। श्वा तु दृष्टिनिपातेन स्पर्शेनावरवर्णजः" इति। किं च नैतावदेव कृत्वा स उपरमति, किं तु मद्यस्य मदिरायाः आस्वादनेन पानेन मत्तं विवेकशून्यं चित्तं यस्यास्तथाभूतायाः जनतायाः जनसमूहस्य मोहाय 'किमयं ब्राह्मणः कर्मठः, योग्योऽयं, अस्मै एव दानादिकं देयम्' इति मोहोत्पादनं कर्तुं, अत्र "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी। भीहानितः ऐहलौकिक–पारलौकिकभयं संत्यज्य, "ल्यब्लोपे कर्मण्यधि–" इति पञ्चमी। तस्याश्च तसिल्। श्रुति-स्मृतिवचोदूराणि वेदशास्त्राभ्यामविहितानि तत्र निषिद्धानीति वा। अत एव असाराणि तुच्छानि फलरहितानीति यावत्। कर्माणि आरभते करोति आचरतीत्यर्थः। अहो इत्याश्चर्ये ॥ ९१ ॥

**अपि चेति**। अन्यदपि निन्द्यं कर्म शृणुवित्याह—

**कन्यामिति**। अज्ञः शास्त्रविधिमजानन् अत एव कामपि या काचित् स्वमनसे रोचेत तामित्यर्थः। न तु कुलशीलसंपन्नाम्। कन्यां उदूह्य विवाह्य, अथ च उदयत् उत्पद्यमानं यौवनं तारुण्यं यस्यां तथाभूतां एनां कन्यां, अन्वादेशत्वात् "द्वितीयाटौस्स्वेनः" इत्येनादेशः। प्रविजहत् गृहे एव त्यजन् सन्, द्रव्याशापाशकृष्टः द्रव्यसंपादनेच्छापरवशः सन्नित्यर्थः। देशान्तरेषु परदेशेषु चिरतरं अतिचिरकालपर्यन्तं भ्रमति अटति। हन्तेति खेदे। भ्रमतु नाम देशान्तरेषु, ततः पुनर्निवृत्तौ भवेदेवोभयोः संगम इति चेत्तत्राह–**अन्योन्येति**। अन्योन्यस्य परस्परस्य य आश्लेषः आलिङ्गनं तस्य वाञ्छयैव न तु उपभोगेन, विगलितं नष्टं वयस्तारुण्यं ययोस्तयोः। अत एव आत्तं प्राप्तं मालिन्यं कामाद्युपभोगराहित्यं यस्याः तथाभूता मतिर्बुद्धिर्ययोस्तयोर्दम्पत्योः स्त्रीपुरुषयोः "दम्पती जम्पती जायापती भार्यापती च तौ" इत्यमरः। एवमुक्तप्रकारेण, हतविधिः दुष्टदैवं कर्तृ, "विधिर्विधाने दैवेऽपि" इत्यमरः। उभयोर्लोकयोः इहलोके संगमाभावात् परलोके च अकर्मकरणात्, शोकयोगं शोकसम्बन्धं, व्याकृत अकरोत्। 'डुकृञ् करणे' इत्यस्मात् कर्तरि लुङ् "ह्रस्वादङ्गात्" इति सिचो लुक्। 'व्यादित' इति पाठे 'दम्पत्योः' इति षष्ठी प्रामादिकी ॥ ९२ ॥

**अपि च—नेति**। अत्र अस्मिन् देशे कोऽपि जनः नाधीते वेदशास्त्राद्यध्ययनं

---

१ 'व्यादितैवम्'.

दुस्तर्केषु श्राम्यति दूरीकुरुते श्रुति-स्मृतिसुतर्कान् ॥ ९३ ॥

**वि०**—कष्टमरे ब्राह्मणनिन्दां शृण्वतः कम्पते मे हृदयम्! यस्त्वयोपन्यस्तः सच्चर्याविपर्ययः[1] स एष कलेरेव दोषो न ब्राह्मणानाम् । कलौ युगे कार्तयुगं चारित्रं कुत्र[2] नाम संभाव्यते? दुरितलतिकोपघ्नात्मा[3] दुर्जयः खलु कलिः ॥ २५ ॥

पश्य—

हर्म्यस्थानमधर्मकर्मवितते र्दुर्मानधर्मासनम्[4]
शास्त्रस्तोमललाटभूलिपिलयः[5] शान्तिः सवानामपि ॥
सर्वाम्नायवचस्समापनदिनं संस्था सदर्चाविधे-
रर्थाशाजनिभूरभूदिह महानर्थावहोऽयं कलिः ॥ ९४ ॥

---

न करोति, यदि कश्चित् एकः कोऽपि शते सहस्रे वा, अधीते अध्ययनं करोति चेत्, तदा सः दुस्तर्केषु युक्तिश्रुतिविरुद्धतर्कोपहतेषु चार्वाक-गौतमादिप्रणीतशास्त्रेषु, श्राम्यति परिश्रमं करोति । अपि च श्रुतिस्मृतिसुतर्कान् उपनिषद्-व्याससूत्र-मनुस्मृत्याद्युक्तजीवात्मपरमात्मभेदप्रतिपादकसत्तर्कान्, दूरीकुरुते नाधीते । एवं च सर्वेऽपि वेदशास्त्रपराङ्मुखा एवेत्यर्थः ॥ ९३ ॥

एवं **कृशानु**प्रतिपादितं दूषणपरं भाषणं श्रुत्वा कष्टयुक्तः प्राह **विश्वावसुः**—**कष्टमिति** । अरे भोः **कृशानो !** कष्टम् । एतद्दुःखप्रद्योतकमव्ययम् । ब्राह्मणानां निन्दां शृण्वतः आकर्णयतः, मे मम हृदयं कम्पते । कुतः । त्वयोपन्यस्तः 'शास्त्रैर्जीवति शास्त्रमुज्झति' इत्यादिवाक्यैः प्रतिपादितः यः सच्चर्याविपर्ययः सच्छास्त्रवैपरीत्यं, स एष कलेः कामाद्यासक्तस्य कलियुगस्यैव दोषः, न ब्राह्मणानाम् । कुतः । अस्मिन् कलौ युगे, कृतयुगे भवं कार्तयुगं 'तत्र भवः' इत्यर्थेऽण् । चारित्रं आचरणं कुत्र नाम केन कारणेन संभाव्यते? नैव संभाव्येतेत्यर्थः । यतः दुरितं पापं तद्रूपा या लतिका तस्या उपघ्न आश्रयभूतः आत्मा यस्य तथाभूतः । "स्यादुपघ्नोऽन्तिकाश्रयः" इत्यमरः । कलिर्दुर्जयः खलु । निश्चयेन जेतुमशक्यः ॥ २५ ॥

दुर्जयत्वमेवोपपादयति—**हर्म्येति** । अयं कलिः एतत् कलियुगं, महतः अनर्थान् वक्ष्यमाणरूपान् आवहति संपादयतीति तथाभूतः अभूत् प्रादुर्बभूव । के ते अनर्था इत्याकाङ्क्षायामाह—धर्मः पुण्यं तद्विरुद्धः अधर्मः पापं "धर्मः पुण्य-यम-न्याय-स्वभावाचार-सोमपाः" इत्यमरः । तज्जनकानि यानि कर्माणि परधनहरण-परस्त्रीगमन-मद्यपानादीनि तेषां विततेः परंपरायाः हर्म्यस्थानं निवासगृहं, तथा दुर्मानधर्मासनं दुर्मानस्य दुरभिमानस्य गर्वस्येति यावत् । धर्मासनं धर्मपीठं, अथवा दुर्मानस्य ये धर्माः परपैशून्य-पराविक्षेपादयस्तेषामासनमिति वा । शास्त्रस्तोमस्य शास्त्रसमूहस्य ललाटभूलिपेः

---

१ 'सुचर्याविपर्यासः'. २ 'कुतो नाम'. ३ 'उपघ्नायितात्मा'. ४ 'मर्मासनं'. ५ 'दुर्लिपिचयः'.

एतादृशे कलियुगेऽपि शतेषु कश्चि-
ज्जातादरो जगति यः श्रुतिमार्ग एव ॥
यत्किंचिदाचरति पात्रमसौ स्तुतीनां
श्लाघ्यं मिताम्[1]पमपि किं न मरौ सरश्चेत् ॥ ९५ ॥

किंच—

ये कायस्थजनाश्च ये नृपसुता ये च द्विजाश्शस्त्रिणे[2]-
स्ते यत्नादनुसृत्य निर्दयतया शुष्कांस्तुरुष्काधिपान् ॥
देवान् भूमिसुरांश्च पान्ति कृतिनस्ते चेद्गृहेष्वासते[3]
ब्राह्मण्याय जलाञ्जलिः किल भुवि प्राज्ञैः प्रदेयो भवेत् ॥ ९६ ॥

---

कपालस्थानस्थितायुरक्षराणां लयः नाशः । एतत्प्रादुर्भावाच्छास्त्राणि विलयं यान्तीत्यर्थः । तथा सवानां यज्ञानामपि "यज्ञः सवोऽध्वरो यागः" इत्यमरः । शान्तिः शमनम्, सर्वाणि यान्याम्नायवचांसि वेदवचनानि तेषां समापनदिनं समाप्तिदिवसः । सदर्चाविधेः सत्पूजादिकर्मानुष्ठानस्य संस्था मर्यादा । अस्य पापप्रचुरत्वान्न तावत्सत्कर्मणोऽवकाश इति भावः । "संस्था तु मर्यादा धारणा स्थितिः" इत्यमरः । दम्भादिप्रदर्शनार्थं तावत्प्रचुरं असदर्चनादिकं कलौ प्रवर्तते इत्येतत्सूचनार्थं सच्छब्दप्रयोगः । तथा अर्थाशायाः द्रव्यवाञ्छायाः, जनिभूः जन्मभूमिः । एतादृशः अयं कलिरिति संबन्धः ॥ ९४ ॥

**एतादृश इति ।** एतादृशे पूर्वोक्तानेकानर्थकारके कलियुगेऽपि, शतेषु असंख्यातेषु जनेषु मध्ये, यः कश्चित् एकः कोऽपि, श्रुतिमार्गे वेदमार्गे वेदविहितकर्मानुष्ठाने इत्यर्थः । जातः उत्पन्नः आदरः श्रद्धा यस्य सः तथाभूतः एव, यत्किंचित् यावत् कर्तुं शक्येत तावत् कर्म आचरति करोति चेत्, तर्हि असौ कर्मकर्ता स्तुतीनां प्रशंसानां पात्रम् । प्रशंसितुं योग्य एवेत्यर्थः । तत्र दृष्टान्तः । मरौ म्रियन्ते पिपासया जन्तवो यस्मिन्देशे तस्मिन् निर्जलप्रदेशे इत्यर्थः । ('मारवाड' इति प्रसिद्धे इति यावत्) मिता अल्पाः आपः उदकानि यस्मिंस्तथाभूतमपि सरः सरोवरं चेत्, स्यात् इति शेषः । तर्हि तत् न श्लाघ्यं किं न प्रशंसायोग्यं किं? अपि तु प्रशंसनीयमेवेत्यर्थः॥९५॥

'शस्त्रैर्जीवति-' इत्यादिनोक्तं दूषणमपाकरोति—**ये कायस्थेति ।** ये कायस्थजनाः ग्रामायव्ययलेखकाः, ये च नृपसुताः राजपुत्रज्ञातीयाः, ये च द्विजाः ब्राह्मणाः सन्तः शस्त्रिणः शस्त्रधारिणः, ते त्रिप्रकारा अपि यत्नात्, दुःसहक्लेशसहनमङ्गीकृत्येत्यर्थः । ल्यब्लोपे पञ्चमी । निर्दयतया दयाराहित्येन शुष्कान् दयारसरहितान्, केवलं स्वार्थसाधनतत्परानित्यर्थः । तुरुष्काधिपान् तुरुष्क–( महाराष्ट्रभाषया 'तुर्क' ) देशीययवनभूपतीन् अनुसृत्य सेवाधर्मेणानुगम्य, देवान्, विश्वेश्वरान्नपूर्णादिदेवतायतनानि भूमिसुरान् ब्राह्मणांश्च पान्ति रक्षन्ति । अयमाशयः—यवनास्तु स्वभावतः क्रूरा निर्दयाश्च परधर्मद्वेषिणश्च ।

---

१ 'क्षितावपि च'. २ 'शास्त्रिणः'. ३ 'मुधोदासते'.

सर्वतो दृष्टिं प्रसार्य सश्लाघम्—

आक्रान्तासु वसुंधरासु यवनैरासेतुहैमाचलम्
विद्राणे क्षितिभृद्गणे विकरुणे निद्राति नारायणे ॥
निर्विघ्नप्रसरे कलावपि बलान्निष्कण्टकं वैदिकम्
पन्थानं किल तत्र तत्र परिपात्येको हि लोकोत्तरः ॥ ९७ ॥

पुनः सश्लाघम्—

---

अत एव ते ब्राह्मणान्, तद्धर्मान्, तद्देवताश्च भ्रंशयन्ति नाशयन्ति च। तस्मादेते कायस्थादय एव तत्सेवास्वीकरणेन जनपदरक्षणाद्यधिकारं लब्ध्वा देवभूसुरादीन् पान्तीति। अत एव ते कृतिनः धन्याः। ते च शस्त्रधारणादिसेवां विनैव गृहेषु आसते तिष्ठन्ति चेत्, यद्वा गृहेषु उदासीना भवेयुश्चेत्, तदा भुवि भूमौ प्राज्ञैः पण्डितैः, ब्राह्मण्याय ब्राह्मणानां कर्म सन्ध्याद्यनुष्ठानरूपं यजनादिषड्विधं वा, तस्मै जलाञ्जलिः त्यागरूपोदकाञ्जलिः प्रदेयः दातव्यो भवेत्। अस्यायं भावः-"विप्रश्च ब्राह्मणोऽसौ षट्कर्मा यागादिभिर्वृतः" इत्यमरात् शास्त्रतश्च यजन–याजन–अध्ययन–अध्यापन-दान-प्रतिग्रहरूपैः षड्कर्मभिरुपेतो ब्राह्मणः। तत्र याजनाध्यापन-प्रतिग्रहरूपाणि त्रीणि उपजीविकाभूतानि। इतराणि त्रीणि च परमार्थसाधकानि। तत्र च तुरुष्काधिपत्ये याजनादीनामशक्यत्वात् ब्राह्मणानां जीविकाभावः। ततश्च द्रव्याभावादेवान्यानि त्रीणि कर्माणि शिथिलीभवेयुरिति ॥ ९६ ॥

**सर्वेति**। सर्वतः सर्वत्र काशीप्रदेशे इत्यर्थः। दृष्टिं प्रसार्य मार्मिकतया निरीक्ष्य, श्लाघया प्रशंसया सहितं यथा तथा, उवाचेति शेषः।

**आक्रान्तास्विति**। आसेतुहैमाचलं सेतुं सेतुबन्धरामेश्वरं हिमाचलं चाभिव्याप्य "आङ् मर्यादाभिविध्योः" इत्यभिविधावव्ययीभावः। वसुंधरासु पृथ्वीस्थषट्पञ्चाशद्देशेषु। वसुंधराशब्देन तत्स्था देशा गृह्यन्ते लक्षणया। यवनैः आक्रान्तासु व्याप्तासु सतीषु, तथा क्षितिभृतां राज्ञां गणः समुदायस्तस्मिन्, यवनभयादिति शेषः। विद्राणे पलायमाने सति, विकरुणे करुणारहिते अत एव नारायणे भगवति विष्णौ, निद्राति भूस्थजनानां स्थितिमनवलोक्य निद्रितप्राये सति, तथा कलौ कलियुगेऽपि निर्विघ्नप्रसरे निर्विघ्नः विघ्नरहितः प्रतिबन्धरहित इति यावत्। प्रसरः संचारः यस्य तथाभूते सति च, लोकोत्तरः इतरलोकविलक्षणः सामान्यजनापेक्षयाऽधिककर्तृत्वशक्तिसंपन्न इति भावः। एकः हि एक एव कश्चित् पुरुषः, अत्र हिरवधारणे "हि हेताववधारणे" इत्यमरात्। तत्र तत्र तस्मिंस्तस्मिन् देशे, वैदिकं वेदोक्तं पन्थानं मार्गं अर्थात् कर्मरूपं, बलात् स्वकीयश्रद्धारूपसामर्थ्यात्, निष्कण्टकं प्रतिबन्धरहितं यथा स्यात् तथा, पाति रक्षति। तस्मादयं धन्य इति भावः ॥ ९७ ॥

**पुनरिति**। पुनश्च पुनरपि सश्लाघं यथा तथा आह—

त्यजतु विहितमेतद्देशवासी निषिद्धम्
भजतु तदपि लोके नास्ति धन्यस्तदन्यः ॥
त्रियुगपदनखश्रीदत्तशुद्धिर्यदङ्गे
लगति दुरितभङ्गे लग्नको गाङ्गपूरः ॥ ९८ ॥
प्रौढेषु गौडेषु च कान्यकुब्जेष्वङ्गेषु[1] वङ्गेषु च मैथिलेषु ॥
अन्येषु सत्स्वेवं[2] बुधेषु धन्येष्वद्यापि जीवन्त्यधिभूमि विद्याः ॥ ९९ ॥
इदं तावदवधेहि ॥ २६ ॥—

**त्यजत्विति।** किंच एतद्देशवासी काशीक्षेत्रनिवासी जनः, विहितं श्रुति-स्मृति-विहितं कर्म त्यजतु, तथा निषिद्धं श्रुति-स्मृतिषु अनिष्टसाधनत्वेन बोधितं भजतु करोतु आचारत्विति यावत्। तदपि निषिद्धाचरणेऽपि, लोके तदन्यः एतद्देशवासिन इतरः, धन्यः पुण्यवान् नास्ति। कुतः। यस्मात् त्रीणि युगानि युग्मानि उत्पत्त्यादिषट्कं यस्य सः तस्य त्रियुगस्य, उत्पत्त्यादिषट्कं च–"उत्पत्तिं च विनाशं च भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" इति। श्रीविष्णोः पदसंबन्धिनखानां श्रिया कान्त्या दत्ता समर्पिता शुद्धिः पावित्र्यं यस्य सः, अत एव दुरितानां पापानां भङ्गे विनाशे लग्नकः प्रतिभूरूपः ('जामीन' इति महाराष्ट्रभाषाप्रसिद्धः) "स्युर्लग्नकाः प्रतिभुवः" इत्यमरः। गाङ्गपूरः गङ्गाप्रवाहः, यदङ्गे यस्य काशीनिवासिजनस्य शरीरे, लगति संसक्तो भवति। 'लगे सङ्गे' इत्यस्य रूपम्। तेन चात्रत्यजनः पातक्यपि शुद्धो भवतीति भावः ॥ ९८ ॥

**प्रौढेष्विति।** अपि च प्रौढेषु प्रगल्भेषु प्रतिभायुक्तेष्विति यावत्। प्रतिभा च "प्रज्ञा नवनवोन्मेषशालिनी प्रतिभोच्यते" इत्युक्ता ज्ञेया। गौडेषु गौडदेशस्थजनेषु, कान्यकुब्जेषु तद्देशनिवासिजनेषु, तथा अङ्गेषु अङ्गवासिषु, वङ्गेषु वङ्गदेशवासिषु, मैथिलेषु मिथिलादेशनिवासिषु च, तथा अन्येषु उक्तान्यदेशेषु पाञ्चालादिषु सत्स्वपि, काशीनिवासिषु इति शेषः पूर्वापरसंबन्धात् ज्ञेयः। धन्येषु विश्वेश्वरदर्शन-गङ्गास्नानादिना पुण्यवत्सु, बुधेषु पण्डितेष्वेव अधिभूमि भूमौ, सप्तम्यर्थस्य द्योतकोऽधिः। तस्य विभक्त्यर्थेऽव्ययीभावः। अद्यापि कलौ युगेऽपि, विद्याः वेदशास्त्रादयः जीवन्ति विद्यन्ते। अयं भावः–गौड-वङ्ग-मैथिलादिदेशेषु विद्यासंपन्नेषु सत्स्वपि तदपेक्षया काश्यामेव विद्याधिक्यं ज्ञेयम्। तस्माच्च 'शस्त्रैर्जीवति शास्त्रमुज्झति' इत्यादि पूर्वोक्तं दूषणं नैवात्र संगच्छत इति ॥ ९९ ॥

**इदमिति।** अपि च इदं मया वक्ष्यमाणं तावत् साकल्येन "यावत्तावच्च साकल्ये" इत्यमरः। अवधेहि सम्यगाकर्णय ॥ २६ ॥

---

१ 'ष्वगाधमेधेषु च'. २ 'सत्स्वेषु'.

एतद्देश्यप्रचुरचरितान्यन्यदेशस्थितानाम्
रोचन्ते चेन्ननु[1] न मनसे मा रुचन्काऽत्र हानिः ॥
प्राज्ञाः पुत्रा जनयितृहृदे पश्य यद्वत्स्वदन्ते
तद्वद्विद्वन्न परमनसे तावता कोऽत्र दोषः ॥ १०० ॥

किंच—

प्रातश्शीतजले निमज्य विबुधानभ्यर्चयत्युच्चकै-
रार्यः पर्युषितं तु नाभ्यवहरत्यन्धः क्षुधान्धो[2]ऽप्यसौ ॥
भागे गोमयलिप्त एव पचते भुङ्क्ते ततोऽन्यत्र य-
न्नीतं तद्विजहाति भुक्तिनियमो दृष्टः क्व भूयानियान्? ॥१०१॥

---

किं तदित्यपेक्षायामाह–**एतदिति**। एतस्मिन् देशे भवा एतद्देश्यास्तेषां, भवार्थे यत् प्रत्ययः। प्रचुराणि बहूनि "प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु" इत्यमरः। न तु एक-द्वित्राणि। चरितान्याचरणानि, अन्यदेशे तिष्ठन्ति निवसन्तीत्यन्यदेशस्थिता-स्तेषां मनसे रोचन्ते प्रीणयन्ति चेत्, ननु किंवा न रोचन्ते, तर्हि मा रुचन् न रोचन्ताम् "माङि लुङ्" इति लुङ् "न माङ्योगे" इत्यडागमनिषेधश्च। अत्र उभयपक्षेऽपि का हानिः? न कापीत्यर्थः। तत्रोदाहरणम्–प्राज्ञाः विद्वांसः पुत्राः जनयित्रोः मातापित्रोः "माता–पितरौ पितरौ मातर–पितरौ प्रसू–जनयितारौ" इत्यमरः। हृदे मनसे यद्वत् यथा स्वदन्ते रोचन्ते, "रुच्यर्थानां" इति चतुर्थी। तद्वत् तथा परमनसे अन्यमनसे न रोचन्ते, हे विद्वन् सुज्ञ **कृशानो,** अत्र तावता परमनसेऽरोचनेन को दोषः? पुत्राणामिति शेषः। पश्य विचारय। प्रतिवस्तूपमालंकारः। "प्रतिवस्तूपमा तु सा। सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः" इति तल्लक्षणात् ॥ १०० ॥

'नीचैर्दुर्यवनैः–' इत्यादिनोक्तं दूषणमपाकरोति–**प्रातरिति**। किंच असावेतद्देशीय आर्यः श्रेष्ठः। प्रातः प्रातःकाले, शीतजले निमज्ज्य स्नात्वा, विबुधान् विश्वेश्वर-बिन्दुमाधव-ढुण्ढिविनायकादिदेवान् उच्चैः सम्यक् अर्चयति पूजयति। अनन्तरं क्षुधा क्षुधया अन्धः पीडितोऽपि, पर्युषितं निशावशिष्टं अन्धः अन्नं "भक्तमन्धोऽन्नं" इत्यमरः। तु नाभ्यवहरति नैव भुङ्क्ते, किंतु तत्कालं पक्त्वैव भुङ्क्ते इत्यर्थः। तच्च स्वतः गोमयलिप्ते गोमयेनालेपिते भागे प्रदेशे पचते, भुङ्क्ते भुनक्ति च। किंच ततः पाकस्थानात्, अन्यत्र यत् स्वतोऽन्येन केनापि वा नीतं चेत्, तद्विजहाति त्यजति च। ततः भुक्तेः भोजनस्य नियमः इयान् एतत्परिमाणः इदम्शब्दात् वतुपि वस्य घादेशे तस्य चेयादेशे इदम इशादेशे "यस्येति च" इतीकारलोपे च सिद्धमिदम्। भूयान् महान् क्व दृष्टः? न कुत्रापीत्यर्थः। एवं च यवनादिभिरवलोकितेऽपि एतन्नियमदार्ढ्यान्न तावद्दूषणावहमिति भावः। इतस्तावन्मध्यदेशवर्णनम् ॥ १०१ ॥

---

1 'रोचन्ते चेदथ'. 2 'क्षुन्दधः'.

# अथ समुद्रवर्णनम् ८.

इति विमानं दूरतः प्रस्थाप्य साञ्जलिबन्धनम्—

भुवनकदनक्रुध्यद्वृद्धश्रवःकुलिशायुध-
प्रचकितगिरिप्राणत्राणप्रतिष्ठितकीर्तये ॥
प्रसृमरमरुन्नाट्याचार्यप्रणर्त्तितवीचये
महितजनतामान्यायास्मै महोदधये नमः ॥ १०२ ॥

कृ०—सहासम्—

पामरैरप्यपेयानां नीराणां परिपातरि ॥
आश्रये जलजन्तूनामानिनंसा कथं तव ? ॥ १०३ ॥

---

अथ समुद्रवर्णनार्थं प्रस्तौति-**इतीति**। इत्येवमुक्त्वा विमानं दूरतः प्रस्थाप्य नीला, साञ्जलिबन्धं यथा तथा । प्राहेति शेषः ।

**भुवनेति**। भुवनानां लोकानां कदनेन उत्पतनवशान्नाशनेन क्रुध्यन् क्रोधं कुर्वन् यो वृद्धश्रवा इन्द्रः "इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः । वृद्धश्रवाः—" इत्यमरः । तस्य कुलिशायुधेन वज्राख्यप्रहरणात् "वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः" "आयुधं तु प्रहरणं" इत्युभयत्राप्यमरः । प्रकर्षेण अतिशयेन चकितस्य भीतस्य गिरेः मैनाकस्य प्राणत्राणेन प्राणसंरक्षणेन प्रतिष्ठिता स्थिरीकृता कीर्तिर्यशो यस्य तस्मै । पूर्वं हि सपक्षाः पर्वता इतस्तत उत्पत्य लोकानत्रासयन् । तत इन्द्रेण तेषां पक्षाश्छिन्नाः । परं च मैनाकाख्यो हिमवतो नगाधिराजस्य सूनुः समुद्रे निमज्ज्य स्थित इत्यादिपौराणिकी कथात्रानुसंधेया । प्रसृमरः प्रसरणशीलः "सृ—घस्यदः—" इति क्मरच् प्रत्ययः । स चासौ मरुद्वायुश्च स एव नाट्याचार्यः सूत्रधारस्तेन प्रणर्तिता ताण्डविता वीचयो लहर्यो यस्य तस्मै, तथा महितजनतायाः मान्यजनसमूहस्य "ग्राम-जन-बन्धुभ्यः" इति समूहार्थे तल् । मान्याय अस्मै पुरोदृश्यमानाय महोदधये महासमुद्राय नमः ॥ १०२ ॥

**कृशानुः**। हासेन परिहासेन सहितं यथा तथा प्राह—

**पामरैरिति**। पामरैर्नीचैरपि अज्ञैरिति वा, किमुत श्रेष्ठैः । अपेयानां पातुमयोग्यानां क्षारत्वात् पक्षे निषिद्धत्वाच्चेति भावः । नीराणां उदकानां 'इराणां' इति पाठे, इराणां सुराणां जलानां चेति श्लेषादर्थद्वयम् । । "इरा भू-वाक्-सुराप्सु स्यात्" इति नानार्थः । परिपातरि परितः आसमन्तात् पातरि रक्षके, पक्षे पानकर्तरि च । जलजन्तूनां मत्स्यादीनां, डलयोरेकत्वस्मरणात् जडजन्तूनां मूर्खाणां च आश्रये आश्रयभूते, आनिनंसा नमस्कर्तुमिच्छा 'णम प्रह्वत्वे' इत्यस्मात् सन्नन्तात् प्रत्ययान्तत्वादप्रत्ययः । तव कथम् ? जातेति शेषः ॥ १०३ ॥

---

१ 'कदनोत्क्रुध्यद'. २ 'मिराणां'. ३ 'जडजन्तूनां'.

मम त्वेधमानपरुषघोषे खल्वेतस्मिन् रोषे[1] एवोन्मिषति ॥ २७ ॥

सन्ततं क्रन्दते सर्वो दीप्यमानोदराग्नये ॥

महापाय–समुद्राय दरिद्रायैव कुप्यति ॥ १०४ ॥

समृद्धो[2]ऽप्ययमतिलुब्धतया बुद्धिमद्भिरनादृत्यः ॥ २८ ॥

पश्य—

रत्नाकरोऽपि च रमाभ्युदयालयोऽपि

स्वर्णस्थली[3]रधिगतोऽपि बहूर्मिकोऽपि[4] ॥

---

**ममेति** । किंच मम तु एधमानः वर्द्धमानः पुरुषः कठोरः घोषो गर्जना यस्य तस्मिन्नेतस्मिन् समुद्रविषये, खलु निश्चयेन रोष एव क्रोध एव "कोप-क्रोधामर्ष-रोष-" इत्यमरः । उन्मिषति प्रकटीभवति ॥ २७ ॥

रोषोन्मेषकारणं श्लेषेण समर्थयति—**संततमिति** । सर्वोऽपि जातावेकवचनम् । सर्वे जना इत्यर्थः । महत् च तत् पायसं क्षीरान्नं च तस्मिन् मुदं राति गृह्णातीति तस्मै, प्रकृतपक्षे महत्यः आपः जलानि यस्मिन् तस्मै महापाय इति विशेषणम् । समुद्राय, दीप्यमानः प्रदीप्तः उदराग्निर्जठराग्निर्यस्य तस्मै, पक्षे दीप्यमानः उदरे मध्ये अग्निर्वाडवानलः यस्य तस्मै, अत एव संततं निरन्तरं क्रन्दते अहं क्षुधितः मह्यं देहि देहि इति रुदते, पक्षे गर्जते ( चतुर्थ्यन्तमेतत् ) दरिद्रायैव पक्षे दुर्गतये कुप्यति । न तु कश्चिदपि पुरुषः धनादिसंपन्नाय कुप्यति धनादिलोभात्, दरिद्रात्तु किमपि नैव लभ्यते तस्मात्तादृशायैवेति भावात्सुभाषितरूपोऽयं श्लोकः । श्लेषमूलकश्चार्थान्तरन्यासोऽलंकारः ॥ १०४ ॥

**समृद्धोऽपीति** । किंचायं समुद्रः समृद्धः रत्नादिसंपत्तियुक्तोऽपि, पुनरपि लुब्धतया लोभयुक्ततया हेतुना बुद्धिमद्भिः प्रशस्तबुद्धियुक्तैः अनादृत्यः आदरानर्हः ॥ २८ ॥

**पश्येति** । आदरानर्हत्वमेवोपपादयामीति भावः ।

**रत्नाकर इति** । अयं समुद्रः रत्नानां मौक्तिकविद्रुमादीनां कौस्तुभादिचतुर्दशरत्नानां च आकरः उत्पत्तिस्थानमपि "आकरो निवहोत्पत्तिस्थान-श्रेष्ठेषु कथ्यते" इति विश्वप्रकाशः । रमायाः लक्ष्म्याः अभ्युदयस्य समृद्धेः उद्भवस्य च आलयः गृहमपि, स्वर्णस्थलीः सुवर्णयुक्तस्थलानि सुष्ठु अर्णः जलं "अम्भोर्णस्तोय-पानीय-" इत्यमरः । तद्युक्ताः स्थलीरिति च, अधिगतः प्राप्तोऽपि, बह्व्यः ऊर्मिकाः अङ्गुलीयकानि तरङ्गाश्च यस्य सः "अङ्गुलीयकमूर्मिका" इति "भङ्गस्तरङ्ग ऊर्मिर्वा" इति चामरः । तरणीनां नावां प्रचारात् "स्त्रियां नौस्तरणिस्तरिः" इत्यमरः । तादृशः उक्तप्रकारः धनोपचयकृत् बहुसंचयकारकः अर्थाद्द्रव्यस्य । घनानां मेघानां उपचयकृत् वृद्धिकर्त्ता च, असौ

---

१ 'दोष एव'. २ 'समुद्रोऽपि'. ३ 'स्थिती'. ४ 'महोर्मिकोऽपि'.

ताद्दग्घनोपचयकृत्तरणिप्रचारा—
न्नोपैत्यहो वितरणित्वमसौ कदापि ॥ १०५ ॥

सृष्टिरेवास्य विफलेति मे दृष्टिः ॥ २९ ॥

तथा हि—

नास्त्येषामुपयुक्तता तटतरोः[1] सस्योपयोगः कुतः ?
न स्नानाय च योग्यताऽस्य पयसां का नाम पानार्हता ? ॥
उद्गर्जन्तमियन्तमन्तरुषितैर्[2] दुर्जन्तुभिर्भीषणम्
स्रष्टुः सृष्टवतो जलाशयममुं कोऽवाशयः कथ्यताम् ? ॥१०६॥

यस्य स्वर्णश्रिय उरुतरा नित्यमायान्त्ययत्नात्
तेन स्वायत्यनुगुणतया न क्रियेत व्ययश्चेत् ॥
वह्निग्रासो भवति विधितो[3] मन्थनं बन्धनं वा
लक्ष्मीं प्रेप्सोर्जगदधिपतेरत्र साक्षी सरस्वान् ॥ १०७ ॥

---

समुद्रः, वितरणित्वं नौकारहितत्वं दातृत्वं च कदापि नोपैति न प्राप्नोति । नौभिः संचारं कृत्वा बहुधनसंचयकर्तुः पुरुषस्य दातृत्वरहितत्वमनुचितमिति श्लिष्टभावार्थः ॥ १०५ ॥

**सृष्टिरिति** । अस्य समुद्रस्य सृष्टिः सर्गोऽपि, विफला निष्फला व्यर्थैति यावत् । इति मे मम दृष्टिः अभिप्राय इत्यर्थः ॥ २९ ॥

**यथेति** । तदेवोपपादयति—

**नास्तीति** । अस्य समुद्रस्य एषां पयसामुदकानां "पयः कीलालममृतं जीवनं भुवनं वनम् । कबन्धमुदकं पाथः" इत्यमरः । तटतरोः तीरस्थवृक्षस्य उपयुक्तता उपयोगित्वं नास्ति, तर्हि सस्यानां फलानां धान्यानां वा उपयोगः कुतः स्यात् । एषां पयसामित्यनुषञ्जनीयम् । स्नानाय च स्नानं कर्तुमपि योग्यता न, तर्हि पानस्य प्राशनस्य अर्हता योग्यता का नाम ? अर्थान्नास्त्येव । तस्मात् उद्गर्जन्तं उच्चैः शब्दायमानं, इयन्तं एतादृशप्रमाणं महान्तमित्यर्थः । किंच अन्तः मध्ये उषितैः स्थितैः दुर्जन्तुभिः मकरादिदुष्टप्राणिभिः भीषणं भयंकरं च, एतादृशममुं जलाशयं समुद्रं, सृष्टवतः उत्पादयतः स्रष्टुर्ब्रह्मणः को वा आशयः अभिप्रायः ? कथ्यताम् । मन्मते तु कोपि नास्तीत्यर्थः ॥ १०६ ॥

इदानीं श्लेषमूलकदृष्टान्तेन समुद्रस्यानुपयुक्ततामाह—**यस्येति** । यस्य पुरुषस्य उरुतराः अतिबहवः, स्वर्णस्य कनकस्य सुन्दरस्य अर्णसः जलस्य च, श्रियः समृद्धयः नित्यं प्रतिदिनं अयत्नात् प्रयत्नं विनैव आयान्ति, प्राप्नुवन्ति तेन तादृशपुरुषेण स्वस्य आयतेः प्राप्तेः अनुगुणतया अनुरूपत्वेन व्ययः दानादिरूपत्यागः, न क्रियेत

---

१ 'तटतरौ'. २ 'उद्गर्जन्तमनन्त'. ३ 'विदितो'.

किं बहुना—

कुम्भजपीतोत्सृष्टं शिष्टैरस्पृश्यमर्णवमुपेत्य ॥
उद्गततृष्णोऽप्यस्मादुदकं पान्थो जनो न गृह्णाति ॥ १०८ ॥

**वि०**—सखे सर्वगुणाकरः सरित्पतिरेष न दूषणीयः ॥ ३० ॥

तथाहि—

उच्चैःश्रवःप्रदातुर्वृद्धश्रवसे पुनस्तदनुजाय ॥
वामविलोचनदातुर्वदान्यमस्माद्वदाऽन्यमर्णवतः ॥ १०९ ॥

---

चेत्, तर्हि कालान्तरेणेति शेषः विधितः दैववशात्, वह्नेरग्नेः ग्रासः दहनं वडवाग्निकृतं भक्षणं च भवति । अथवा लक्ष्मीं धनसंपत्तिं रमां सीतारूपां च प्रेप्सोः प्राप्तुमिच्छोः, जगतः अधिपती राजा तस्मात् त्रैलोक्याधिपतिर्विष्णुस्तस्मात् श्रीरामचन्द्राच्च, मन्थनं केनापि निमित्तेन ताडनादिरूपं मन्थनं विलोडनं च, तथा बन्धनं निगडादिना शिलापर्वतादिभिश्च सेतुरूपेण भवति । अत्र अस्मिन् विषये, साक्षी साक्षाद्द्रष्टा "साक्षाद्द्रष्टरि–" इति संज्ञायामिनिः । प्रत्यक्षतयानुभवितेत्यर्थः । सरस्वान् समुद्रः । अस्मिन् हि वडवाग्निभक्षणं, विष्णवादिदेवैर्मन्थनं, रामकृतं सेतुबन्धनं च संभूतमिति भावः । तस्माद्द्रव्यवता पुरुषेण एतन्मनसि निधाय पूर्वमेव दानभोगादिना द्रव्यस्य व्ययः कार्य इति भावः । एतदनुगुणमेव भर्तृहरिरप्याह–"दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति" इति । सुभाषितरूपं चैतत् पद्यम् ॥ १०७ ॥

**किमिति** । बहुना उक्तेन किं फलमित्यर्थः ।

संक्षेपेणैव कथयामीत्याह—**कुम्भजपीतेति** । कुम्भात् जात उत्पन्नः कुम्भजोऽगस्त्यः तेन प्रथमं पीतं प्राशितं पश्चात् उत्सृष्टं त्यक्तम् । मूत्रद्वारेणेति भावः । अत एव शिष्टैः सज्जनैः अस्पृश्यं स्प्रष्टुमयोग्यमर्णवं समुद्रं उपेत्य प्राप्य, उद्गता अतिशयेन प्राप्ता तृष्णा तृषा यस्य तथाभूतोऽपि पान्थः पथिकः जनः लोकः, अस्मात् समुद्रात् उदकं न गृह्णाति । क्षारवत्त्वादिति भावः ॥ १०८ ॥

**विश्वावसुराह सखे इति** । हे सखे मित्र, सर्वगुणानामाकरः खनिरूपः "खनिः स्त्रियामाकरः स्यात्" इत्यमरः । सरितां नदीनां पतिश्च एषः समुद्रः न दूषणीयः ॥ ३० ॥

**तथेति** । दूषणानर्हत्वमेवोपपादयति—

'यस्य स्वर्णश्रियः-' इत्यादिनोक्तं दूषणं परिहरति– **उच्चैरिति** । वृद्धे जरसा बधिरे श्रवसी कर्णौ "कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः" इत्यमरः । यस्य तस्मै कस्मैचित्पुरुषाय, वस्तुतस्तु इन्द्राय, उच्चैः महतोः श्रवसोः कर्णयोः, वस्तुतः उच्चैःश्रवसोनाम्नः अश्वस्य "हय उच्चैःश्रवाः सूतः" इत्यमरः । प्रदातुः । नैतावदेव

---

१ 'च्छिष्टम्'.

अमृतं विबुधेभ्योऽदादभीष्टफलदं तरुं च धेनुं च ॥
दिग्वसनाय सितांशुकमीक्षित एतादृशः क्व वा दाता? ॥११०॥
अमुष्य खलु भाग्यवत्तां शेषादयोऽपि वक्तुमशक्ताः ॥ ३१ ॥

पश्य—

जह्नोरपत्यं जगतः पवित्रम्
कलत्रमब्धेस्तनयः कलात्मा ॥
कन्या तु धन्या कमला बिभर्ति
जामातृभावं जगदीश एव ॥ १११ ॥

---

किंतु पुनः तस्य बधिरस्य इन्द्रस्य च अनुजाय कनिष्ठबन्धवे (वामनेत्ररहिताय,)विष्णवे च " उपेन्द्र इन्द्रावरजः " इत्यमरात् विष्णोरिन्द्रानुजत्वं प्रसिद्धम् । वामस्य सव्यस्य विलोचनस्य नेत्रस्य चन्द्रात्मकस्य च दातुः । श्रीविष्णोर्हि दक्षिणनेत्रं सूर्यो वामनेत्रं च चन्द्र इति प्रसिद्धम् । अस्मात् अर्णवतः समुद्रात् पञ्चम्यर्थे तसिः । वदान्यं उदारं अन्यं वद कथय ? सर्वापेक्षया विकलाङ्गप्रदानमतिदुष्करमिति भावः ॥ १०९ ॥

**अमृतमिति** । किंच अयं समुद्रः, अमृतं पीयूषं मोक्षं च, विबुधेभ्यः देवेभ्यः ज्ञानिभ्यश्च, अदात् ददौ । ' डुदाञ् दाने ' इत्यस्मात् लुङि " गाति-स्था-" इति सिचो लुक् । अभीष्टफलदं इच्छितफलदातारं, एतदुभयत्रापि संबध्यते । तरुं कल्पवृक्षं धेनुं कामधेनुं च अदात् । दिश एव वसनं वस्त्रं यस्य तस्मै कस्मैचिद्दरिद्राय वस्त्ररहिताय, श्रीशंकराय च, सितं शुभ्रं अंशुकं वस्त्रं, सिताः श्वेताः अंशवः किरणा यस्य स सितांशुः स एव सितांशुकश्चन्द्रः स्वार्थे कः । तं च अदात् । तस्मात् एतादृशसमुद्रसदृशः दाता क्व वा ईक्षितः अवलोकितः ? न कुत्रापीत्यर्थः ॥ ११० ॥

**अमुष्येति** । अमुष्य समुद्रस्य भाग्यवत्तां ऐश्वर्यवत्त्वं, शेषादयः सहस्रमुखशेषसदृशाः अत्रादिशब्दः सादृश्ये । "भूवादयो धातवः" इति पाणिनिसूत्रे इव । किमुत अन्ये । वक्तुं कथयितुमशक्ताः असमर्थाः ॥ ३१ ॥

भाग्यवत्तामेव दर्शयति—**जह्नोरिति** । अस्य अब्धेः समुद्रस्य जह्नोः एतन्नाम्नो मुनेः अपत्यं कन्या, तच्च जगतः पवित्रं पवित्रकारकं, न सामान्यम् । कलत्रं पत्नी । " कलत्रं श्रोणि-भार्ययोः " इत्यमरः । तथा अब्धेरिति सर्वत्रानुषञ्जनीयम् । तनयः पुत्रः कलात्मा कलास्वरूपः कलाभिर्वर्धमान इत्यर्थः । चन्द्रः, कन्या तु अत्र तुश्चार्थे । कमला लक्ष्मीः धन्या भाग्यवती, न तु हीना । अपि च जगतां स्वर्ग-मृत्यु-पातालादिलोकानां ईशः अधिपतिः श्रीविष्णुः, जामातृभावं कन्यापतित्वं बिभर्ति धारयत एव । न त्वीदृशी भाग्यवत्ता त्रैलोक्येऽपि कस्य पुरुषस्यास्तीति भावः ॥ १११ ॥

# अथ जगन्नाथक्षेत्रवर्णनम् ९.

अन्यच्चेदमस्य भागधेयं वर्तते ॥ ३२ ॥

यत्तीरे पुरुषोत्तमस्थलमिदं यक्षाप्सरः-किन्नर-
श्रेष्ठैर्[1]नित्यमधिष्ठितं भगवतः सान्निध्यसौख्यास्पदम्[2] ॥
अत्र त्यक्तवतामसून् करगता मुक्तिस्तदास्तामहो
देहो दाहविनाकृतोऽप्यविकृतः काष्ठादिवत्तिष्ठति ॥ ११२ ॥

किं च—

निवेदितस्यात्र रमासखाय नीचाहृतस्यापि किलौदनादेः[3] ॥
भक्त्योशनं[4] हन्त भवार्जितानां महांहसां नाशनमामनन्ति ॥ ११३ ॥

---

अथेदानीं तत्तीरस्थजगन्नाथक्षेत्रवर्णनमाक्षिपति—**अन्यच्चेति**। अस्य समुद्रस्य अन्यच्चान्यदपि, इदं वक्ष्यमाणरूपं भागधेयं भाग्यं, अस्तीति शेषः ॥ ३२ ॥

**यत्तीर इति**। यस्य समुद्रस्य तीरे अर्थाद्दक्षिणे। भगवतः ईश्वरस्य सान्निध्येन संनिधित्वेन जागरूकतयेत्यर्थः। सौख्यास्पदं सुखस्य स्थानं अत एत यक्षाश्च अप्सरसः स्वर्वेश्याश्च किंनराश्च एते देवविशेषाः। तेषु श्रेष्ठैः। यद्वा यक्षादयः श्रेष्ठा मुख्या येषु तैः सर्वैरपि देवैरित्यर्थः। नित्यं संततमधिष्ठितमाश्रितं, एतादृशमिदं पुरो दृश्यमानं, पुरुषोत्तमस्य भगवतो जगन्नाथाभिधस्य स्थलं स्थानं, अस्तीति शेषः। अत्र क्षेत्रे असून् प्राणान् "पुंसि भूम्न्यसवः प्राणाः" इत्यमरः। त्यक्तवतां जीवितकालपर्यन्तमत्रैव स्थित्वा देहं त्यक्तवतामित्यर्थः। न तु आत्महत्यादिना। दोषास्पदत्वात्। मुक्तिः कैवल्यं करगता हस्तस्थिता स्वाधीनेत्यर्थः। तत्तु आस्ताम्। किंतु अत्र देहः शरीरं, मृत इति ज्ञेयम्। दाहेन मन्त्राग्निना विनाकृतः रहितोऽपि, अविकृतः दुर्गन्ध्यादिविकाररहितः, काष्ठादिवत् आदिशब्देन शिलापाषाणसंग्रहः। तिष्ठति। अहो! इदमतीवाश्चर्यमित्यर्थः ॥ ११२ ॥

**निवेदितस्येति**। किंच अत्र अस्मिन् क्षेत्रे रमाया लक्ष्म्याः सखा तस्मै "राजाहः-" इति टच्। जगन्नाथाभिधाय विष्णवे इत्यर्थः। नीचैः कुल-शील-विद्या-कलादिभिर्हीनैः, आहृतस्य आनीतस्य समर्पितस्येत्यर्थः। ओदनादेः अन्नादिनैवेद्यस्येत्यर्थः। किमुत महद्भिरर्पितस्य। भक्त्या प्रीत्या अशनं भक्षणं, भवे संसारे अर्जितानां संपादितानां, महान्ति च तानि अंहांसि पापानि च तेषां "पापं किल्बिषकल्मषम्। कलुषं वृजिनैनोघमंहो दुरितदुष्कृतम्" इत्यमरः। नाशनं विनाशकारकं, भवतीति शेषः। इति आमनन्ति कथयन्ति। अत्रत्या जना इति शेषः। किलेति प्रसिद्धौ। हन्तेति हर्षे ॥ ११३ ॥

---

१ 'प्रेष्ठैः'. २ 'सान्निध्यमुख्यास्पदम्'. ३ 'किलौदनस्य'. ४ 'भक्ताशनं'.

सभक्त्युन्मेषम्—

दारुणि संनिहिताय प्राज्ञैर्हुतमश्नते मखेषु हविः ॥
शिशिराय नित्यरुचये शुचये रचयेयमद्भुताय नतीः ॥ ११४ ॥

## अथ गुर्जरदेशवर्णनम् १०.

इति नमस्कृत्य सुदूरमन्यतो विमानं प्रस्थाप्य सश्लाघम्—

सखे स एष सर्वसंपदामास्पदतया त्रिदशालयस्यादेश इव गुर्जरदेशश्चक्षुषोः सुखीकरोति[1] ॥ ३३ ॥

अत्र हि—

सकर्पूरस्वादुक्रमुकनववीटीरसलस-
न्मुखाः सर्वश्लाघापदविविधदिव्याम्बरधराः ॥

**सभक्त्युन्मेषम्** । अस्य पूर्वं पुनरिति शेषः । अन्ते च आहेति ।

**दारुणीति** । दारुणि काष्ठे संनिहिताय संनिधित्वेन स्थिताय, प्राज्ञैः पण्डितैः मखेषु यागेषु हुतं विधिवदर्पितं हविः घृतादिहवनीयद्रव्यं अश्नते ग्रहीतरि पक्षे हविर्भुजे इत्यर्थः । विरोधमाह–शिशिराय दयया शीतलाय शिशिरऋतवे च, नित्या विनाशरहिता रुचिः कान्तिर्यस्य तस्मै शाश्वतप्रभायेत्यर्थः । पुनरपि विरोधमाह शुचये ग्रीष्मर्तवे नित्यशुद्धाय इति विरोधपरिहारः । अग्नये च "शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोरपि । ग्रीष्मे हुतवहेऽपि स्यात्" इति विश्वः । अद्भुताय लोकविलक्षणैः कर्मभिर्विस्मयकराय, नतीर्नमस्कारान् रचयेयम् कुर्याम् । 'रच प्रतियत्ने' इत्यस्माच्चौरादिकाद्विधिलिङ्युत्तमपुरुषैकवचनम् ॥ ११४ ॥

अथ गुर्जरदेशवर्णनप्रस्तावमाह—**इतीति** । इत्येवमुक्त्वा नमस्कृत्य जगन्नाथमित्यर्थः । सुदूरं तत्क्षेत्रादतिदूरं अन्यतोऽन्यत्र स्थले विमानं प्रस्थाप्य सश्लाघं प्राहेति ।

**सख इति** । हे सखे, सः य एतावत्कालपर्यन्तं केवलं श्रुतः स इत्यर्थः । एषः प्रत्यक्षतया दृश्यमानः, सर्वसंपदामास्पदतया स्थानतया त्रिदशालयस्य स्वर्गस्यादेशः आदिश्यते प्रतिनिधितया निर्दिश्यते तथा, प्रतिमारूप इवेत्यर्थः । गुर्जरदेशः चक्षुषोः नेत्रयोः सुखीकरोति आनन्दमुत्पादयति ॥ ३३ ॥

तदेवाह—**सकर्पूरेति** । अत्र हीत्यनुषञ्जनीयम् । अस्मिन्देशे इति तदर्थः । कर्पूरेण सहिता युक्ता सकर्पूरा सा च स्वादुक्रमुका मधुरपूगीफलसहिता । "घोण्टा तु पूगः क्रमुकः" इत्यमरः । सा चासौ नवा वीटी ताम्बूलपट्टिका च तस्याः रसेन

१ 'चक्षुषी सुखिनी करोति', 'सुखाकरोति'.

लसद्रत्नाकल्पा घुमघुमितदेहाश्च घुसृणै-
र्युवानो मोदन्ते युवतिभिरमी तुल्यरतिभिः ॥ ११५ ॥

अत्र[2] वधूनामप्यन्यादृशं सौन्दर्यम् ॥ ३४ ॥

तप्तस्वर्णसवर्णमङ्गकमिदं ताम्रो मृदुश्चाधरः
पाणी प्राप्तनवप्रवालसरणी वाणी सुधाधोरणी ॥
वक्त्रं वारिजमित्रमुत्पलदलश्रीसूचने लोचने
के वा गुर्जरसुभ्रुवामवयवा यूनां न मोहावहाः ? ॥ ११६ ॥

कृ०—सत्यमेवं तथापि नैते सार[3]वस्तूपभोगचतुराः ॥ ३५ ॥

---

रक्तवर्णद्रवेण "रागे द्रवे रसः" इत्यमरः । लसन्ति शोभमानानि मुखानि येषां ते, तथा सर्वेषां जनानां या श्लाघा प्रशंसा तस्याः पदानि पात्रभूतानि विविधान्यनेकप्रकाराणि च दिव्यानि च यान्यम्बराणि वस्त्राणि तेषां । "अम्बरं व्योम्नि वाससि" इत्यमरः । धराः धारकाः । लसन्तः रत्नानां मणीनां आकल्पाः भूषणानि येषां तथाभूताः । घुसृणैः कुङ्कुमैः-"अथ कुङ्कुमम् । काश्मीरजन्माग्निशिखं वरं" इत्यमरटीकायां व्याख्यासुधायां "वरं तु घुसृणे किंचिदिष्टे" इति हैमः । घुमघुमिताः सुवासयुक्ताः देहा येषां तथाभूताश्च अमी युवानः तरुणाः, तुल्या समाना रतिरनुरागो यासां ताभिः युवतिभिः तरुणस्त्रीभिः सह मोदन्ते रतिसुखानन्दमनुभवन्तीत्यर्थः ॥ ११५ ॥

**अत्रेति** । अत्र देशे वधूनां स्त्रीणां "वधूर्जाया-स्नुषा-नार्योः स्पृक्का-सारिवयोरपि" इति हैमः । अपि सौन्दर्यं अन्यादृशं भिन्नप्रकारकम्, इतरविलक्षणमित्यर्थः ॥ ३४ ॥

तदेव प्रतिपादयति—**तप्तेति** । इदं इदानीं दृश्यमानं, एतत् सर्वत्र लिङ्गवचनमनुसृत्यानुषञ्जनीयम् । गुर्जरसुभ्रुवां गुर्जरदेशीयस्त्रीणां, अङ्गं शरीरमेवाङ्गकं स्वार्थे कः । तप्तं पुटपाकेन शोधितं च तत् स्वर्णं सुवर्णं च तेन सवर्णं सदृशम् । अधरः अधरोष्ठश्च ताम्रो रक्तवर्णः मृदुश्च कोमलोऽपि । पाणी हस्तौ, प्राप्ता नवानां नूतनानां पल्लवानां सरणिः पद्धतिर्ययोस्तथाभूतौ । नूतनपल्लवसदृशौ सुकुमारावित्यर्थः । वाणी सुधाधोरणी अमृतस्रवा अतिमधुरेत्यर्थः । वक्त्रं मुखं च वारिजमित्रं कमलसमानमित्यर्थः । लोचने नेत्रे च उत्पलस्य कमलस्य यद्दलं पत्रं तस्य श्रियः शोभायाः सूचने सूचके । नेत्रदर्शनेन कमलपत्रस्मरणं भवतीति भावः । एवं गुर्जरसुभ्रुवां के वा अवयवाः यूनां तरुणानां मोहावहाः मोहसंपादकाः न भवन्ति ? अपि तु सर्वेऽपि भवन्तीति ॥ ११६ ॥

**सत्यमिति** । एवं त्वत्कथितप्रकारं सत्यं, तथापि एते अत्रत्यपुरुषाः सारवस्तूनां श्रेष्ठवस्तूनां उपभोगे चतुराः निपुणाः न भवन्ति ॥ ३५ ॥

---

१ 'कनद्रत्नाकल्पा'. २ 'अत्रत्यानाम्'. ३ 'सरसवस्तूपभोग'.

तथाहि—

व्रीडामारव्यतिकरवतीर्विद्युदाभाः कृशाङ्गीः
क्रीडायोग्येऽप्यहह समये गेह एव त्यजन्तः ॥
नित्यासक्ता निरुपममणि-श्रेणिवाणिज्यलाभे
बंभ्रम्यन्ते बहुदिनपरिप्राप्यदेशान्तरेषु ॥ ११७ ॥

वि०—मन्दमनीष ! स एष पुरुषाणां गुणविशेष एव न तु दोषः ॥३६॥

देशे देशे किमपि कुतुकादद्भुतं लोकमानाः
संपाद्यैव द्रविणमतुलं[1] सद्म भूयोऽप्यवाप्य ॥
संयुज्यन्ते सुचिरविरहोत्कण्ठिताभिः सतीभिः[2]
सौख्यं धन्याः किमपि दधते सर्वसंपत्समृद्धाः ॥ ११८ ॥

तथाहि । अनैपुण्यमेवोपपादयामि शृण्वित्याह—व्रीडामारेति । एते इत्यनुषञ्जनीयम् । निरुपमानां बहुमूल्यानां मणीनां श्रेणिभी राशिभिर्यद्वाणिज्यं क्रयविक्रयादिव्यापारः तस्माद्यो लाभो मूलाधिकद्रव्यप्राप्तिः तस्मिन् नित्यासक्ताः सततमासक्ताः सन्तः, व्रीडा लज्जा च मारो मदनश्च "मदनो मन्मथो मारः" इत्यमरः । तयोः यः व्यतिकरः मिश्रीभवनं, सः अस्ति यासां ताः, न केवलं कामाकुलाः न केवलं लज्जायुक्ताश्चेति भावः । अनेन तासां कुलीनत्वं सूचितम् । विद्युदिव आभा कान्तिः यासां ताः न तु कुरूपाः कृष्णवर्णाश्च । एतादृशाः कृशाङ्गीः स्त्रियः क्रीडायोग्ये मदनकेलिसमुचितेऽपि समये काले तारुण्यावस्थायामित्यर्थः । अहह इति खेदे । "अहहेत्यद्भुते खेदे" इत्यमरः । गेहे गृहे एव त्यजन्तः सन्तः, बहुभिः न तु त्रिचतुरैः दिनैः परिप्राप्येषु गन्तव्येषु देशान्तरेषु बंभ्रम्यन्ते पुनः पुनः भृशं वा संचरन्ति । 'भ्रमु अनवस्थाने' इत्यस्य यङन्तस्य लटि रूपम् "सन्यङोः" इति द्वित्वम् "नुगतोऽनुनासिकान्तस्य" इत्यभ्यासस्य नुगागमश्च ॥ ११७ ॥

मन्देति । मन्दमनीष मन्दबुद्धे, सः व्यापारार्थं देशान्तरपरिभ्रमणादिरूपः एष पुरुषाणां गुणविशेषः गुणाधिक्यमेव न तु दोषः ॥ ३६ ॥

गुणत्वमेवोपपादयति—देशे देशे इति । एते देशे देशे किमपि मनोहरं अद्भुतमाश्चर्यकारकं च वस्तु कुतुकात्कौतुकात् "कौतुकं च कुतुकं च कुतूहलम्" इत्यमरः । लोकमानाः पश्यन्तः सन्तः, एवं अमितं न तु अल्पं द्रविणं द्रव्यं संपाद्य, भूयः पुनरपि सद्म गृहं अवाप्य, प्राप्य, सर्वसंपत्समृद्धाः सकलोपभोग्यवस्तुसमृद्धियुक्ताः सन्तः, सतीभिः पातिव्रत्ययुक्ताभिः न तु स्वैरिणीभिः अत एव सुचिरं चिरकालपर्यन्तं यो विरहः स्वप्रियवियोगः तेन उत्कण्ठिताभिः 'कदास्माकं पतिभिः सह संगमो भवेत्' इतीच्छावतीभिः सह, संयुज्यन्ते संगमं कुर्वन्ति । अत एव ते धन्याः सन्तः

१ 'ममितं'. २ 'वधूभिः'.

अनेवंभावोऽपि पुरुषाधमत्वमावेदयति ॥ ३७ ॥

तथाहि—

आकिंचन्यादतिपरिचयाज्जाययोपेक्ष्यमाणो
भूपालानामननुसरणाद्बिभ्यदेवाखिलेभ्यः ॥
गेहे तिष्ठन् कुमतिरलसः कूपकूर्मैः सधर्मा
किं जानीते भुवनचरितं किं सुखं चोपभुङ्क्ते ? ॥ ११९ ॥

तथाहि—

व्यापारान्तरमुत्सृज्य[1] वीक्षमाणो वधूमुखम् ॥
यो गृहेष्वेव निद्राति दरिद्राति स दुर्मतिः ॥ १२० ॥

---

किमप्यनिर्वाच्यं सौख्यं दधते धारयन्ति । 'डु धाञ् धारण-पोषणयोः' इत्यस्माल्ल्यात्मनेपदे प्रथमपुरुषबहुवचनम् । अयं भावः–यथा तावत्कश्चिदपि पान्थो मार्गेण गच्छन् सूर्यातपसंतप्तश्च वृक्षच्छायायां यत्सुखमनुभवति न तदन्येन केनाप्यनुभवितुं शक्यते, तथैव यत्प्रथमं दुःखमनुभूय पश्चात् सुखं प्राप्नोति तदेवाधिकसंतोषास्पदम् । तदुक्तम् विक्रमोर्वशीये महाकविना कालिदासेन–"यदेवोपनतं दुःखात्सुखं तद्रसवत्तरम् । निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः" इति ॥ ११८ ॥

व्यतिरेकमाह–**अनेवंभाव इति** । एवं देशान्तरसंचारादिप्रकारेण भावः स्वभावः "भावः सत्ता-स्वभावाभिप्राय-चेष्टात्मजन्मसु" इत्यमरः । द्रव्यार्जनादिरूपः न भवतीत्यनेवंभावः अर्थात्संततं गृह एव संवास इत्यर्थः । पुरुषाधमत्वं आवेदयति संपादयति ॥ ३७ ॥

**तथाहि** तदेव वक्ष्यामीति भावः ।

**आकिंचन्यादिति** । यः कुमतिः कुबुद्धिः अलसः मन्दश्च अत एव गेहे गृहे तिष्ठन् संश्च कूपे वाप्यां ये कूर्माः कमठाः तैः समानः तुल्यः धर्मः कुत्रापि बहिर्गमनादिरूपः स्वभावः "धर्माः पुण्य-यम-न्याय-स्वभावाचारसोमपाः" इत्यमरः । यस्य सः "धर्मादनिच् केवलात्" इति समासान्तोऽनिच् प्रत्ययः । अत एव नास्ति किंचन द्रव्यादिकं यस्य तस्य अकिंचनस्य दरिद्रस्य भावः आकिंचन्यं तस्मात् संततगृहसंवासात् अतिपरिचयाच्च जायया स्त्रिया उपेक्ष्यमाणः, किंच भूपालानां राज्ञां अननुसरणात् संनिधगमनाभावाच्च, अखिलेभ्यो महाजनेभ्यः बिभ्यदेव भीतिं कुर्वन्नेव, बिभेतेः शतरि रूपम् । अभ्यस्तत्वान्नुमभावः । एतादृशः पुरुषः भुवनचरितं विविधचमत्कारनिरीक्षणादिरूपं जानीते किम् ? तत एव च सुखं च सुखमपि उपभुङ्क्ते किम् ? अपि तु किमपि नैव जानाति, सुखमपि नैव भुङ्क्ते इत्यर्थः ॥ ११९ ॥

**व्यापारेति** । व्यापारान्तरं द्रव्यसंपादनार्थमन्यदेशगमनादिरूपमन्यव्यापारं, उत्सृज्य त्यक्त्वा यः दुर्मतिर्दुर्बुद्धिः पुरुषः, वध्वाः स्त्रियाः मुखं वीक्षमाणः अवलोकयन्

---

१ 'मुद्दिश्य'.

इदं चावधीयताम् ॥ ३८ ॥—

इच्छेद्यस्तु सुखं निवस्तुमवनौ गच्छेत्स राज्ञः सभाम्

कल्याणीं गिरमेव संसदि वदेत्कार्यं विदध्यात्कृती ॥

अक्लेशाद्धनमर्जयेदधिपतेरावर्जयेद्वल्लभान्

कुर्वीतोपकृतिं जनस्य जनयेत् कस्यापि नापक्रियाम् ॥ १२१ ॥

अन्यच्चेदमवधार्यताम् ॥ ३९ ॥—

अयुक्तं युक्तं वा यदभिहितमज्ञेन विभुना

स्तुयादेतन्नित्यं जडमपि गुरुं तस्य विनुयात् ॥

विवित्सुर्नैःस्पृह्यं कथमपि सभायामभिनयेत्

स्वकार्ये संतुष्टे क्षितिभृति रहस्येव कथयेत् ॥ १२२ ॥

---

सन्, गृहेष्वेव निद्राति निद्रित इव स्तब्धरूपतया तिष्ठति, स पुरुषः दरिद्राति दारिद्र्ययुक्तो भवतीत्यर्थः ॥ १२० ॥

**इदमिति ।** इदं च वक्ष्यमाणमप्यवधीयताम् सावधानतया श्रूयतामित्यर्थः ॥३८॥

**इच्छेदिति ।** यस्तु यश्च पुरुषः अवनौ पृथिव्यां सुखं यथा स्यात् तथा निवस्तुं वासं कर्तुं इच्छेत्, सः कृती धन्यः पुरुषः राज्ञः सभां गच्छेत्, तत्र संसदि सभायां च कल्याणीं सभास्थितसर्वजनसुखकरीमेव, अथवा सकलजनरुच्युत्पादिकामेव गिरं वाणीं वदेत् उच्चारयेत् । एवं कार्यं स्वकीयं धनसंपादनरूपं विदध्यात् साधयेत् । कार्यचिकीर्षुणा जनेन न तावत्कुत्रापि कटुभाषणादिकं कर्तव्यं, तस्य च कार्यहानिकरत्वादिति भावः । एवंरीत्या अक्लेशात् राजपुरुषधर्षणादिरूपक्लेशं विनैव धनमर्जयेत् संपादयेत् । किंच धनार्जने सत्यपि अधिपते राज्ञः वल्लभान् प्रियान् पुरुषान् आवर्जयेत् संतोषयेत्, न तु तुच्छबुद्ध्या तिरस्कुर्यात् । अपरं च उपकृतिमुपकारमेव कुर्यात्, कस्यापि शत्रु-मित्रोदासीनाद्यन्यतरस्य जनस्य, अपक्रियामपकारं न जनयेत् नोत्पादयेत् ॥ १२१ ॥

**अन्यदिति ।** अन्यच्चान्यदपि इदं वक्ष्यमाणमवधार्यतां निश्चीयताम् ॥ ३९ ॥

**अयुक्तमिति ।** अज्ञेन बाह्यव्यवहारानभिज्ञेन संपत्त्युन्मत्तेन वा, विभुना राज्ञा अयुक्तं देशकालाद्यनुचितं, वाथवा युक्तं समयानुरूपं यदभिहितमुच्चारितं स्यात्, तदेतत् नित्यं संततं स्तुयात् प्रशंसेत् । किंच तस्य राज्ञः जडं बुद्धिहीनमपि गुरुं पुरोहितं विनुयात् स्तुयात्, तद्द्वारेणैव कार्यसाधनसंभवात् । किंच विवित्सुः स्वविषये अनुकूलप्रतिकूलादिरूपमभिप्रायं वेत्तुमिच्छुः सन् 'विद ज्ञाने' इत्यस्य सन्नन्तस्य रूपम् "सनाशंस–" इत्यादिना उप्रत्ययः । सभायां कथमपि निःस्पृहस्य भावो नैःस्पृह्यं

---

१ 'अवधार्यतां'. २ 'कार्येषु दद्यात्'. ३ 'समये'. ४ 'मवधारणीयम्'. ५ 'गिरा तं च विनुयात्'.

# अथ यमुनानदीवर्णनम् ११.

इत्यलं प्रसक्तानुप्रसक्त्येति दूरतो विमानमानयन् साञ्जलिबन्धम्[1]–

कृष्णाश्लेषविशेषिताऽसितरुचे कालिन्दि तुभ्यं नमः
कुञ्जेभ्यः श्रितताविकाम्बुकणिकापुञ्जेभ्य एषोऽञ्जलिः ॥
गोपीभ्यः परिरिप्सया[2] मुररिपोस्तेषु स्थिताभ्यो नति-
र्नाथायाभिरुपासिताय च नमोवाकानधीयीमहि ॥ १२३ ॥

---

निरभिलाषभावं अभिनयेत् प्रकटयेत् । स्वकार्ये च क्षितिभृति राज्ञि संतुष्टे सति रहस्येव एकान्ते एव कथयेत् । कदाचित् राज्ञा प्रत्यादिष्टेऽपि स्वावमानस्य गोप्यत्वादिति भावः । एतच्छ्लोकद्वयं प्रकृतवर्णनस्यासंगतमिति भाति । किंच सन्नीतिप्रतिकूलमपि । यतो राज्ञः सभायां नयानुसारिभाषणस्यैवाभिरूपैरुक्तत्वात् । यथाहुर्मन्वादयः– "सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् । अब्रुवन् विब्रुवन् वापि नरो भवति किल्बिषी" इति । तदनेन प्रत्युक्तमिव भवतीति मदभिप्रेतम् । अत्र युक्तायुक्तविचारणा तु सर्वथा सुधीभिरेव करणीया ॥ १२२ ॥

अथ यमुनावर्णनमाक्षिपति–**इतीति** । इत्येवमुक्त्वा प्रसक्तस्य प्रकृतस्य गुर्जरदेशवर्णनस्य अनुप्रसक्त्या तत्रत्यपुरुषाणामुत्तमाधमत्वनिरूपणेन, अलं पर्याप्तं इत्युक्त्वा दूरतो दूरं विमानमानयन् अञ्जलिबन्धेन करसंपुटेन सहितं यथा तथा प्राहेति ।

**कृष्णेति** । हे कालिन्दि यमुने श्रीकृष्णाष्टनायिकानामन्यतमे च, कृष्णस्य य आश्लेषः जलविहाररूपः आलिङ्गनं च तेन विशेषिता वर्द्धिता असिता कृष्णवर्णा रुक् कान्तिर्यस्यास्तस्यै तुभ्यं नमः । तथा श्रिताः संलग्नाः तव इमे तावकास्त्वदीया इत्यर्थः । युष्मच्छब्दात् "तस्येदम्" इत्यर्थेऽणि "तवक–ममकावेकवचने" इति तवकादेशः । अम्बुकणिकानां जलकणानां पुञ्जा राशयो येषु तेभ्यः कुञ्जेभ्यः लतागृहेभ्यः "निकुञ्ज–कुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरः । एषः मया क्रियमाणः अञ्जलिः नमस्काररूपः, अस्तु इति शेषः । अपि च मुरस्य मुरनामकदैत्यस्य रिपोः शत्रोः श्रीकृष्णस्य परिरिप्सया आलिङ्गनेच्छया, परिपूर्वकाद्रभेः सन्नन्तादकारप्रत्ययः । "सनि मी-मा-घु-रभ-लभ" इत्यादिना इसादेशः । तेषु कुञ्जेषु स्थिताभ्यः गोपीभ्यः नतिर्नमस्कारः । किंच आभिर्गोपस्त्रीभिः उपासिताय पूजिताय नाथाय श्रीकृष्णाय, नमोवाकान् नमस्कारोक्तीः अधीयीमहि पुनः पुनरुच्चारयामः 'इङ् अध्ययने' इत्यस्मादधिपूर्वात् विधिलिङ्युत्तमपुरुषबहुवचनम् ॥ १२३ ॥

---

१ 'सानन्दम्' इत्यधिकः पाठः क्वचिद्दृश्यते. २ 'परिलिप्सया'.

कृ०– कृतं सखे चोर-जार[1]शिखामणेः कृष्णस्य जगदतिसंधातुरनुसंधानेन ! ॥ ४० ॥

तथाहि—

लुण्ठित्वा नवनीतमन्यसदने लोलेक्षणो भक्षयन्
गोपीभिः परिगृह्य[2] मातृसविधं नीतो मुकुन्दस्तया ॥
'लुण्ठीर्मा नवनीतमित्यभिहितोऽप्येतद्व्यलुण्ठीः किमि'—
त्युक्तो 'मानवनीतमेव हृतमि'–त्यागो जनन्यां न्यधात् ॥१२४॥

किंच—

अंसे सलीलमधिरोप्य शुकं स्वहस्ता—
द्गोप्या भयाकुलदृशः कुतुकी मुकुन्दः ॥

**कृतमिति।** हे सखे **विश्वावसो,** चोर-जारशिखामणेः चोराणां जाराणां चाग्रेसरस्येत्यर्थः। अत एव जगतः तत्स्थलोकस्य अतिसंधातुर्वञ्चयितुः। यद्वा जगतः अति अत्यन्तं संधानं उत्पत्तिः पालनं च अतिसंधानं लयश्च तत्रितयकर्तुः, अनुसंधानेन संस्तवनेन कृतं अलं पर्याप्तमित्यर्थः। पक्षे कृतं लयैतच्छोभनं कृतमिति वार्थः। "कृतं युगेऽलमर्थे स्याद्विहिते हिंसिते त्रिषु" इति मेदिनीकोशात् कृतमित्यस्यालमर्थत्वात् ॥ ४० ॥

**तथेति।** चोर-जारशिखामणित्वमेवोपपादयति—

**लुण्ठित्वेति।** अयं मुकुन्दः श्रीकृष्णः अन्यसदने परकीयगृहे, नवनीतं लुण्ठित्वा चोरयित्वा अत एव लोले चौर्यभयाच्चञ्चले ईक्षणे नयने यस्य तथाभूतः सन् भक्षयन् खादन्, अत एव च गोपीभिर्गोपस्त्रीभिः परिगृह्य कृष्णागमनप्रतीक्षया गूढं स्थित्वा नवनीतचौर्यसमये धृत्वेत्यर्थः। मातुर्यशोदायाः सविधं समीपं "समीपे निकटासन्न–संनिकृष्ट–सनीडवत्। सदेशाभ्याश–सविध" इत्यमरः। नीतः प्रापितः। तदेति शेषः। तया यशोदया 'नवनीतं मा लुण्ठीः मा चोरय,' इति पूर्वमिति शेषः। अभिहितः उक्तोऽपि, एतन्नवनीतं किं कुतो व्यलुण्ठीः अचूचुरः ?' इत्युक्तप्रकारेण उक्तः मात्रा पृष्टः सन् 'मानवनीतमेव हृतं न तु नवनीतम्' नवनीतस्य मनुष्यकर्तृत्वादिति भावः। इत्युक्तप्रकारेण, आगोऽपराधं "आगोऽपराधो मन्तुश्च" इत्यमरः। जनन्यां मातरि यशोदायामेव न्यधात् स्थापितवान्। दधातेर्लुङि–"गाति-स्था-घु–" इति सिचो लुक्। श्लेषालंकारः ॥ १२४ ॥

**अंसे इति।** किंच अयं मुकुन्दः श्रीकृष्णः, कुतुकी कौतुकयुक्तः सन् भयेन कृष्णभीत्या आकुले दृशौ यस्यास्तस्याः कस्याश्चित् गोप्याः अंसे स्कन्धे "स्कन्धो भुजशिरोंऽसो स्त्री" इत्यमरः। लीलया क्रीडया सहितं सलीलं यथा स्यात्तथा स्वहस्तान्निजकरेण शुकं कीरं अधिरोप्य स्थापयित्वा, पुनः 'अंसं स्कन्धं गतं शुकं पक्षे 'अं'

[1] 'चोर–जारशिरोमणेः'. [2] 'परिकृष्य'.

'अंसंगतं शुकमिहापनयेति' वाचम्
तस्या निशम्य स तदंशुकमाचकर्ष ॥ १२५ ॥

अपि च—

नीत्वा राधिकया निशां मुररिपुः प्रातर्गृहानागतस्
'त्वं मा भूरपराधिकः पुनरिति प्रोक्तोऽपि पूर्वं मया ॥
कस्मादेवमभूरिति' श्रि[2]तरुषा निर्भर्सितो लील[3]या
'त्वद्वाचैव सराधिकोऽहमिति' तां व्यामोहयन्मायया ॥ १२६ ॥

वि०—वयस्य मैवं वादीः। स हि परमपावनः सकलजगदंहस्संहरणकृते कृतावतारो वन्दारुजनानन्दनो यदुनन्दनो निन्दापदवीदवीयान् ॥४१॥

---

इत्यक्षरेण संगतं शुकं= अंशुकं वस्त्रं च इह सांप्रतं अपनय दूरीकुरु' इति तस्याः गोप्याः वाचं निशम्य श्रुत्वा, तस्याः गोप्याः अंशुकं वस्त्रं, आचकर्ष अपहृतवान् ॥ १२५ ॥

**नीत्वेति।** अपि च राधिकया सह निशां रात्रिं नीत्वा निशावसानपर्यन्तं तामुपभुज्येत्यर्थः। मुररिपुः श्रीकृष्णोऽयं प्रातः प्रातःकाले, गृहान् स्वगृहं "गृहाः पुंसि च भूम्न्येव निकाय्य-निलयालयाः" इत्यमरात् गृहशब्दस्य पुंस्त्वं नित्यं बहुवचनत्वं च। आगतः प्राप्तः सन्, श्रिता प्राप्ता रुट् क्रोधो यस्यास्तया यशोदयेति शेषः। 'त्वं अपराधः परगृहगमनादिरूपोऽस्यास्तीति अपराधी स एवापराधिकः अपराधकर्तेति यावत्। अपगता राधिका यस्मात्तथाभूतश्च, मा भूः, इति एवं पूर्वं मया प्रोक्तोऽपि, कथितोऽपि, पुनः एवमपराधिकः कस्मात् कारणात् अभूः जातोसि?' इति लीलया बहिः क्रोधप्रदर्शनेऽपि मनसि पुत्रवात्सल्यरूपया। करणे तृतीया। निर्भर्त्सितः सक्रोधमधिक्षिप्तोऽपि, 'भो मातः। त्वद्वाचैव 'अपराधिको मा भूः' इति तव वाण्यैव अहं सराधिकः राधया सहितः जातः' इति तां मातरं यशोदां मायया तदुक्तार्थापह्नवरूपया, अघटितघटनापटीयस्या वा व्यामोहयत् मोहितवान्। अत्र 'लुण्ठित्वा नवनीतं-' इत्यादिश्लोकत्रयेऽपि एकस्यैव वाक्यस्य श्लेषेणान्यार्थकरणादभङ्गश्लेषवक्रोक्तिरलंकारः। तदुक्तम्- "यदुक्तमन्यथा वाक्यमन्यथान्येन योज्यते। श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा" इति ॥ १२६ ॥

एवं कृशानूक्तं दूषणं श्रुत्वा निर्विण्णो **विश्वावसुराह—वयस्येति।** हे वयस्य कृशानो एवं 'लुण्ठित्वा नवनीतं-' इत्यादिप्रकारं दूषणं मा वादीः नोचारय। हि यस्मात् कारणात् परमपावनः अत्यन्तपवित्रः, अत एव सकलजगतः अंहसां पापानां संहरणकृते विनाशार्थं, कृतः धृतः अवतारो येन सः वन्दारून् स्तोतॄन् नमस्कर्तॄन् वा 'वदि अभिवादन-स्तुत्योः' इत्यस्मात् "शॄ-वन्द्योरारुः" इति आरुप्रत्य-

---

१ 'रितः'. २ 'कृतरुषा'. ३ 'नीलया'.

असत्क्षयार्थाभ्युदयस्य यस्य जगुश्चरित्रं जगतः पवित्रम् ॥
पुनः परस्मै पुरुषाय तस्मै समस्तनम्याय नमस्तनोमि ॥ १२७ ॥
अस्य खल्वत्यद्भुतं चारित्रमाकर्ण्यताम् ॥ ४२ ॥

चोरस्य चौर्यं जगति प्रतीतं चौर्यस्य चौर्यं न तु दृष्टपूर्वम् ॥
चौर्याद्यकार्याणि बत श्रुतानि कृष्णस्य मुष्णन्तितमां तमांसि ॥ १२८ ॥

किंच—

चित्रं चित्रं जृम्भिते कृष्णमेघे कंसं प्राप्ता प्राप लोपं समृद्धिः ॥
आसीद्युक्तं हानिदाघप्रशान्तिर्हंसो हिंसां मानसे कीर्तिरुत्था ॥ १२९ ॥

---

यः । "वन्दारुरभिवादके" इत्यमरश्च । जनानानन्दयतीति तथाभूतः सः यदुनन्दनः श्रीकृष्णः, निन्दापदव्याः निन्दारूपमार्गस्य दवीयान् दूरे वर्तमानः अस्तीति शेषः । दवीयानित्यत्र दूरशब्दादीयसुनि "स्थूल-दूर-युव ह्रस्व-" इत्यादिना रकारलोपः । 'दू' इत्यस्य गुणादेशश्च ॥ ४१ ॥

निन्दापदवीदवीयस्त्वमेवोपपादयति—**असदिति** । असतां पापानां दैत्यादीनां क्षयो नाश एवार्थो मुख्यं प्रयोजनं यस्य तादृशः अभ्युदय उत्पत्तिर्यस्य तथाभूतस्य यस्य श्रीकृष्णस्य जगतः पवित्रं पावित्र्यावहं चरित्रं कंसवधादिरूपं न तु त्वदुपपादितं चौर्यादिरूपमेव, जगुः गायन्ति स्म । ज्ञानिन इति शेषः । तस्मै परस्मै देहेन्द्रियादिसंघात् परस्मै पुरुषाय, अत एव समस्तानां सकललोकानां नम्याय नमस्कर्तुं योग्याय, पुनः नमः नमस्कारं तनोमि करोमि ॥ १२७ ॥

**अस्येति** । अस्य श्रीकृष्णस्य अत्यद्भुतमतीवाश्चर्यजनकं चारित्रमाकर्ण्यतां श्रूयतां खलु ॥ ४२ ॥

अत्यद्भुतत्वमेव विवृणोति—**चोरस्येति** । चोरस्य, कर्तरि षष्ठी । चोरकर्तृकमित्यर्थः । चौर्यं कर्म जगति प्रतीतमनुभूतं प्रसिद्धं वा । परंतु चौर्यस्य अत्रापि पूर्ववदेव षष्ठी । चौर्यं चोरकर्म तु, दृष्टपूर्वं पूर्वं दृष्टं न । इदमुपलक्षणम् । तेन श्रुतपूर्वमपि नेत्यर्थः । परं च कृष्णस्य चौर्यं नवनीतादेः आद्यं प्रधानं येषु तानि कार्याणि गोवर्द्धनोद्धरणादीनि, श्रुतानि आकर्णितानि सन्ति, तमांसि पापानि मुष्णन्तितमामतिशयेन चोरयन्ति । अत्रातिशयार्थे तमप् । ततश्च "किमेत्तिङव्यय-" इत्यादिना आमुः । बतेत्याश्चर्ये ॥ १२८ ॥

**चित्रमिति** । कृष्ण एव मेघस्तस्मिन् पक्षे कृष्णे नीलवर्णे मेघे इति च, जृम्भिते उत्पन्ने सति, हानिदस्य लोकविनाशकरस्य अघनाम्नो दैत्यस्य प्रशान्तिर्नाशः, पक्षे 'हा' इत्यानन्दे । निदाघस्य ग्रीष्मऋतोश्च शान्तिः प्रशमः "ग्रीष्म उष्मकः । निदाघ उष्णोपगमः" इत्यमरः । आसीत् । तथा हंसो बकासुरः पक्षे हंसः पक्षी च, हिंसां नाशं धा-

---

१ 'समस्तरम्याय'. २ अद्भुतं चरितम्,' 'अद्भुतं चारित्र्यम्,' अद्भुतं चरित्रम्'. ३ 'प्रसिद्धम्'. ४ 'चौर्याणि कार्याणि,' 'चौर्यादिकार्याणि.' ५ 'नृणां'.

पुनस्सभक्त्युन्मेषं भगवन्तमुद्दिश्य—

कंसं ध्वंसयते मुरं तिरयते हंसं तथा हिंसते
बाणं क्षीणयते बकं लघयते पौण्ड्रं परं लुम्पते ॥
भौमं क्षामयते बलाद्बलभिदो दर्पं पराकुर्वते
क्लिष्टं शिष्टगणं प्रणम्रमवते कृष्णाय तुभ्यं नमः ॥ १३० ॥

---

तूनामनेकार्थत्वात्, मानसे मानससरोवरे हिंसां गतिं च प्राप्तः । हंसानां वर्षाकाले मानससरोवरगमनं प्रसिद्धम् । अत्र मुद्रितपुस्तकटीकायां 'वार्षिकावसरस्य हंसहिंसाकारणत्व प्रसिद्धम्' इति सिद्धान्तितं दृश्यते, परं तत्प्रमादविलसितम् । अत एव तस्यैव पुस्तकस्य टिप्पणीकारेण 'हंसास्तावन्मानसे सरसि निवसन्ति, तत्रान्यर्तुषु हिमबाहुल्यात् हिमस्य च हंसानां रोगहेतुत्वात् अष्टौ मासानन्यत्रोषित्वा वर्षागमे हंसा मानसं गच्छन्ति, तस्माद्वर्षाकालस्य हंसहिंसाकारणत्वं न, प्रत्युत बलपुष्ट्यादिहेतुत्वमेव' इति प्राचीनसत्कविप्रसिद्धिपुरस्कारेण तत्खण्डितं तदेव युक्तमिति कोविदा अवगच्छन्तु । कीर्तिर्यशः पङ्कश्च "कीर्तिर्यशसि कर्दमे" इति विश्वः । उत्था उत्पन्ना इति यत् तत्, सर्वं युक्तं, परं च कंसं कंसनामकमसुरं, पक्षे कं उदकं प्रति "कं वारिणि च मूर्धनि" इत्यमरः । प्राप्ता उत्पन्ना पक्षे संप्राप्तेति छेदः । समृद्धिः लोपं विनाशं प्राप, यद्वा कृष्णरूपे मेघे उदिते कं पुरुषं प्राप्ता समृद्धिर्लोपं प्राप इति काकुः । अपि तु कस्यापि समृद्धिर्लोपं न प्रापेत्यर्थः । एतदेव चित्रं चित्रं परममाश्चर्यमित्यर्थः । अत्र श्लोकद्वयेऽपि विरोधालंकारः । अत्र तु श्लेषानुगत इति विशेषः ॥ १२९ ॥

**पुनरिति** । पुनः भक्त्युन्मेषेण भक्तिविकासेन सहितं यथा तथा भगवन्तं श्रीकृष्णं उद्दिश्य, आहेति शेषः ।—

**कंसमिति** । कंसमेतदाख्यदैत्यं ध्वंसयते सिंहासनादधो निपात्य मारयते, चतुर्थ्यन्तमेतत् । एवमग्रेऽप्यूह्यम् । मुरं दैत्यं च तिरयते तिरोहितमदृश्यं कुर्वते, तथा हंसमसुरं हिंसते नाशयते, बाणं बाणासुरं क्षीणयते अष्टनवत्यधिकनवशतभुजच्छेदनेन क्षीणशरीरं कुर्वते, न तु विनाशयते इत्यर्थः । तस्य प्रह्लादान्वयजत्वात् । तदन्वयस्य च भगवतोऽवध्यवरप्राप्तत्वात् । तथा बकं दैत्यं लघयते लघूकुर्वते विनाशयते इत्यर्थः । पौण्ड्रं परं शत्रुभूतं लुम्पते हन्त्रे, भूमेरपत्यं भौमस्तमसुरं क्षामयते तद्वधकर्त्रे इत्यर्थः । तथा बलभिदिन्द्रस्तस्य दर्पं गर्वं, बलात् हठात् पराकुर्वते निवारयित्रे । अपि च क्लिष्टं दैत्यत्रासात् संसारक्लेशाद्वा त्रस्तं शिष्टगणं सज्जनसमूहं, अत एव प्रकर्षेण नम्रं शरणागतं अवते रक्षते, तुभ्यं कृष्णाय नमः अस्तु ॥ १३० ॥

---

१ 'गर्वं'. २ 'निराकुर्वते'.

## अथ महाराष्ट्रवर्णनम् १२.

इति विमानं सुदूरमानयन् वन-जनपद-सरिद्गिरिप्रभृतीनवेक्ष्य सविस्मयमीश्वरमुद्दिश्य—

कत्यौषधीः कति तरून् कति वा महीध्रान्
कत्यम्बुधीन् कति नदीः कति पुंस एतान् ॥
कत्यङ्गनास्त्वमसृजः कति नाथ देशान्
मन्ये तवैष महिमा नहि माति बुद्धौ ॥ १३१ ॥

इत्यन्यतो गच्छन् पुरतोऽवलोक्य सबहुमानम्—

महाराष्ट्राभिख्यो मधुरजलसान्द्रो निरुपमः
प्रकाशो देशोऽयं सुरपुरनिकाशो विजयते ॥
गृहस्था यत्रामी गुणजलधयः केऽपि विभवैः
समृद्धाः श्रद्धातो मुहुरतिथिपूजां विदधते ॥ १३२ ॥

---

अथ महाराष्ट्रदेशवर्णनं सूचयन्नाह—**इतीति** । इत्युक्त्वा सुदूरं विमानमानयन् प्रापयन् वनानि च जनपदा देशाश्च सरितो नद्यश्च गिरयः पर्वताश्च ते प्रभृतयो मुख्या येषु तान् देशानवेक्ष्य दृष्ट्वा, सविस्मयमाश्चर्यसहितं यथा तथा ईश्वरमुद्दिश्याहेति।

**कतीति** । हे नाथ जगदुत्पादक प्रभो, त्वं कति कियत्संख्याकाः औषधीर्वल्लीसस्यमुख्या फलपाकान्ताः, तथा तरून् वृक्षांश्च कति, महीध्रान् पर्वतान्, अम्बुधीन् समुद्रान्, नदीः, एतान् दृश्यमानान् पुंसः पुरुषान्, तथा अङ्गनाः स्त्रियश्च, देशांश्च, कति असंख्यातानित्यर्थः । असृजः सृष्टवानसि ? । तस्मात् हे प्रभो, एष तव अगाधसर्गकर्तृत्वरूपो महिमा माहात्म्यं, बुद्धौ नहि माति न प्रवेष्टुं शक्नोति, इति मन्ये, इति निश्चिनोमीत्यर्थः ॥ १३१ ॥

**इतीति** । इत्यन्यतोऽन्यत्र गच्छन् पुरतोऽग्रभागेऽवलोक्य बहुमानेन सहितं यथा तथा प्राह—

**महाराष्ट्रेति** । मधुरं स्वादु च तज्जलं च तेन सान्द्रः पूर्णः अत एव निरुपमः उपमारहितः प्रकाशः प्रसिद्धः "प्रकाशोऽतिप्रसिद्धेऽपि" इत्यमरः । अत एव च सुरपुरस्य स्वर्गलोकस्य निकाशः सदृशोऽयं महाराष्ट्र इति अभिख्या नाम यस्य सः "अभिख्या नाम-शोभयोः" इत्यमरः । विजयते सर्वोत्कर्षेण वर्तते । यत्र महाराष्ट्रदेशे, अमी गुणजलधयः विद्यादिसद्गुणसमुद्राः, विभवैरैश्वर्यैश्च समृद्धाः परिपूर्णाः, केऽप्यनिर्वाच्यप्रभावाः विद्यादिगुणानामैश्वर्यस्य चैकत्र वासस्य दुर्लभत्वादित्यर्थः ।

---

१ 'सबहुमानं'. २ 'कति नो'.

**कृ०**—सखे किं प्राक्कालीनं[1]चरित्रमधुना कथय[2]सि? अधुना किल कलि-मा[3]लिन्यादीदृशी रीतिरेतद्देशवासिनामासीत् ॥ ४३ ॥

तथाहि—

अपारैर्व्यापारैरहरिह नयन्तोऽशन[4]दशा-
स्वथ स्नाताः संध्यां विदधति न जातु स्वसमये ॥
त्यजन्तः स्वां वृत्तिं द्विजकुल[5]भवा ग्रामगणकी-
भवन्तो हन्तामी कथमपि च जीवन्ति बहवः ॥ १३३ ॥

किंच—

‘उपनयन-विवाहावुत्सवैकप्रधानौ’
कलिविभवत एषां कालभेदानभि[6]ज्ञौ ॥

---

गृहस्था लोकाः, श्रद्धातः आस्तिक्यबुद्ध्या मुहुर्वारंवारं अतिथिपूजामभ्यागतसत्कारं विदधते कुर्वते। न त्वैश्वर्यस्य व्यसनादिना विषयासक्त्या वा दुरुपयोगं कुर्वन्तीत्यर्थः ॥ १३२ ॥

**सख इति**। हे सखे, प्राक्कालीनं कृतयुगादिपूर्वकालभवं चरित्रमधुना सांप्रतं किं कुतो हेतोः कथयसि? कुतो वा प्राक्कालीनं चरित्रमधुना न कथनीयमित्याशङ्क्याह—अधुना किल सांप्रतं तु, कलेः कलियुगस्य मालिन्यात् मलिनत्वात् पापप्रचुरत्वादित्यर्थः। एतद्देशवासिनां महाराष्ट्रवासिनामीदृशी वक्ष्यमाणप्रकारा रीतिराचारः आसीत् अस्तीत्यर्थः। प्रकृतवर्णनस्य वर्तमानकालीनत्वाल्लङ् प्रामादिक इति भाति ॥ ४३ ॥

**अपारैरिति**। तथाहि अपारैर्बहुभिर्व्यापारैर्ग्रामायव्ययलेखनकृषिवाणिज्यादिरूपैः कर्मभिः इह देशे, अहः दिवसं नयन्तः सन्तः, अथ अशनदशासु भोजनावसरेषु न तु संध्याकालसमये, स्नाताः कृतस्नानाः, अत एव जातु कदापि स्वसमये शास्त्रविहितकाले, संध्यां न विदधति नानुतिष्ठन्ति। किंच अमी बहवः न तु द्वित्राः द्विजकुलभवाः ब्राह्मणान्वयोत्पन्ना अपि, स्वां स्वकीयां याजनाध्यापन-प्रतिग्रहादिरूपां वृत्तिं जीविकां "वृत्तिर्वर्तनजीवने" इत्यमरः। त्यजन्तः सन्तः, ग्रामेषु गणकीभवन्तः ग्रामाय-व्ययलेखकरूपा भवन्तः सन्तश्च, कथमपि निषिद्धाचरणादिरूपया तुच्छवृत्त्या जीवन्ति। एतादृशनीचजनाधिष्ठितदेशस्य का नाम प्रतिष्ठेति भावः ॥ १३३ ॥

**उपनयनेति**। किंच उपनयनं व्रतबन्धश्च विवाहश्च तौ, एषां लोकानां कलिविभवतः कलिमाहात्म्यात्, कालस्य "गर्भाष्टमेऽब्दे कर्तव्यं ब्राह्मणस्योपनायनम्" इत्यादिशास्त्रविहितस्य, भेदः ब्राह्मण-क्षत्रियादिभेदेन विशेषः "गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः" इत्यादिरूपः, अथवा "ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे। राज्ञो

---

१ ‘प्राक्कालिकं चरित्रं’, ‘चारित्र्यं’. २ ‘कलयसि’. ३ ‘माहात्म्यात्’. ४ ‘दशदि-शास्व’. ५ ‘द्विजकुलभुवां’. ६ ‘कालभेदानभिज्ञाः’.

विजहति[1] न कदाचिद्वेदपाठैकयोग्ये
   वयसि च यवनानी[2]वाचनाभ्यासमेते ॥ १३४ ॥

अपि च—

अज्ञानामविरामलौकिकवचोभाजाममीषां पुन—
   र्मन्त्रोच्चारण एव पर्यवसितं मौनव्रतं कर्मसु ॥
ग्रामाय-व्ययलेखनेन नयतां कालानशेषानहो
   पारंपर्यत ईदृशामिह नृणां ब्राह्मण्यमन्यादृशम् ॥ १३५ ॥

अन्यच्च—

कुक्षेः पूर्त्यै यवननृपते[3]र्भृत्यकृत्यानि कर्तुम्
   विक्रीणीते वपुरपि निजं वेतनैरेतदास्ताम् ॥

---

बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे" इत्यादिकामनाभेदेन विशेषः तस्य न विद्यते अभिज्ञा ज्ञानं ययोस्तौ, अत एव उत्सवः एव एकं मुख्यं प्रधानं प्रयोजनं ययोस्तौ तथाभूतौ संवृत्ताविति । अनेन निमित्तेन सुहृत्संबन्धिजनानेकीकृत्य मिष्टान्नभोजनादिरूपसमारम्भार्थमेवोपनयन-विवाहकरणमित्यर्थः । न तु वेदोपदेशाद्यर्थमिति भावः । कुत एतज्ज्ञायते इत्यत आह—एते जनाः वेदस्य पाठः पठनं विधिवदध्ययनमिति यावत् । तदेकयोग्ये वेदाध्ययनमात्रपरतया नेतुमुचिते वयसि कदाचिदपि यवनान्याः यवनलिपेः "इन्द्र-वरुण-भव-शर्व—" इत्यादिसूत्रस्थेन "यवनाल्लिप्याम्" इति वार्तिकेन यवनशब्दाल्लिप्यर्थे आनुगागमो ङीप् च । वाचनाभ्यासं सततपरिशीलनरूपं न विजहति न त्यजन्ति ॥ १३४ ॥

**अज्ञानामिति** । अपि च अज्ञानां कर्तव्याकर्तव्यज्ञानरहितानामत एव अविरामं विश्रामरहितं यथा स्यात्तथा लौकिकवचांसि लोकवार्तालापान् भजन्ति कुर्वन्ति तथाभूतानां, न तु वेदशास्त्रभाजां, अमीषां लोकानां कर्मसु श्रौत-स्मार्तादिकर्मसु मन्त्रोच्चारणे तत्तत्कर्माङ्गभूतमन्त्रपठने एव, मौनव्रतं पर्यवसितं अवसन्नं आश्रितमिति यावत् । लौकिकवचांसि तु बहूनि भाषन्ते इत्यर्थः । किंच पुनः ग्रामस्य संबन्धिनौ यौ आय-व्ययौ तयोर्लेखनेन अशेषान् प्रातःकालमारभ्य सायंकालपर्यन्तमित्यर्थः । कालान् नयतां गमयतां, पारंपर्यतः वंशपरंपरया ईदृशां नृणां लोकानां, इह महाराष्ट्रदेशे ब्राह्मण्यं ब्राह्मणकर्म, अन्यादृशं अन्यब्राह्मणविलक्षणं शूद्रप्रायमिति यावत् ॥ १३५ ॥

अन्यच्चापि निन्द्यतमं कृत्यमाह—**कुक्षेरिति** । अयमेतद्देशनिवासी जनः, विप्रो ब्राह्मणो भूत्वापि, यवननृपतेर्म्लेंच्छजातीयराज्ञः भृत्यकृत्यानि सेवककृत्यानि कर्तुं, तच्च केवलं कुक्षेः पूर्त्यै स्वोदरभरणायैव न तु स्वामिभक्त्यर्थं, वेतनैः मासिकद्रव्यस्वी-

---

१ 'विदधति च कदाचित्'. २ 'यवनानां'. ३ 'यवनवितते:'.

विप्रो भूत्वाप्यहह गणनानैपुणैर्वञ्चयित्वा
स्वर्णस्तेयं रचयति जनः स्वामिनां पोषकाणाम्! ॥ १३६ ॥

अहो बत कलिमहिम्ना सदसद्विवेकवैधुर्यमखिलजनानाम्! ॥ ४४ ॥

ये मुष्णन्ति निशि प्रविश्य भवनं ये वा बलात्काननं
नैते स्वामिधनं हरन्ति ननु तान्निन्दन्ति चोरा इति ॥
सद्यो हन्त हरन्ति पोषकधनं संख्यां विपर्यस्य ये
कष्टं तानपि वञ्चकानिह पुरस्कुर्वन्ति सर्वे जनाः ॥ १३७ ॥

'अयं खल्वनुपमो देशः' इति त्वदुक्तं युक्तमेव । यदत्र स्वल्पेनापि यत्नेन महती प्रतिष्ठा सिध्यति ॥ ४५ ॥

वेदव्यासः स इह दश यो वेद वेदाक्षराणि
श्लोकं त्वेकं परिपठति यः स स्वयं जीव एव ॥

---

कारैः, निजं स्वीयं वपुः शरीरमपि विक्रीणीते । एतत्तु आस्तां तावत् । परंतु अहह इति खेदे । गणनानैपुणैः आय-व्ययद्रव्यसंख्याकौशल्यैः वञ्चयित्वा, अयं जनः पोषकाणां मासिकभृतिदानेन पोषणं कुर्वतां स्वामिनामपि किमुतान्येषां, स्वर्णस्तेयं द्रव्यचौर्यं रचयति करोति । स्वामिवञ्चनस्य नरकपातहेतुत्वादेतदतीव निन्द्यमित्यर्थः ॥ १३६ ॥

**अहो इति ।** अहो इत्याश्चर्ये । बतेति खेदे । कलिमहिम्ना कलिमाहात्म्येन अखिलानां सर्वेषामपि जनानां सदसतोः उत्तमाधमयोः विवेकस्य विचारस्य वैधुर्यं राहित्यम् ॥ ४४ ॥

कथं तावद्विवेकवैधुर्यमिति चेत्तदेव विवृणोति—**य इति ।** ये निशि रात्रौ परस्य भवनं गृहं प्रविश्य, ये वा काननमरण्यं प्रवश्य, दिवापि बलात् मुष्णन्ति द्रव्यादिकं चोरयन्ति, एते तु स्वामिधनं निजपोषकद्रव्यं नैव हरन्ति, परंतु तान् गृहं प्रविश्य चौर्यकर्मकर्तॄन् प्रति 'चोराः' इति उक्त्वा निन्दन्ति । ये च संख्यां विपर्यस्य आयव्ययगणनावैपरीत्यं कृत्वा, पोषकधनं सद्यः तत्कालं हरन्ति, हन्तेति खेदे । तानपि वञ्चकान् स्वामिप्रतारकान्, इह देशे सर्वेऽपि जनाः पुरस्कुर्वन्ति मानयन्ति । कष्टमेतदतीवान्याय्यमित्यर्थः ॥ १३७ ॥

**अयमिति ।** किंच 'अयं महाराष्ट्राभिख्यो देशः अनुपमः खलु' इति, पूर्वमिति शेषः । त्वया उक्तं प्रतिपादितं, युक्तमेव योग्यमेव । कुतः । यद्यस्मात् अत्र देशे स्वल्पेनापि स्तोकेनापि यत्नेन महती प्रतिष्ठा सिध्यति ॥ ४५ ॥

कथमित्युपपादयति—**वेदव्यास इति ।** इह महाराष्ट्रे देशे, यः विप्रः दश वेदस्य अक्षराण्येव केवलं, न तु संपूर्णमन्त्रमपि । वेद जानाति "विदो लटो वा" इति लटो

---

१ 'पुनः', 'निजस्वामिनाम्'. २ 'कानने'. ३ 'इव'. ४ 'यत्नेन'. ५ 'नव दश'.

आपस्तम्बः स किल कलयेत्सम्यगौपासनं यः
कष्टं शिष्टक्षतिकृति कलौ कार्श्यमृच्छन्ति विद्याः ॥ १३८ ॥

वि०—किमरे भूसुरेष्वेवं दोषमुद्घोषयसि? ॥ ४५ ॥

अत्रापि सन्ति बहवः कलिताग्निहोत्राः
शास्त्रार्थबोधकुशलाः किल शान्तिमन्तः ॥
अन्तर्मुखाः सततमात्मविदो महान्तो
निर्धूतबाह्यविषया निगमाध्वनिष्ठाः ॥ १३९ ॥

अन्यच्च—

शुचीभूताः स्नानैः श्रुतहितपुराणाश्च नियमा-
दपूतानां स्पर्शानवहितहृदोऽमी विजहतः ॥

णलादेशः । सः वेदव्यासः भवति । एतदग्रेऽपि योज्यम् । यश्च एकमेव न तु अनेकान्, श्लोकं परिपठति, सः स्वयं जीवो बृहस्पतिरेव । "बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः । जीव आङ्गिरसः" इत्यमरः । यस्तु सम्यक् औपासनं सायंप्रातर्होमरूपं कर्म कलयेत् कुर्यात्, सः किलेति गर्हायाम् । आपस्तम्बः ऋषिर्भवति । एवं शिष्टानां सभ्यानां क्षतिं नाशं करोतीति तत्कृत् तस्मिन् कलौ युगे, विद्याः वेद-शास्त्रादि-ज्ञानानि, कार्श्यं कृशत्वं ऋच्छन्ति प्राप्नुवन्ति । कष्टमिति खेदे ॥ १३८ ॥

**किमिति** । अरे **कृशानो**! भूसुरेषु ब्राह्मणेष्वपि एवं दोषमुद्घोषयसि आरोपयसि? ॥ ४६ ॥

वस्तुतस्तु नैवायं देशो दूषणार्ह इत्याह— **अत्रेति** । अत्र महाराष्ट्रदेशेऽपि, बहवो बुधाः जनाः न तु द्वित्राः । शास्त्रस्य अर्थबोधे अर्थज्ञाने कुशलाः निपुणाः मार्मिका इति यावत् । अत एव निगमाध्वनि वेदविहितकर्मानुष्ठानरूपमार्गे निष्ठा आसक्तिर्येषां तथाभूताः, अत एव च कलितं स्वीकृतं अग्निहोत्रं त्रेताग्निसाध्यः कर्मविशेषः यैस्ते तादृशाः । केचित्तु निर्धूताः निरस्ताः बाह्यविषयाः शब्दादिविषया यैस्ते तथाभूताश्च, अतो हेतोरेव अन्तः हृदयपुण्डरीके आत्मोपलब्धिस्थले एव मुखं सांमुख्यं येषां ते, सततमात्मानुध्यानासक्ता इति यावत् । सततं निरन्तरं आत्मानं विदन्ति स्वानुभूत्या साक्षात् कुर्वन्तीति तथाभूताः । किलेत्यवधारणे, हेतौ वा । अव्ययानामनेकार्थत्वात् । शान्तिमन्तो बाह्येन्द्रियनिग्रहतत्परा इत्यर्थः । अत एव महान्तः महत्त्वलक्षणसंपन्नाः । महत्त्वलक्षणमुक्तं श्रीमद्भागवते— "महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये" इति।एवं च कर्म-ज्ञाननिष्ठा उभयविधा अपि जनाः अत्र देशे सन्ति॥३९॥

**शुचीभूता इति** । किंच स्नानैः शुचीभूताः पवित्रीकृताः। नैतावदेव, किंतु नियमात् श्रुतानि आकर्णितानि हितानि हितकराणि पुराणानि श्रीमद्भागवतादीनि भक्ति-

१ 'भासुरेषु' इत्यधिकं क्वचिद्दृश्यते. २ 'शुचीभूत्वा'. ३ 'श्रुतिहितपुराणोक्त'.

सुराभ्यर्चां कृत्वा शुचिकृतमदन्त्यन्नमनघं
महाराष्ट्रे देशे विलसति महानेष हि गुणः ॥ १४० ॥

किंच—

चमूनियमनेन वा जनपदाधिकारेण वा
द्विजव्रज उपव्रजन्प्रभुपदं महाराष्ट्रजः ॥
न वृत्तिमिह पालयेद्यदि धरासुराणां ततो
भवेद्यवनवेष्टितं[1] भुवनमेतदब्राह्मणम् ॥ १४१ ॥

यच्च दोषान्तरं भवता परिभाषितं तदशेषमपि साधुजनोपकारेण परिहीयते[2] ॥ ४९ ॥

---

ज्ञानादिविषयप्रतिपादकानि यैस्तथाभूताः । अत्र श्रुतपुराणग्रहणमुपलक्षणम् । तेन न केवलं श्रुतानि, किंतु सम्यगधीतानि मीमांसितानि च । वेद-शास्त्र-पुराणानीत्यपि ज्ञेयम् । अत एव अवहितं श्रुतिस्मृत्यादिविहितप्रतिषिद्धविषये प्रमादरहितं हृत् चित्तं येषां ते तथाभूताःसावधानचित्ता इत्यर्थः । एतादृशा अमी जनाः अपूतानां अपवित्राणां चाण्डालादीनां स्पर्शान् शरीरसंपर्कान्, विजहतः त्यजन्तः सन्तः, सुराणां विष्णु-शिवादिदेवानामभ्यर्चां पूजां कृत्वा शुचिभिः पवित्रजनैः कृतं पक्कं अत एव अनघं निर्मलमन्नं अदन्ति भुञ्जन्ति । न तु येन केनापि कृतमित्यर्थः । तस्मादेष पूर्वोक्तः महान् गुणः महाराष्ट्रे देशे हि एव विलसति प्रकाशते दृश्यते । नान्यत्रेत्यर्थः ॥ १४० ॥

'कुक्षेः पूर्त्यै यवननृपतेः' इत्यादिनोक्तं दूषणं परिहरति—**चम्विति** । किंच महाराष्ट्रजः तद्देशोत्पन्नः द्विजानां ब्राह्मणानां व्रजः समूहः, चम्वाः सेनायाः नियमनेन सेनाधिपत्वं स्वीकृत्येत्यर्थः । जनपदस्य देशस्य अधिकारेण आय-व्ययलेखनादिरूपेण वा, प्रभुपदं तत्तदधिकारस्थानमुपव्रजन् प्राप्नुवन्, यदि धरासुराणां ब्राह्मणानां वृत्तिं जीविकां न पालयेत् न रक्षेच्चेत्, ततस्तर्हि एतद्भुवनं सर्वोऽप्ययं भूलोक इत्यर्थः । यवनैः म्लेच्छैः वेष्टितं सर्वत्र व्याप्तं, ततश्च अब्राह्मणं ब्राह्मणरहितमपि भवेत् संपद्येत । यवनानामेव सर्वत्र प्राबल्यात् ते वर्णाश्रमधर्मं विनाश्य ब्राह्मणादीनपि भ्रंशयिष्यन्तीति भावः ॥ १४१ ॥

अथ 'उपनयन-विवाहौ-' इत्यादिनोक्तं दूषणं परिहरति—**यच्चेति** । भवता यच्च दोषान्तरं 'विजहति न कदाचिद्वेदपाठैकयोग्ये वयसि च यवनानीवाचनाभ्यासं' इत्यादिरूपं परिभाषितं, तत् अशेषं सकलमपि साधुजनानां उपकारेण परिहीयते निवार्यते ॥ ४७ ॥

---

१ 'चेष्टितं'. २ 'परिहार्यते'.

अलं मङ्क्षु संहर्तुमंहस्सहस्रं स एकोऽपि विप्रप्रवेकोपकारः ॥
कठोरः कुठारः किलैकोऽपि तिग्मो विनिर्भेत्तुमीष्टे विषद्रूननेकान् ॥१४२॥

कृ०—अस्त्वेवमथाप्यत्रत्यानामाद्येतरवर्णप्रभवानां पुनरतिदुस्सहं चेष्टितम् ॥ ४८ ॥

पश्य—

देशे देशे लम्पटाः पर्यटन्तो भञ्जं भञ्जं ब्राह्मणादीनशेषान् ॥
हारं हारं हन्त सर्वस्वमेषां पापा एते स्वोदरं पूरयन्ति ॥ १४३ ॥

वि०—सत्यमेवमथापि महनीयमेव तेषामेवं चेष्टितम् ॥ ४९ ॥

---

कथमिति चेत्तदाह-**अलमिति**। सः प्रसिद्धः एकोऽपि किमुतानेके ? विप्राणां ब्राह्मणानां मध्ये ये प्रवेकाः संध्यादिकर्मानुष्ठानेनोत्तमाः तेषां, "प्रवेकानुत्तमोत्तमाः" इत्यमरः। उपकारः अंहसां पापानां सहस्रं, मङ्क्षु शीघ्रमेव "द्राक् मङ्क्षु सपदि द्रुते" इत्यमरः। संहर्तुं विनाशयितुं अलं समर्थः। दृष्टान्तमाह-कठोरः दण्डादिना दृढः तिग्मः धारया च तीक्ष्णः "तिग्मं तीक्ष्णं खरं तद्वत्-" इत्यमरः। एकोऽप्येक एव किल कुठारः, अनेकान् बहून् विषद्रून् विषवृक्षान् विनिर्भेत्तुं विशेषेण आमूलादित्यर्थः। भेत्तुं छेत्तुं ईष्टे समर्थो भवति। दृष्टान्तालंकारः। भुजंगप्रयातं वृत्तम्। "भुजंगप्रयात भवेद्यैश्चतुर्भिः" इति तल्लक्षणात् ॥ १४२ ॥

इदानीं क्षत्रियादीनां दोषानाह **कृशानुः—अस्त्विति**। एवं भवदुक्तं अस्तु नाम, अथापि भवदुक्तरीत्या ब्राह्मणानामुपकारकर्तृत्वे सत्यपि, अत्रत्यानामेतद्देशीयानां आद्यात् इतरे क्षत्रियादयस्तेषु वर्णेषु प्रभव उत्पत्तिर्येषां तेषां पुनरतिदुःसहं अत्यन्तं सोढुमशक्यं चेष्टितं आचरणम्। अस्तीति शेषः ॥ ४८ ॥

दुःसहचेष्टितत्वमेव प्रतिपादयति-**देशे देश इति**। लम्पटाः परद्रव्यापहारतत्पराः अत एव पापाः पापकारिणः, एते एतद्देशीयाः क्षत्रियादयः, देशेदेशे प्रतिदेशं पर्यटन्तः परिभ्रमन्तः सन्तः, ब्राह्मणादीन् अशेषान् सर्वान् भञ्जं भञ्जं द्रव्यवाञ्छया भङ्क्त्वा भङ्क्त्वा एषां ब्राह्मणादीनां सर्वस्वं, हारं हारं हृत्वा हृत्वा। पूर्वत्रात्र च 'भञ्जो आमर्दने' 'हृञ् हरणे' इति धातुभ्यां "आभीक्ष्ण्ये णमुल् च" इति णमुल्। स्वोदरं पूरयन्ति। हन्तेति खेदे ॥ १४३ ॥

**सत्यमिति**। एवं 'देशे देशे-' इत्यादिप्रकारेणोक्तं दूषणं सत्यं, अथापि तेषां क्षत्रियादीनां एवमग्रे वक्ष्यमाणरीत्या चेष्टितमाचरणं महनीयमेव पूज्यमेव ॥ ४९ ॥

---

१ 'अस्त्वेवमप्यत्र'. २ 'वर्णानां'. ३ 'पुनरपि'. ४ 'सत्यमेव तथापि एतेषां चेष्टितं सहनीयम्'.

तथाहि—

मायाचुञ्चुतया[1] भयावहगतिः प्रत्यर्थिपृथ्वीभुजाम्
माहाराष्ट्रभटच्छटा रणपटुर्नोपर्यटाट्येत[2] चेत् ॥
देव-ब्राह्मणवर्गनिग्रहकृतो देशांस्तुरुष्का इमे
निष्प्रत्यूहमनोरथा वितनुयुर्निर्देव[3]-भूमीसुरान् ॥ १४४ ॥

ततश्च—

देवक्षोणीसुरहितकृते दारितम्लेच्छपङ्क्तेः—
र्मह्यां सह्या कथमपि महाराष्ट्रयूथस्य चेष्टा ॥
व्याधिव्यूहप्रतिहतिकृतां[4] व्यक्तमुग्रौषधानां
कायारोग्यप्रणयिहृदयैः काटवं मर्षणीयम् ॥ १४५ ॥

---

कथं महनीयमित्येतदेवोपपादयति—**मायाचुञ्चुतयेति** । रणे पटुः कुशला महाराष्ट्रे भवा माहाराष्ट्रास्तेषां भटानां योधानां "भटा योधाश्च योद्धारः" इत्यमरः । छटा समूहः, मायया वित्ता प्रसिद्धा मायाचुञ्चुः तस्याः भावः मायाचुञ्चुता तया "तेन वित्तश्चुञ्चुप्-चणपौ" इति चुञ्चुप्प्रत्ययः । युद्धकापट्यज्ञानप्रसिद्धत्वेनेत्यर्थः । प्रत्यर्थिनां शत्रुभूतानां क्षितिभुजां राज्ञां, "दस्यु-शात्रव-शत्रवः । अभिघाति-परा-राति-प्रत्यर्थि-परिपन्थिनः" इत्यमरः । भयावहा भयोत्पादका गतिः संचारो यस्या-स्तथाभूता सती, नो पर्यटाट्येत भृशं पुनः पुनर्वा परिभ्रमणं न कुर्यात् चेत्, परिपू-र्वकस्य 'अट गतौ' इत्यस्य यङन्तस्य विधिलिङि रूपम् । तदा देवाश्च ब्राह्मणाश्च तेषां वर्गः समुदायः तस्य निग्रहं भ्रष्टकरण-धनग्रहणादिच्छलरूपं कुर्वन्तीति तथाभूताः इमे तुरुष्काः तुरुष्कदेशीया नृपाः, निष्प्रत्यूहः निर्विघ्नः "विघ्नोऽन्तरायः प्रत्यूहः" इत्यमरः । मनोरथः परधनग्रहणादिरूपो येषां तथाभूताः सन्तः, सर्वान् देशान् निर्देव-भूमीसुरान् देव-ब्राह्मणरहितान् वितनुयुः कुर्युरेव ॥ १४४ ॥

**तत इति** । ततश्च पूर्वोक्तत्रासनिवारणहेतोरेव—

**देवेति** । देव-क्षोणीसुरहितकृते देव-ब्राह्मणहितार्थं दारिता विनाशिता म्लेच्छानां पङ्क्तिः समुदायो येन तथोक्तस्य महाराष्ट्रयूथस्य महाराष्ट्रनृपसैन्यस्य, मह्यां पृथिव्यां कथमपि सोढुमशक्यत्वे सत्यपि संकटेनैव, चेष्टा कृतिः सह्या सहनीया । लोकैरिति परिशेषात् । यथा व्याधिव्यूहस्य रोगसमूहस्य प्रतिहतिं नाशं कुर्वन्तीति तथाभूतानां उग्राणि खराणि च तानि औषधानि च तेषां, व्यक्तं प्रसिद्धं काटवं कटुत्वं कायस्य देहस्य आरोग्ये प्रणयि अनुरागयुक्तं हृदयमन्तःकरणं येषां तैर्जनैः कथमपि मर्षणी-यम् सहनीयम् । दृष्टान्तालंकारः ॥ १४५ ॥

---

१ 'मायाचञ्चुतया' 'चञ्चुत्वं मोहजनकत्वनैपुण्यम्' इति तट्टिप्पणी. २ 'पर्यटत्येव चेत्'. ३ 'निर्वेद'. ४ 'प्रतिकृति'.

इत्यन्यतो विमानं गमयन्नग्रतो दृष्ट्वा

क इमे बहवः समवेता मानुषा मार्गान[1]शेषानप्यशून्ययन्ति ॥ ५० ॥

निपुणं निरूप्य सश्लाघम्—

अङ्गान् वङ्गान् कलिङ्गानथ मगध-कुरून् कोसलान् केकयान् वा
काश्मीरान् कुन्तलान्वा यवनजनपदान् किंच पाञ्चालदेशान् ॥
नेपालान् केरलान्वा कतिचन कृतिनः पाण्ड्य-तुण्डीरचोलान्[2]
कर्नाटान् गौड-लाटान् परगतिघटनालम्पटाः पर्यटन्ति[3] ॥१४६॥

कृ०—अरे किमेतान्निन्दनीयानभिनन्दसि[4] ! ॥ ५१ ॥

नानाजातिभवा इमे कलिबलादेकीभवन्तो नरा
वैराग्याभिनयं चिराद्विदधतो वर्णाश्रमत्यागिनः ॥
निर्धूता[5]नघवैदिकप्रणमना निष्किंचना वञ्चना-
दक्षा दिक्षु विदिक्षु कुक्षिभृतये भिक्षाटनं कुर्वते ॥ १४७ ॥

---

**इतीति** । अन्यतोऽन्यत्र स्थले विमानं गमयन्नग्रतः पुरोभागे दृष्ट्वा आह—

**क इति** । इमे बहवः समवेता एकत्र मिलिताः मानुषाः अशेषान् सर्वानपि मार्गान् अशून्ययन्ति इतस्ततः परिभ्रमणेन सर्वदा परिपूरयन्ति, ते के ? ॥ ५० ॥

निपुणमवलोक्य निश्चित्याह—**अङ्गानिति** । एते कतिचन कतिपयाः कृतिनः पुण्यवन्तो (जनाः) परस्य स्वर्गादिलोकस्य गतेः प्राप्तेः घटनायां संपादने लम्पटाः आसक्ताः अङ्गादीन् देशान् पर्यटन्ति परिभ्रमन्ति । तत्र तत्र देशे यानि तीर्थानि याश्च देवताः सन्ति तेषां स्नानदर्शनादिकर्मभिरात्मानं पवित्रीकर्तुमिति भावः ॥१४६॥

**अरे इति** । अरे **विश्वावसो,** एतान् वस्तुतो निन्दनीयान्निन्दायोग्यान् किं कुतो हेतोः अभिनन्दसि ? ॥ ५१ ॥

कुतो वा नाभिनन्दनीया इत्याह—**नानेति** । इमे नानाजातिभवाः अनेकवर्णसंभवा अपि कलेर्बलात् माहात्म्यात् एकीभवन्तः एकत्र संमिलन्तः, तर्हि युक्तमेवैतत्, एकीभूय किमपि महत्कार्यं कुर्वन्तीति चेत्तत्राह—वर्णाश्रमत्यागिनः वर्णाश्रमधर्मत्यागशीलाः, एतेन स्वस्वधर्मं त्यक्त्वैवैकीभूतास्ते धर्महानिं विना नान्यत्किमपि कर्तुं शक्ताः इति सूचितम् । एतादृशा नराः चिरात् बहुकालपर्यन्तं वैराग्यस्य इन्द्रियदमनादिरूपस्य अभिनयं प्रकटीकरणं विदधतः, अभ्यस्तत्वानुमभावः । कुर्वन्तः, किंच निर्धूतं सर्वथा त्यक्तं अनघानां निष्पापानां वैदिकानां वेदज्ञानां प्रणमनं अभिवादनं यैस्तथाभूताः वेदज्ञान् जनान् तिरस्कुर्वन्त इति यावत् । निष्किंचना नास्ति किंचन धनादिकं येषां ते, दरिद्रा इत्यर्थः । अत एव वञ्चनायां, परप्रतारणायां दक्षा निपुणाः

---

१ 'अशेषान्' इत्येतत् क्वचित्पुस्तके न दृश्यते. २ 'देशान्'. ३ 'पर्यटन्ते'. ४ 'अभिनन्दयसि'. ५ 'निर्धूताखिल'.

किंच—

विमलचरिता विश्वामित्रादयः परमर्षयो
वहुभिरतुलैर्ब्राह्मण्यं यत्तपोभिरुपार्जयन् ॥
तदिह जहतो जन्मप्राप्तं त्रयीविमुखेष्वमी—
प्वहह कतिचित्पाखण्डेषु प्रविश्य हता जनाः ॥ १४८ ॥

वि०—कथमरे[1] हरेर्भक्तेषु विरक्तेष्वप्यमीषु[2] संनह्यसि[3] ॥ ५२ ॥

दोषेभ्यो नैव भेतव्यं दृढा चेद्भक्तिरच्युते ॥
तिमिरेभ्यो नहि भयं दीपश्चेल्लभ्यते महान् ॥ १४९ ॥

किंच—

दुःखं च जन्मदुरितं च दृढामविद्याम्
हा हन्त हन्ति परमा हरिभक्तिरेका ॥

सन्तः, दिक्षु पूर्वादिषु, विदिक्षु आग्नेय्यादिषूपदिशासु, कुक्षिभृतये उदरभरणार्थं भिक्षाटनं कुर्वते ॥ १४७ ॥

किंच—**विमलेति** । विमलं निर्मलं चरितं आचरणं येषां ते, विश्वामित्रः "मित्रे चर्षौ" इति विश्वशब्दस्य दीर्घः । आदिः प्रमुखो येषां ते परमर्षयः श्रेष्ठा ऋषयः अतुलैः इतरैः कर्तुमशक्यैः वहुभिः षष्टिवर्षसहस्रसदृशबहुकालसाध्यैः तपोभिस्तपश्चर्याभिः, यत् ब्राह्मण्यं ब्राह्मणत्वं उपार्जयन् संपादितवन्तः, तत् ब्राह्मण्यं इह लोके जन्मतः प्राप्तं, न तु तपआदिप्रयत्नैः, जहतः त्यजन्तः सन्तः त्रयीविमुखेषु ऋगादिवेदत्रयपराङ्मुखेषु पाषण्डेषु वेद-शास्त्रविहितकर्मभ्रष्टेषु अमीषु वैरागिषु प्रविश्य, तैः सहैकीभूयेत्यर्थः । एते जनाः हताः भ्रष्टाः । अहहेति खेदे ॥ १४८ ॥

**कथमिति** । अरे **कृशानो!** हरेर्विष्णोर्भक्तेषु विरक्तेषु शब्दादिविषयपराङ्मुखेष्वपि, अमीषु दूषयितुमिति शेषः । संनह्यसि उद्युक्तो भवसि ॥ ५२ ॥

भक्तिसंपन्नेषु विरागयुक्तेषु च धर्मत्यागादिरूपं दूषणमकिंचित्करमित्याह—**दोषेभ्य इति** । अच्युते श्रीभगवति विष्णौ दृढा भक्तिश्चेत्, दोषेभ्यः पूर्वोक्तेभ्यो नैव भेतव्यं, दृढभक्तेः पुरतः इतरे सर्वेऽपि दोषास्तुच्छा इत्यर्थः । एतद्भगवता श्रीकृष्णेनैव भगवद्गीतायां स्वमुखेन प्रतिपादितम्—"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" इति । एतदेव प्रतिवस्तूपमयाह—**तिमिरेभ्य इति** । महान् प्रज्वलितः दीपः लभ्यते चेत्, तिमिरेभ्यः अन्धकारेभ्यः भयं नहि नास्त्येव । प्रतिवस्तूपमालंकारः । लक्षणमुक्तं प्राक् ॥ १४९ ॥

किंच—**दुःखमिति** । परमोत्तमा हरिभक्तिः श्रीकृष्णभक्तिः एकैव, दुःखं आधि-

१ 'किमरे हरिभक्तेषु'. २ 'विरक्तेषु' क्वचिच्चैतन्न दृश्यते. ३ क्वचिदपि 'विदूषयितुं' इत्यधिकं दृश्यते.

एकोऽपि राघवशरः किल सप्ततालान्[1]
शैलं रसातलमपि त्वरया बिभेद ॥ १५० ॥

अपि च—

धुनोति निबिडं तमः परिलुनाति पापाटवीं
तनोति च मनोरथानुपचिनोति नानोत्सवान् ॥
अनक्ति च पुनःपुनर्ननु मनः सुधानिर्झरै–
र्व्यनक्ति परिपक्त्रिमं वृषगिरीशभक्तिः शुभम् ॥ १५१ ॥

किं बहुना—

पूताङ्गानां पुण्यगङ्गादिसिन्धुस्नानान्नानाक्षेत्रयात्रापराणाम् ॥
दारागारापत्यवैराग्यभाजां साराभिज्ञैरादरः कार्य एषाम् ॥ १५२ ॥

---

भौतिकादिकं, जन्मदुरितं जन्मनः आरभ्य संपादितं पापमित्यर्थः। दृढां त्यक्तुमशक्यां अविद्यां अज्ञानं च हन्ति विनाशयति । हा हन्तेत्याश्चर्ये । अत्र दृष्टान्तमाह–राघवस्य श्रीरामचन्द्रस्य शरो बाणः एकोऽपि एक एव, सप्ततालान् सप्तसंख्याकांस्तालवृक्षान्, शैलं पर्वतं च रसातलं पातालमपि, त्वरया शीघ्रमेव बिभेद। किलेत्यैतिह्ये। वालिवधात् पूर्वं सुग्रीवप्रार्थितेन श्रीरामचन्द्रेणैतत् स्वसामर्थ्यप्रकटनार्थं कृतमिति श्रीरामायणकथात्रानुसंधेया । दृष्टान्तालंकारः ॥ १५० ॥

किंच–**धुनोतीति** । वृषगिरीशः श्रीवेङ्कटाचलनिवासी श्रीनिवासः, अथवा वृषस्य गिरिः पर्वतः श्रीशैलः तस्येशो मल्लिकार्जुनः, वृष इव गिरिः शुभ्रः कैलासः तस्य ईशः श्रीशंकर इति वा। तस्मिन् कस्मिन्नपि भक्तिः कर्त्री। निबिडं सान्द्रं तमः अज्ञानं धुनोति विनाशयति । पापानां अटवी अरण्यं तत्सदृशं समूहमित्यर्थः परिलुनाति सर्वतश्छिनत्ति । मनोरथान् तनोति विस्तारयति । नानोत्सवान् अनेकविधानानन्दान्, उपचिनोति वर्धयति । पुनः पुनः मनः सुधानिर्झरैः अमृतप्रवाहैः सह अनक्ति संयोजयति । ननु निश्चयेन । ईशभक्त्या स्वर्गप्राप्तिर्भवतीति भावः । परिपक्त्रिमं फलाभिमुखं सत्, पचेः "ड्वितः क्त्रिः" इति क्त्रिप्रत्ययः। तदन्ताच्च "क्त्रेर्मप्-" इति मप्। शुभं शुभफलावहं व्यनक्ति संपादयति । समुच्चयनामालंकारः । "तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करं भवेत्। समुच्चयोऽसौ स त्वन्यो युगपद्या गुणक्रिया" इति तल्लक्षणात् ॥ १५१ ॥

**किमिति** । बहुनाधिकेन उक्तेनेति शेषः । किं किं फलं, सारमेव संक्षेपेण कथयामीति भावः ।—

**पूतेति** । नानाक्षेत्रेषु काशी-प्रयागादिबहुषु पुण्यक्षेत्रेषु यात्रायां गमनरूपायां पराणामासक्तानां अत एव पुण्यासु पवित्ररूपासु गङ्गा आदिर्मुख्या यासु तासु

---

१ 'सप्तसालान्'.

# अथ आन्ध्रदेशवर्णनम् १३.



इति विमानमन्यतः समानयन् निपुणं विभाव्य—

सुशोभनक्रमकरैः सेवितो जीवनार्थिभिः ॥
मध्यस्थवाडवो राजत्यान्ध्रदेशो [1]नदीशवत् ॥ १५३ ॥

कृ०—अये किं प्रशंसस्यपयातमर्यादममुं देशम्? ॥ ५३ ॥

पश्य—

ग्रामे ग्रामे निवसति चिरात्स्वामिभावेन शूद्रो
भृत्यो भूत्वा पठति गणनां ब्राह्मणस्तस्य पार्श्वे ॥

---

सिन्धुषु नदीषु स्नानात् पूतं शुद्धियुक्तं 'पूञ् पवने' इत्यस्मात् भावे क्तप्रत्यये अर्श आदित्वान्मत्वर्थीयोऽच्प्रत्ययः। अङ्गं शरीरं येषां तेषाम्। तत एव च दाराः स्त्रियश्च अगारं गृहं च, एतद्धनादेरप्युपलक्षणम्। अपत्यानि पुत्राश्च तेषु वैराग्यं अनासक्तिं भजन्ति कुर्वन्तीति तथाभूतानां, एषां जनानां साराभिज्ञैः सदसद्विवेकयुक्तैर्जनैः आदरः कार्यः कर्तव्यः ॥ १५२ ॥

**सुशोभनेति**। अयं आन्ध्रदेशः जीवनं उपजीविकां जलं च अर्थयन्ति इच्छन्तीति जीवनार्थिनः तैः सु उत्तमानि शोभनानि कल्याणानि येभ्यस्तान् क्रमान् आचारान् कुर्वन्तीति तत्करास्तैर्जनैः, पक्षे सुष्ठु शोभा येषां ते सुशोभाः ते च ते नक्रा मत्स्यविशेषाश्च मकराश्च तैर्जलजन्तुभिश्च सेवितः अधिष्ठितः, मध्यस्था मध्ये वर्तमानाः वाडवाः ब्राह्मणा यस्य पक्षे मध्ये स्थितो वाडवो वाडवाग्निश्च यस्येत्यर्थः। नदीशवत् समुद्रवत् राजति शोभते। अत्र 'न देशवत्' इति पाठान्तरं प्रकल्प्य नदेशवत् समुद्रवत्' इति, 'आन्ध्रदेशः देशवत् अन्यदेशवत् न राजति, अपि तु सर्वोत्तमतया राजति' इत्यप्यर्थान्तरं कुर्वन्ति केचित्। अत्र श्लिष्टोपमालंकारः ॥ १५३ ॥

**अये इति**। अये भो, अपयातमर्यादं त्यक्तवर्णाश्रमरीतिममुं देशं आन्ध्रदेशं, किं कुतो हेतोः प्रशंससि? ॥ ५३ ॥

**ग्राम इति**। शूद्रः स्वामिभावेन प्रभुत्वेन उपलक्षितः, ग्रामे ग्रामे, वीप्सायां द्विर्भावः। चिरात् निवसति। तस्य शूद्रस्य पार्श्वे भृत्यः गणकसंज्ञया उपलक्षितः, सेवको भूत्वा ब्राह्मणः, गणनां ग्रामाय-व्ययसंख्यां पठति। मरौ देशे सर इव क्वापि कुत्रापि वेदाध्यायी कश्चिदेकः स्यात् यदि वर्तते चेत्, असौ वेदपाठकः अत्र

---

१ 'न-देशवत्'.

वेदाध्यायी सर इव मरौ क्वापि कश्चिद्यदि स्या—
दत्रामत्रप्रकरकरणे वर्तते॒ऽसौ नियुक्तः ॥ १५४ ॥

किंच महाराष्ट्रे दृष्टा दोषा अत्राप्यतिदेष्टव्याः ॥ ५४ ॥

**विश्वावसुः**—वयस्य, मैवं वादीः ॥ ५५ ॥

मा नाम यक्षत मखैरनघैरिहामी
मा चाधिगीषत वचांसि चिरंतनानि ॥
देवेषु भक्तिरवनित्रिदशेषु चैषां
विश्राणनं च विविधान् विधुनोति दोषान् ॥ १५५ ॥

पश्य तावदेतेषां भाग्यवत्ताम् ॥ ५६ ॥—

रोमावल्या तपनसुतया रम्यहारद्युनद्या
हृद्यास्तुङ्गस्तनगिरिजुषो नाभिवापीमनोज्ञाः ॥

---

आन्ध्रदेशे अमत्राणां मलिनपात्राणां प्रकरे संक्षालने करणे कर्मणि नियुक्तः सन्, वर्तते। अतिनीचवृत्त्या जीवतीत्यर्थः ॥ १५४ ॥

**वयस्येति**। वयस्य भो मित्र, एवमुक्तप्रकारं दूषणं मा वादीः मा वद 'वद व्यक्तायां वाचि' इत्यस्मात् माङ्योगे "माङि लुङ्" इति लुङि "न माङ्योगे" इत्यडागमाभावः ॥ ५५ ॥

**मेति**। इह आन्ध्रदेशे अमी ब्राह्मणादयः त्रयो वर्णाः, अनघैः मखैर्यज्ञैः मा यक्षत न यजन्तु। नामेत्यनादरे। सर्वत्र अतिसर्गे लोट्। अतिसर्गः कामचारानुज्ञा। किंच चिरंतनानि पुरतनानि वचांसि वेदवाक्यानि च माधिगीषत न पठन्तु नाम। तथापि देवेषु श्रीविष्ण्वादिषु भक्तिः, अवनित्रिदशेषु ब्राह्मणेषु निषये विश्राणनं दानं च "विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्" इत्यमरः। एषामान्ध्रदेश्यानां, समस्तान् दोषान् सर्वान् पूर्वोक्तान् विधुनोति निवारयति ॥ १५५ ॥

**पश्येति**। एतेषां आन्ध्रदेशीयानां अन्यामपीति शेषः। भाग्यवत्तां अग्रे वक्ष्यमाणां पश्य तावत् ॥ ५६ ॥

**रोमावल्येति**। अत्र उपमाप्रायपाठात्, तपनसुतया यमुनयेवेति व्यवहितोऽपि इवशब्दोऽनुषञ्जनीयः। रोमावल्या, रम्येण हारेण द्युनद्या गङ्गयेवेत्युपमितसमासः।

---

१ क्वचित्पुस्तके 'पत्रामत्रप्रकरकरणे' इति पाठो दृश्यते। अस्मिंश्च पाठे—"पत्रं पलाशं छदनम्" "पात्रामत्रं च भाजनम्" इति कोशात् पत्राणां पलाशानां अमत्रं पात्रं 'पत्रावली' इति महाराष्ट्रभाषायां प्रसिद्धं, तस्य प्रकरः समुदायः तस्य करणे इति व्याख्येयम्। क्वचित्क्वचित् दृश्यन्ते चाधुनातनानां धनिकानां गृहस्थानां गृहे मुखेन वेदपाठं कुर्वन्तः पत्रावलीकरणे नियुक्तास्तदाश्रिता वैदिकाः। २ 'माचाधिगीतवचनानि'. ३ 'हारा'. ४ 'स्तनगिरिजुषिर्'.

भूमेर्मूर्तीरिव वसुमतीर्भुञ्जते भाग्यवन्तः
क्षोणीपाला इव युवजनाः काममान्ध्रीः पुरन्ध्रीः ॥ १५६ ॥

शृणु तावत्—

को वा कल्पतरो[1]र्गुणः सुमनसां यत्स्वाश्रितानामसौ
सारांशान् हरत[2]ः प्रसह्य मधुपान् धत्ते महामो[3]दतः ॥
कर्णे त्वर्जुनकीर्तिहानिपरता कालाम्बुदे गर्जनम्
नीरन्ध्रं पुनरान्ध्रदेशनृपतिष्वास्तेऽनघं[4] स्पर्शनम् ॥ १५७ ॥

समन्तादवलोक्य—

[वय[5]स्यात्र गोदावरीतीरे केषांचिद्देषामवनीदिविषदामतिशिवपूजालोलुपतां पश्य ॥ ५७ ॥

---

एवमग्रेऽपि। हृद्याः मनोज्ञाः तुङ्गौ स्तनौ गिरी इव तौ जुषन्त इति तथोक्ताः। नाभिः वापीव तया मनोज्ञाः, वसुः कान्तिः वसु धनं च तद्वतीः, "वसुर्ना देवभेदाग्नि-भा-योक्त्र-बक-राजसु। क्लीबं वृद्ध्यौषधे श्याले रैरत्ने मधुरे त्रिषु" इति मेदिनी। अत एव भूमेः मूर्तीरिव स्थिताः आन्ध्रीः आन्ध्रदेशजाः पुरन्ध्रीः कुटुम्बिनीः स्त्रियः, क्षोणीपाला इव स्थिता भाग्यवन्तः युवजनाः अत्रत्याः तरुणाः, कामं भुञ्जते अनुभवन्ति। अत्रत्यानां स्त्रीपुंसानां सौन्दर्यं लोकोत्तरमिति भावः। उपमालंकारः ॥ १५६ ॥

**क इति**। असौ कल्पवृक्षः स्वमात्मानं आश्रितानां सुमनसां विदुषां देवानां पुष्पाणां च। सारान् श्रेष्ठान् अंशान् धनरूपान् मकरन्दरूपांश्च भागान् प्रसह्य बलात्कृत्य, हरतः मधुपान् मद्यपायिनः भृङ्गांश्च, महामोदतः अतिसुगन्धेन च अतिसन्तोषेणेति वा उपलक्षितः धत्ते। शिरसीति शेषः। संमानयतीत्यर्थः। इति यत्, असौ शिरसि मधुपधारणरूपः कल्पतरोः को वा गुणः न कोऽपि। किन्तु दोष एवेत्यर्थः। स्वसेवकैः विद्वद्धनापहरणस्य किरातराजप्रायतासूचकत्वादिति भावः। कर्णे सूर्यपुत्रे तु दातरि अर्जुनायाः शुभ्रायाः, अर्जुनस्य पार्थस्य च कीर्तेर्हानौ परता आसक्तिरस्ति। अयं दोषस्तस्मिन्नस्तीत्यर्थः। एवमग्रेऽपि कालाम्बुदे वार्षिकमेघे गर्जनं स्वकत्थनं स्तनितं च अस्ति। आन्ध्रदेशनृपतिषु पुनः नीरन्ध्रं अविच्छिन्नं स्पर्शनं दानं, अनघं उक्तदोषरहितं सत् आस्ते जागर्ति। व्यतिरेकालंकारः "उपमानाद्यदन्यस्य व्यतिरेकः स एव सः।" इति तल्लक्षणात् ॥ १५७ ॥

**वयस्येति**। वयस्य भो मित्र, अत्रास्मिन् गोदावरीतीरे केषांचिद्देषां दृश्यमानानां अवनीदिविषदां ब्राह्मणानां, अति अत्यन्तं शिवपूजायां लोलुपतां आसक्तिं पश्य॥५७॥

---

१ 'कल्पतरौ'. २ 'दधतः'. ३ 'मोहतः'. ४ 'समं,' 'स्फुटं,' 'घनं'. ५ इत आरभ्य १५९ श्लोकपर्यन्तो ग्रन्थस्तावन्नोपलभ्यते आदर्शपुस्तके। अत्रैव मुद्रिते एकस्मिन् पुस्तके उपलब्धः स तथैवास्माभिः संगृहीतः।

गोदावरीविमलतीर्थकृतावगाहा
लिङ्गेषु सैकतमयेषु शिवं विभाव्य ॥
भक्त्या तिलाक्षतसुमैरपि बिल्वपत्रै—
रर्चामिहावनिसुराः परिकुर्वतेऽमी ॥ १५८ ॥

सभक्त्युद्रेकम्—

नमामि गिरिनन्दिनीरमणपादपूजाहृता—
मिताघनिकरान् कराञ्चितवराक्षमालान् सदा ॥
अमूनमलचेतसश्शम-दमादियोगावहान्
श्रुतेर्गुणनिकानिकामपरिपूतवक्त्राम्बुजान् ॥ १५९ ॥

अहो कृष्णागोदावरीमध्यमध्यासीनानाममीषां वैदिकानामभिनन्दनीयोऽयमनपायः संप्रदायः ॥ ५८ ॥

निगमपाठनिराकृतदुष्कृता
नयविदो बहवोऽत्र धरासुराः ॥

---

**गोदावरीति** । इह गोदावरीतीरे अमी अवनीसुराः ब्राह्मणाः, गोदावर्या नाम नद्याः विमले तीर्थे जले कृतावगाहाः कृतस्नानाः सन्तः सैकतमयेषु वालुकानिर्मितेषु लिङ्गेषु । "सिकताः स्युर्वालुकापि" इत्यमरः । शिवं भक्तकल्याणदायिनं श्रीशंकरं विभाव्य ध्यात्वा, भक्त्योपलक्षिताः तिलमिश्रैः अक्षतैः सुमैः पुष्पैः, बिल्वपत्रैरपि करणैः । अर्चां पूजां परितः कुर्वते । तिलादिभिः शिवपूजनं अत्यन्तश्रेयःसंपादकम् । तदुक्तम्—"बिल्वपत्रैः प्रशस्तैर्वा पुष्पैर्वा तुलसीदलैः । तिलाक्षतैर्यजेद्देवं जीवन्मुक्तो न संशयः ॥" इति ॥ १५८ ॥

**नमामीति** । गिरिनन्दिनीरमणस्य पार्वतीपतेः पादयोः पूजया हृतः अमितानां अपरिमितानां अघानां पापानां दुःखानां वा निकरः राशिः येषां तान् । सदा करे अञ्चिता संगता वरा च अक्षमाला अकारादिहकारान्तवर्णप्रतिनिधिर्माला रुद्राक्षस्फटिकादिनिर्मिता येषां तान् । श्रुतेर्वेदस्य गुणनिकया अध्ययनावृत्त्या निकामं अत्यन्तं परिपूतं पवित्रितं वक्त्राम्बुजं मुखकमलं येषां तान् । अमलचेतसः अत एव शमः अन्तरिन्द्रियनिग्रहः, दमः बाह्येन्द्रियनिग्रहः तावादिर्येषां तादृशान्, योगान् मुक्त्युपायान् आवहन्ति सम्पादयन्तीति तथोक्तानमून् गोदावरीतीरवासिनः, नमामि ॥ १५९ ॥

**अहो इति** । अहो इत्याश्चर्ये । कृष्णा च गोदावरी च तयोर्मध्यं मध्यभागमध्यासीनानां अधिष्ठितानां अमीषां वैदिकानां वेदविदां, अनपायः अपायरहितः सततप्रचलित इत्यर्थः । अयं संप्रदाय आचारः अभिनन्दनीयः प्रशंसार्हः । अस्तीति शेषः ॥ ५८ ॥

**निगमेति** । निगमानां वेदानां पाठेन निराकृतं दूरीकृतं दुष्कृतं पापं यैस्तथाभूताः । नयविदः शास्त्रज्ञाः अत एव मुकुन्दः श्रीविष्णुरेव परं मुख्यं अयनं प्राप्यस्थानं

प्रतिवसन्तमुपात्तमखाः सुखम्
प्रतिवसन्ति मुकुन्दपरायणाः ॥ १६० ॥

अत्रत्यानामधिकारव्यापारनिरतानामप्ययं खल्वकलङ्को नियमः ॥ ५९ ॥

आश्रयितव्यो नरपतिरार्जयितव्यानि भूरिवित्तानि ॥
आरब्धव्यं वितरणमानेतव्यं यशो दशस्वपि दिशासु ॥ १६१ ॥

कृ०—समन्तादवलोक्य—

हन्त संततमत्यन्तदुरितनिरता यवना एव तावदमीषु विषयेषु प्राचुर्येतः पर्यटन्ति । पश्य सखे ॥ ६० ॥

अवनावतीतपवनाश्वशोभिनो भवनागशायिभवनावमर्दिनः ॥
सवनादिधर्मलवनाय दीक्षिता यवनाश्चरन्ति भुवनातिभीषणाः॥१६२॥

वि०—सत्यमेवमथाप्येतेषु तुरुष्कयवनेष्वनन्यसाधारणविक्रमं गुणममुं गृहाण ॥ ६१ ॥

---

येषां ते तादृशाः, बहवः धरासुराः ब्राह्मणाः, अत्र गोदावरीतीरे वसन्ते वसन्ते ऋतौ प्रतिवसन्तं, उपात्तमखाः कृतयज्ञाः सन्तः, सुखं यथा तथा प्रतिवसन्ति । "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यादिश्रुत्या वसन्तादिऋतुभेदेन यज्ञकर्म विहितम् ॥१६०॥

किंच **अत्रत्यानामिति** । अत्रत्यानामधिकारव्यापारनिरतानां राजकीयकार्यतत्पराणामपि, अयं दृश्यमानः खलु अकलङ्को निर्मलः नियमः व्रतनिष्ठा ॥ ५९ ॥

**आश्रयितव्य इति** । नरपतिः राजा आश्रयितव्यः, भूरीणि बहूनि "प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु । पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च " इत्यमरः । वित्तानि धनानि आर्जयितव्यानि, वितरणं दानं आरब्धव्यं कर्तव्यं, यशः दशदिशासु आनेतव्यं प्रापयितव्यं च । इति नियम इति संबन्धः ॥ १६१ ॥

**हन्तेति** । हन्तेति खेदे । संततं निरन्तरं अत्यन्ते दुरिते देव-ब्राह्मणद्रोहरूपे महापापकर्मणि निरता आसक्ताः यवना म्लेच्छजातीया एव तावदमीषु विषयेषु आन्ध्रदेशेषु, प्राचुर्यतः बाहुल्येन पर्यटन्ति परिभ्रमन्ति ॥ ६० ॥

**अवनाविति** । अतीतः वेगेन निर्जितः पवनः वायुः यैस्तैरश्वैः शोभन्त इति शोभिनः । भवस्य शिवस्य, नागशायिनः विष्णोश्च, भवनानां आलयानां अवमर्दिनः पातयितारः । सवनादीनां यज्ञप्रमुखानां धर्माणां वर्णाश्रमधर्माणां, लवनाय नाशाय दीक्षिताः कृतनिश्चयाः, अत एव भुवनस्य लोकस्य अतिभीषणाः यवनाः म्लेच्छाः अवनौ आन्ध्रदेशभूमौ सर्वत्र चरन्ति ॥ १६२ ॥

**सत्यमिति** । सत्यमेव 'भव-नागशायि-' इत्यादिना प्रतिपादितं दूषणं अस्त्येव

---

१ 'धर्मनिरतानाम्'. २ 'भूपतिः'. ३ 'दशापि दिशः'.

युद्धाय प्रमिलन्तु हन्त पटवो योधाः सहस्राधिका
यद्येकोऽपि बलात्तुरुष्क-यवनेष्वारूढघोटो भटः ॥
निस्त्रिंशं परिकम्पयन् स्वकटकान्निष्क्रामति क्रोधतः
सर्वे ते कृपणास्तृणान्यशरणाः खादन्ति सीदन्ति च॥१६३॥

किंच—

पिबन्तु मदिराममी परितुदन्तु देशानहो
हरन्तु परसुन्दरीरपलपन्तु वेदानपि ॥
तथापि च मृधाङ्गणे तृणवदेव मुक्त्वा तनुम्
हठाद्विदधते मरुत्पुरकपाटिकोद्धाटनम् ॥ १६४ ॥

---

अथापि एतेषु तुरुष्कयवनेषु तरुष्कदेशीययवनजनेषु, अन्यसाधारणः इतरजनसदृशः न भवतीत्यनन्यसाधारणः स चासौ विक्रमः पराक्रमस्तद्रूपं अमुं गुणं गृहाण ॥ ६१ ॥

**युद्धायेति**। पटवः रणे समर्थाः सहस्रादधिकाः असंख्याताः योधाः तुरुष्कयवनभिन्नजातीयाः योद्धारः, युद्धाय युद्धं कर्तुम् "क्रियार्थोपपद—" इत्यादिना चतुर्थी। प्रमिलन्तु संगच्छन्ताम्। अतिसर्गे लोट्। हन्तेत्याश्चर्ये। तदा तुरुष्केषु यवनेषु मध्ये, निर्धारणे सप्तमी। एकोऽपि किमुत द्वित्रादयः। भटः योद्धा आरूढः घोटः अश्वः येन स तथोक्तः सन्, निस्त्रिंशं खड्गं "तूण्यां खड्गे तु निस्त्रिंश-चन्द्रहासासिरिष्टयः" इत्यमरः। परिकम्पयंश्च सन् स्वकटकात् स्वसैन्यात्, बलात् वेगात्, क्रोधतः क्रोधेन च निष्क्रामति निर्गच्छति यदि। तदा ते पूर्वोक्ताः सर्वे भटाः अशरणाः रक्षकरहिताः अत एव कृपणाः दीनाश्च सन्तः, तृणानि खादन्ति भक्षयन्ति, सीदन्ति विषण्णा भवन्ति च। तृणभक्षकान् वल्मीकारूढांश्च वीरास्त्यजन्तीति प्रसिद्धेरिति भावः ॥ १६३ ॥

**पिबन्त्विति**। यद्यपि अमी तुरुष्का यवनाश्च मदिरां मद्यं पिबन्तु, देशान् परितुदन्तु त्रासयन्तु, परेषां सुन्दरीः स्त्रियः हरन्तु, वेदान् तदुक्तकर्माणि अपलपन्तु दूषयन्तु। अपिः समुच्चये। सर्वत्र अतिसर्गे लोट्। अतिसर्गः कामचारानुज्ञा। तथापि मृधाङ्गणे युद्धदेशे तनुं शरीरम्। चस्त्वर्थः। तृणमिव तृणवत् मुक्त्वा त्यक्त्वा, हठात् बलात् मरुतां देवानां पुरं स्वर्गस्तस्य कपाटिकायाः कपाटस्य उद्धाटनं विदधते कुर्वन्त्येव। भगवता श्रीकृष्णेनाप्येतदेवोक्तमर्जुनं प्रति—"हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्" इति ॥ १६४ ॥

---

१ 'बहवो'. २ 'रणाङ्गणे'.

# अथ कर्णाटदेशवर्णनम् १४.

इति व्योमयानमन्यतः स्पन्दयन्नग्रतो दृष्ट्वा सप्रत्यभिज्ञम्—
कर्णाटदेशो यः पूर्वं कर्णदेशमभूषयत् ॥
स एष साम्प्रतं पश्य चक्षुषोर्भूषणायते ॥ १६५ ॥
लोचनासेचनकं किल देशस्यास्य रामणीयकम् ॥ ६२ ॥

**युग्मकम्**[1]—

प्रतिनगरमिहारामाः प्रत्यारामं पचेलिमाः क्रमुकाः ॥
प्रसवाः प्रतिक्रमुकमप्युत्सर्पति[2] मधुततिः प्रतिप्रसवम् ॥ १६६ ॥
प्रतिमधुबिन्दु मिलिन्दाः प्रेङ्खन्ति प्रतिमिलिन्दमारावाः ॥
प्रत्यारावं सुदृशां मदा उदाराः प्रतिमदं मदनः ॥ १६७ ॥

---

अथ कर्णाटदेशवर्णनप्रस्तावार्थमाह—**इतीति**। व्योमयानं विमानं अन्यतः स्पन्दयन् गमयन्, अग्रतः अग्रभागे दृष्ट्वा, प्रत्यभिज्ञा पुरोवर्तिनि पूर्वज्ञानविषयाभेदावगाहि ज्ञानं तत्सहितं यथा तथा। प्राहेति शेषः।—

**कर्णाटेति**। यः कर्णाटो नाम देशः पूर्वं कर्णदेशं श्रोत्रभागं, अभूषयत् अलंकृतवान् श्रुत इत्यर्थः। स एषः कर्णाटदेशः चक्षुषोर्भूषणायते अलंकारवदाचरति दृश्यत इति भावः। सांप्रतं इदानीं " एतर्हि संप्रतीदानीमधुना सांप्रतं तथा " इत्यमरः। पश्य। तमिति शेषः ॥ १६५ ॥

**लोचनेति**। अस्य कर्णाटनाम्नो देशस्य रामणीयकम् रमणीयत्वम् लोचनयोः नेत्रयोः आसेचनकं चिरं दर्शनेपि तृप्त्यजनकं। " तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् " इत्यमरः। किल निश्चयेन ॥ ६२ ॥

रामणीयकमेव युग्मकेनोपपादयति—**प्रतिनगरमिति**। इह कर्णाटदेशे नगरे नगरे इति प्रतिनगरम्। वीप्सायामव्ययीभावः। एवमग्रेऽपि। आरामाः उपवनानि। " आरामः स्यादुपवनं " इत्यमरः। प्रत्यारामं प्रत्युपवनं च, वाक्यत्रयेऽपि विलसन्तीति योज्यम्। पचेलिमाः पाकाभिमुखाः, क्रमुकाः पूगवृक्षाः, प्रतिक्रमुकं च प्रसवाः पुष्पाणि, "स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने" इत्यमरः। प्रतिप्रसवं च मधुनः मकरन्दस्य ततिः बिन्दुसमूहः, प्रतिमधुबिन्दु च मिलिन्दाः भ्रमराः प्रेङ्खन्ति भ्रमन्ति। प्रतिमिलिन्दं प्रतिभ्रमरं च आरावा गुञ्जारवाः, भवन्तीति शेषः। प्रत्यारावं प्रतिगुञ्जारवं च सुदृशां स्त्रीणां उदाराः महान्तः, मदाः विलासाः, प्रतिमदं च मदनः कामः, उद्भवतीत्यर्थः ॥ १६६ ॥ १६७ ॥

---

१ "द्वाभ्यां **युग्म**मिति प्रोक्तं त्रिभिः श्लोकैर्**विशेषकम्**। **कालापकं** चतुर्भिः स्यात् तदूर्ध्वं **कुलकं** स्मृतम्।". २ 'उत्सर्जति'.

**कृशानुः**—हन्त कथमभिनन्दयसि निन्दनीयममुं देशम् ॥ ६३ ॥

तथाहि—

वेद-वैदिक-विद्वेषदूषिता भस्मरूषिताः ॥
चण्डाः सन्त्यत्र पाखण्डा लिङ्गालिङ्गितवक्षसः ॥ १६८ ॥

आकर्णय तावदन्यदप्यमीषामपचरितम् ॥ ६४ ॥

शिरः पुरारेर्द्विजराजपाददिव्यामृतैः सिक्तमितीर्ष्ययेव ॥
शूद्रा इमे लिङ्गधराः स्वयं तत्स्वपादतोयैः स्नपयन्ति कष्टम् ॥१६९॥

**वि०**—सखे मैवं संगदिष्ठाः[1] । यदस्मिन्देशे यदुशैलप्रभृतीनि दिव्यक्षेत्राणि दृश्यन्ते ॥ ६५ ॥

---

**हन्तेति** । हन्त निन्दनीयं निन्दितुं योग्यं अमुं देशं, कथमभिनन्दयसि आनन्दयसि । एतद्दर्शनेन आनन्दं करोषीत्यर्थः ॥ ६३ ॥

**वेदेति** । वेदानां वैदिकानां च विद्वेषेण दूषिताः दोषयुक्ताः, भस्मना भूत्या "भूतिर्भसित-भस्मनि" इत्यमरः । रूषिताः विलिप्तशरीराः, अत एव चण्डाः भयंकराः कोपयुक्ता वा । पाखण्डाः वेदशास्त्रभ्रष्टाः, लिङ्गैः रूप्यमयैः आलिङ्गितानि वक्षांसि येषां तथाभूताः, अर्थात् 'लिङ्गाईत' इति महाराष्ट्रभाषाप्रसिद्धा लोकाः । एतेषां हि वक्षसि–लिङ्गधारणं कुलपरंपराप्राप्तम् । अत्र कर्णाटदेशे सन्ति ॥ १६८ ॥

**आकर्णयेति** । अपचरितम् दुराचारः । अन्यत्सुगमम् ॥ ६४ ॥

एते लोका हि स्वपादोदकेन शंकरमभिषिञ्चन्ति, अयमेव तेषां महाननाचारः इति सोत्प्रेक्षमाह—**शिर इति** । पुरारेः श्रीशंकरस्य शिरः द्विजराजस्य ब्राह्मणश्रेष्ठस्य पादयोः, द्विजराजश्चन्द्रः " द्विजराजः शशधरः " इत्यमरः । तस्य पादानां किरणानां च इति वा । किंवा द्विजस्य पक्षिणः अर्थात् गरुडस्य राजा अधिपतिर्विष्णुः तस्य पादसंबन्धीनि यानि दिव्यामृतानि गङ्गाजलानि तैः, पक्षे पीयूषैः, पक्षे शुद्धजलैरिति च। अत्र मुद्रितैकस्मिन्पुस्तके द्विजराजशब्दस्य ब्राह्मणश्रेष्ठ इत्यर्थान्तरं टीकाकारोक्तं टिप्पणीकारेण 'गङ्गायाः ब्राह्मणपादजलत्वेन कुत्रापि प्रसिद्ध्यभावात्' इति हेतुपुरस्कारेण खण्डितम् । परं च तेन टीका नैव सम्यगवलोकितेति प्रतिभाति । टीकायां'द्विजराजपाद-दिव्यामृतैः' इत्येतद्घटकदिव्यामृतशब्दस्य दिव्यजलैरित्येवार्थः कृतः, नतु गङ्गाजलैरिति । किंच 'ईर्ष्ययेव' इत्युत्प्रेक्षास्वारस्यार्थं तादृशार्थकरणमेव युक्ततरम् । न हि तावत् चन्द्रेण सह तेषामीर्ष्या संभवति । नापि विष्णुना सह । शैवमताभिमानिनस्ते श्रीविष्णुं मा भजन्तु, परंतु न तस्मै ईर्ष्यन्ति । तादृशसामर्थ्याभावात् । इति ममाभिप्रेतम् । अत्रापि युक्तायुक्तविवेचनं विद्वदधीनम् । सिक्तं अभिषिक्तं इतीर्ष्ययैव अक्षमयैवेत्युत्प्रेक्षा । " अक्षान्तिरीर्ष्यासूया तु " इत्यमरः । इमे शूद्राः अनेन तेषामनधिकारित्वं द्योतितम् । स्वयं लिङ्गधराश्च सन्तः तत् शिवशिरः स्वपादतोयैः स्वकीयचरणोदकैः स्नपयन्ति अभिषिञ्चन्ति । कष्टम् अन्याय्यम् ॥ १६९ ॥

**सख इत्यादि** । मैवं संगदिष्ठाः मा वद । 'गदी देवशब्दे' इति चौरादेरुभय-

---

१ 'मैवं वादीः', 'मैवं सङ्गिरिष्ठाः'.

दुरितमवनतानां दुर्निरोधं[1] निरुन्धन्
सितमतिभिरतन्द्रैः[2] सेव्यमानो मुनीन्द्रैः ॥
यदुगिरिरयमिन्धे यत्र नारायणात्मा
विलसति[3] किल हर्षं नीलमेघः प्रवर्षन् ॥ १७० ॥

सभक्त्युन्मेषम्[4]—

यदुगिरितटागारा स्वाराजमौलिपरिस्फुर-
न्मणिगणमहोधारा[5] नीराजिताङ्घ्रिसरोरुहा ॥
नवजलधराकारा नारायणाह्वयभूषिता
निरवधिदयासारा[6] सा राजते परदेवता ॥ १७१ ॥

---

पदिनो धातोर्माङ्योगे लुङि आत्मनेपदे रूपम् । " अनित्यण्यन्ताश्चुरादयः " इति पक्षे णिजभावः । यत् यस्मात् अस्मिन् देशे यदुशैलः 'नारायणपुरम्' इति भाषाप्रसिद्धः । प्रभृतिः प्रमुखो येषु तादृशानि दिव्यक्षेत्राणि दृश्यन्ते । अनेन दिव्यक्षेत्रसत्त्वादेवायं देशो न दूषणीय इति सूचितम् ॥ ६५ ॥

**दुरितमिति** । अवनतानां भक्त्या नम्राणां दुर्निरोधं नाशयितुमशक्यं, दुरितं पापं निरुन्धन् विनाशयन्, अतो हेतोरेव सितमतिभिः शुद्धबुद्धिभिः अतन्द्रैः आलस्यरहितैश्च, मुनीन्द्रैः सेव्यमानः सन्, अयं यदुगिरिः यदुशैलः इन्द्धे प्रकाशते । यत्र यस्मिन् पर्वते नारायणात्मा भगवद्विष्णुरूपः नीलमेघः हर्षमानन्दं प्रवर्षन् सन्, विलसति किल शोभते । एतेन भगवतो मेघरूपवर्णनेन "मेघ-पर्वतयोरब्धि-चन्द्रयोर्दृष्टिरम्ययोः । शिखि-तोयदयोर्लोके सिद्धा मैत्री स्वभावतः" इत्यौचिती प्रदर्शिता ॥ १७० ॥

**यदुगिरीति** । यदुगिरेस्तटं शिखरं अगारं निवासभवनं यस्याः सा " भवनागारमन्दिरम् " इत्यमरः । स्वाराजस्य स्वर्गाधिपतेरिन्द्रस्य मौलौ मस्तके परिस्फुरन्तः प्रकाशमाना ये मणिगणा रत्नसमूहास्तेषां यानि महांसि तेजांसि तेषां धाराभिः परंपराभिः नीराजिते प्रदीप्ते अङ्घ्रिसरोरुहे चरणकमले यस्याः सा । अर्थान्नमस्कारावसरे इति ज्ञेयम् । एतेनेन्द्रादयोऽप्येतद्दर्शनार्थमत्रागच्छन्तीत्यतोऽतिशयमाहात्म्यमस्य पर्वतस्य सूचितम् । नवजलधरस्य नूतनमेघस्यैवाकारो यस्याः सा, निरवधिर्निःसीमः दयासारः कृपासामर्थ्यं यस्याः सा, नारायण इत्याह्वयेन नाम्ना भूषिता एतादृशी सा परदेवता राजते शोभते ॥ १७१ ॥

---

१ 'दुर्निवारं'. २ 'अतन्त्रैः'. ३ 'निवसति'. ४ 'पुनःसविस्मयम्'. ५ 'मरकत'. ६ 'निरुपम', 'निरुपधि'.

पुनः सविस्मयम्—

यः प्रभुर्यादवक्ष्माभृत्पुरस्कृत्या पुरा बभौ ॥
अधुना यादवक्ष्माभृदधः[1]कृत्या स भात्यहो ॥ १७२ ॥

सश्लाघम्—

भूभृत्यस्मिन् पक्षिराजेन पूर्वं श्वेतद्वीपादाहृतां श्वेतमृत्स्नाम् ॥
धन्या नित्यं धारयन्तो ललाटे मालीमस्यं मानसं[2] निर्मृजन्ति॥१७३॥

किंच—

विष्णुपद्याकलनया विश्रुतो[3] विमलाशयः ॥
कासारोऽत्र हरत्येनः कविः कंसारिभागिव ॥ १७४ ॥

इति विमानमितरत्र परिस्पन्दयन् सानन्दम्—

रजतपीठपुरं ननु काञ्चनश्रियमिदं वहते महदद्भुतम् ॥
इह वसन् शुभरीतिर्विहो[4] बुधः परमयोगत एव विराजते ॥ १७५ ॥

---

किंच **य इति**। यः प्रभुः नारायणः पुरा कृष्णावतारे यादवानां क्ष्माभृद्राजा उग्रसेनः तस्य पुरस्कृत्या राज्यप्रदानरूपपूजया, यादवानां तु ययातिशापात् राज्यासनानर्हत्वमिति भावः। ययातेः शापप्रकारस्तु श्रीमद्भागवतस्य नवमस्कन्धतो ज्ञातव्यः । कृष्णेनोग्रसेनाय राज्यं कथं समर्पितमित्यपि भागवतदशमस्कन्धपूर्वार्द्धतोऽवगन्तव्यम् । बभौ शुशुभे । स एव नारायणः अधुना सांप्रतं यादवक्ष्माभृतो यदुशैलस्य, अधःकृत्या अधोभागकरणेन भाति । अहो आश्चर्यमिदम् । श्लेषेण विरोधालंकारः॥१७२ ॥

**भूभृतीति** । अस्मिन् भूभृति पर्वते "भूभृद्भूमिधरे नृपे" इत्यमरः । पूर्वं कृतयुगे श्वेतद्वीपात्, पक्षिराजेन गरुडेन आहृतामानीताम्, श्वेतमृत्स्नां श्वेतमृत्तिकाम् गोपीचन्दनरूपाम्। "मृत्सा मृत्स्ना च मृत्तिका" इत्यमरः। नित्यं ललाटे मस्तके तिलकरूपेण धारयन्तः अत एव धन्याः पुण्यवन्तः सन्तः, मालीमस्यं मलीमसमेव मालीमस्यं स्वार्थे ष्यञ् । मलिनमित्यर्थः । मानसं मनः 'मानसात्'इति पाठे मालीमस्यं मलिनत्वमित्यर्थः । निर्मृजन्ति शोधयन्ति ॥ १७३ ॥

**विष्णुपद्येति** । किंच विष्णुपद्याः गङ्गायाः "गङ्गा विष्णुपदी जह्नुतनया" इत्यमरः । विष्णोः संबन्धिपद्यानां श्लोकानां आकलनया संगत्या रचनया च, विमलः निर्मलः आशयः अभिप्रायः स्थानं च यस्य सः, अत एव विश्रुतः प्रसिद्धः । कासारः सरोवरं, अत्र यदुशैले कंसारिं श्रीकृष्णं भजतीति कंसारिभाक् कृष्णभक्त इत्यर्थः । कविरिव एनः पापं हरति । उपमालंकारः ॥ १७४ ॥

**इतीति** । परिस्पन्दयन् गमयन् । सुलभमन्यत् ।

**रजतेति** । रजतपीठं नाम पुरं नगरं 'सुवनूरु' इति कर्णाटभाषानाम । इदं

---

१ 'अधःकृत्वा'. २ 'मानसान्नि', 'मानसे'. ३ 'विस्तृतो'. ४ 'शुभरीतिरहो'.

पश्य तावत्कलिकालनरपालस्य गृहस्थेषु प्रद्वेषं भिक्षुषु पक्षपातं च ॥६८॥

भिक्षां कष्टमटन्ति कुक्षिभृतये पादौ गतैः क्लेशय—
न्त्याच्छन्नाः शिथिलैः पटैश्च गृहिणो जीर्णे गृहे शेरते ॥
राजत्सूक्ष्मपटाः प्रशस्तशिबिकारूढा गृहिभ्योऽन्नदा
ग्रावव्यूहदृढे मठे स्थितिजुषो धन्या हि संन्यासिनः ॥ १८० ॥

अन्यच्च—

अनभ्यस्य वेदानहो शास्त्रवादान्
पठन्तः स्फुटं ये बतैतन्मतस्थाः ॥
अधीशाननादृत्य तद्भृत्यपूजा-[1]
पराणां नराणां पदं ते भजन्ते ॥ १८१ ॥

---

**पश्येति** । तावत्कलिकालरूपस्य नरपालस्य राज्ञः गृहस्थेषु गृहस्थाश्रमिषु प्रद्वेषं, भिक्षुषु संन्यासिषु " भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी " इत्यमरः । पक्षपातं च पश्य ॥ ६८ ॥

**भिक्षामिति** । गृहिणो गृहस्थाश्रमिणः कुक्षिभृतये उदरपोषणार्थं भिक्षां भिक्षार्थं अटन्ति संचरन्ति । गतैः गमनैः पादौ क्लेशयन्ति च । शिथिलैर्जीर्णैः पटैर्वस्त्रैश्चाच्छन्नाः सन्तः जीर्णे गृहे शेरते शयनं कुर्वन्ति निवसन्तीत्यर्थः । " शीङो रुट् " इति झस्य रुडागमः । संन्यासिनो हि संन्यासिनस्तु गृहिभ्यो गृहस्थाश्रमिभ्योऽन्नदा अन्नप्रदातारः, भिक्षुभ्यो गृहस्थैरन्नं देयमिति हि वास्तवो धर्मः । राजन्तः शोभमानाः सूक्ष्माश्च पटा वस्त्राणि येषां ते तथाभूताः, बहिर्गमनवेलायामिति शेषः । प्रशस्तायां विस्तृतायां शिबिकायामान्दोलिकायां आरूढाश्च सन्तः, ग्राव्णां पाषाणानां " पाषाण–प्रस्तरग्रावोपलाश्मानः शिला दृषत् " इत्यमरः । व्यूहैः समूहैः दृढे अभेद्ये मठे, स्थितिं वासं जुषन्ति कुर्वन्तीति तथोक्ताः ते धन्याः । धन्यपदमेतन्निन्दाद्योतकम् ॥ १८० ॥

**अनभ्यस्येति** । ये लोकाः वेदान् अनभ्यस्य वेदाभ्यासमकृत्वेत्यर्थः । अहो केवलं शास्त्रवादानेव पठन्तः सन्तः, एतन्मतस्थाः माध्वमताभिमानिनः, वेदाध्ययनाभावे केवलं शास्त्राध्ययने दोषमाहुर्मन्वादयः । यथा–" योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ " इति । ते लोकाः अधीशाननादृत्य तिरस्कृत्य, तद्भृत्यपूजापराणां तेषां अधीशानां भृत्यपूजायां सेवकपूजायां परा आसक्तास्तेषां, नराणां पदं स्थानं, स्फुटं स्पष्टं यथा तथा लभन्ते । बतेति खेदे । यथा तावत्प्रभुसेवामुपेक्ष्य तद्भृत्यसेवका निन्द्याः दण्डार्हाश्च भवन्ति, तथा एते माध्वा अपि निखिलपुरुषार्थसाधकं वेदमनादृत्य केवलं शास्त्रपठनपरा इहलोके निन्द्याः, परलोके च तीक्ष्णयमयातनाभुज एवेति भावः ॥ १८१ ॥

---

१ 'तद्भक्तपूजापराणाम्'.

किंच—

एकादश्यां कालयोर्होमहाना-
देषामग्निर्लौकिकत्वं यदागात् ॥
तस्मादेषां व्यर्थहिंसानिवृत्त्यै
स्यादुत्कृष्टः पिष्टपश्वादरोऽपि ॥ १८२ ॥

वि०—किमरे केशवभक्तिप्रकर्षदीप्रानपि विप्रान् दूषयसि ? शुद्धा[1] किल मध्वसिद्धान्तनिष्ठानामियं हृदयं जरीहरीति रीतिः[2] ॥ ६९ ॥

आबालस्थविरं स्थिरं हरिदिने शुद्धोपवासव्रतम् ॥
निष्प्रत्यूहमहर्निशं[3] विजयते नारायणाराधनम् ॥
श्लाघ्या भागवतेषु भक्तिरमिता[4] श्रद्धा च येषां दृढा
शास्त्रे स्वीयगुरूदिते[5] न चरितं साध्वेषु माध्वेषु किम्?॥१८३॥

---

**एकादश्यामिति** । किंच एकादश्यां एकादशीदिने कालयोः प्रातःसायमित्युभयोः, सप्तमीयम् । होमहानात्, यतस्तन्मते स्नान-संध्या-विष्ण्वर्चनत्रयातिरिक्तस्य कर्ममात्रस्यैकादश्यां त्यागावश्यकत्वम् । एषां माध्वानां यदा अग्निः गार्हपत्यादिः लौकिकत्वं अगात् प्राप्तः, एककालहोमाकरणे अग्नेर्लौकिकत्वं श्रुति–स्मृतिविहितम् । तस्मात्कारणादेषां व्यर्थहिंसायाः प्राकृताग्नौ कृतहविस्त्यागस्य व्यर्थत्वात् निष्फलपशुहिंसायाः निवृत्त्यै निवारणार्थं पिष्टपशोः आदरोऽङ्गीकारोऽपि उत्कृष्टः स्यात् । एवं च एकादश्यां होमत्यागात् यज्ञसमये च कुत्रापि शास्त्रे अविहितस्य पिष्टपश्वालम्भनस्य च करणात् निन्द्या एवैते इति भावः ॥ १८२ ॥

**किमिति** । किमरे केशवभक्तेर्विष्णुभक्तेः प्रकर्षेणाधिक्येन दीप्रान् तेजोयुक्तानपि " नमि-कम्पि– " इत्यादिना रः । विप्रान् दूषयसि ? परंतु मध्वसिद्धान्ते मध्वाचार्यप्रोक्तशास्त्रे निष्ठा आसक्तिर्येषां तेषां इयं वक्ष्यमाणा शुद्धा दूषणानर्हा रीतिराचारः, हृदयं जरीहरीति वारंवारं भृशं वा हरति । अतिमनोहरेत्यर्थः । ' हृञ् हरणे ' इत्यस्माद्यङ्लुकि लटि रूपम् । " यङो वा " इतीडागमः । "ऋतश्च " इत्यभ्यासस्य रीगागमश्च ॥ ६९ ॥

**आबालेति** । येषां माध्वानां आबालस्थविरं बालमारभ्य वृद्धपर्यन्तं " आङ्मर्यादा– " इति समासः । हरिदिने एकादशीदिने स्थिरं शुद्धं उपवासस्य निराहारस्य व्रतं नियमः । विजयते । सर्वत्रेदमेव क्रियापदमन्वेतव्यम् । अहर्निशं निष्प्रत्यूहं निर्विघ्नं यथा तथा नारायणस्य विष्णोः आराधानं सेवनं, भागवतेषु भगवद्भक्तेषु च श्लाघ्या स्तुत्या अमिता अतुला भक्तिः, स्वीयगुरुभिः उदिते कथिते शास्त्रे दृढा कदापि विना-

---

१ 'शुद्धा हि'. २ 'हृदयरञ्जनी रीतिः'. ३ अहर्दिवं'. ४ 'अधिका'. ५ 'सा च'.

एतद्गुरूणां पुनर्यतीनामेषामाकलितदोषवैधुर्या एषा शुभचर्या ॥७०॥

दनुजभिदभिषेकैः सत्पुराणावलोकैः[1]
पुनरपहतमोहैः पुण्यतीर्थावगाहैः ॥
भवकथनविदूरैर्ब्रह्मविद्याविचारैः[2]
क्षणमिव शुभचर्याः[3] कालमेते नयन्ति ॥ १८४ ॥

यदपि तदुपरि त्वया दूषणमुपन्यस्तं तदपि मदपिहितहृदयेभ्यो[4] भवादृशेभ्य एव रोचते न तु गुणग्राहिभ्यः ॥ ७१ ॥

तत्तद्देशनिवासिशिष्यनिवहत्राणाय गुर्वाज्ञया
संचाराक्षम एष विन्दति यतिश्चेद्वाहनं का क्षतिः ? ॥

---

शरहिता, श्रद्धा आस्तिक्यबुद्धिश्च विजयते सर्वोत्कर्षेण विद्यते । तस्मात् एषु माध्वेषु साधु शोभनं चरितं न किम् ! अपि तु अस्त्येवेत्यर्थः ॥ १८३ ॥

**एतदिति** । एतेषां माध्वानां गुरवस्तेषां पुनर्यतीनां संन्यासिनां एषां, आकलितं प्राप्तं दोषाणां पूर्वोक्तानां वैधुर्यमभावो यस्याः सा तथोक्ता एषा वक्ष्यमाणा शुभचर्या शुभाचरणम् ॥ ७० ॥—

**दनुजेति** । दनुजान् दैत्यान् " असुरा दैत्य-दैतेय-दनुजेन्द्रारि-दानवाः " इत्यमरः । भिनत्ति नाशयति तथोक्तो विष्णुस्तस्याभिषेकैः, भवस्य संसारस्य कथनेन विदूरैः रहितैः पुनश्च अपहतो नष्टो मोहोऽज्ञानं यैस्तथाभूतैः, यच्छ्रवणादिना सद्यो मोहनिराकरणं भवति तथोक्तैरित्यर्थः । सत्पुराणानां भगवच्चरितप्रतिपादकत्वेन प्रशस्तपुराणग्रन्थानां अवलोकैः विचारैः, ब्रह्मविद्याया वेदान्तशास्त्रस्य विचारैश्च । ' अपहतमोहैः ' ' भवकथन—' इत्यादिविशेषणद्वयमत्राप्यनुषञ्जनीयम् । पुण्यतीर्थानां गङ्गादीनामवगाहैः स्नानैश्च शुभा निर्मला चर्या आचरणं येषां तथाभूताः एते संन्यासिनः क्षणमिव कालं नयन्ति निर्यापयन्ति ॥ १८४ ॥

**यदपीति** । यदपि त्वया ' सततमकृतसंध्योपास्तिः ' इत्यादिना तदुपरि माध्वसंन्यासिषु दूषणमुपन्यस्तमारोपितं, तदपि मदेनाज्ञानेन पिहितमाच्छादितं हृदयमन्तःकरणं येषां तेभ्यो भवादृशेभ्यस्त्वत्सदृशेभ्य एव "आ सर्वनाम्नः" इति भवच्छब्दस्याकारादेशः । रोचते । गुणग्राहिभ्यस्तु न, रोचते इत्यनुषञ्जनीयम् ॥ ७१ ॥

अथ ' भिक्षां कष्टमटन्ति–' इत्यादिनोक्तं दूषणं निराकरोति–**तत्तद्देशेति** । एष यतिः माध्वसंन्यासी गुरोः मध्वाचार्यस्य आज्ञया ' देशान्तरनिवासिनः शिष्यान् मन्त्रोपदेशेनानुगृहाण ' इत्यात्मिकया तत्तद्देशनिवासिनः निकृष्टदेशवासिनः शिष्यनिहवस्य शिष्यसमूहस्य " समूहे निवह–व्यूह– " इत्यमरः । त्राणाय मन्त्रोपदेशद्वारेण रक्षणाय संचारे केवलं पादमात्रेण गमने अक्षमः सन् वा-

---

१ 'तत्पुराणावलोकैः.' २ 'कदन.' ३ 'यतिवर्याः.' ४ 'मदविहित,' 'मदनपिहित'.

दत्तं वित्तमशेषमास्तिकजनैर्दैत्यारिनित्यार्चना-
सात्कृत्य स्वयमस्पृशन् वसति चेन्निन्दास्ति किं तावता? ॥१८५॥

ञ्च—

ामिनि विनियुक्तानां [1]स्वत्वेनानध्यवस्यता यतिना ॥
त्यं यत्यन्नत्वं प्रत्यवयन्त्यत्र तद्भुजे[2]श्च कुतः? ॥ १८६ ॥

ेन मतान्तरस्था अपि मठाधिपतयो यतयो व्याख्याताः ।
ावधेयम् ॥ ७२ ॥

यदि कतिपये जात्वा[3]लस्याद्यथासमयं द्विजा
बत न तनुयुः संध्योपास्तिं भविष्यति किं ततः ॥
निगमचरितानङ्गीकारो हि दूषणमङ्गिना-
मशकनवशाद्दोषायैषां न जात्वननुष्ठितिः ॥ १८७ ॥

---

वेकादिरूपं विन्दति चेत् का क्षतिः हानिः? तथा अस्ति परलोक ईश्वरो वा र्थैषां तैर्जनैः दत्तं समर्पितं अशेषं संपूर्णमपि वित्तं दैत्यारेः श्रीविष्णोः नि- ाः नित्यपूजायाः सात्कृत्य अधीनं कृत्वा "तदधीनवचने" इति सातिः । पृशन् सन् वसति चेत्, तावता निन्दा अस्ति किम्? नास्त्येवेत्यर्थः । गुर्वा- पकारार्थं वाहनेन देशान्तरसंचारादौ न कोऽपि दोष इति भावः ॥ १८५ ॥

ं 'यस्य क्वापि विलोकने' इत्यादिनोक्तं दूषणं परिहरन्नाह—**स्वामिनी-** च स्वत्वेन स्वकीयत्वेन अनध्यवस्यता अनभिमन्यमानेन यतिना माध्वसं- स्वामिनि विष्णौ विनियुक्तानां समर्पितानां अन्नानां, यत्यन्नत्वं कुतः तथा तत् ईश्वरसमर्पितमन्नं भुञ्जन्ति ते तद्भुजः तेऽपि, अत्र भक्षणे कृते सति ः प्रत्यवयन्ति दोषयुक्ता भवन्ति? अपि तु नैव भवन्तीत्यर्थः ॥ १८६ ॥

**ति** । एतेन स्वामिनीत्यादिवचनेन मतान्तरस्थाः शांकर–रामानुजीयादयः यो यतयः संन्यासिनो व्याख्याताः दोषरहिताः कृताः । इदं वक्ष्यमाणं अवधेयं ॥

सततमकृतसंध्योपास्तिरभ्यस्तशास्त्रः—' इत्यादिश्लोकोक्तदूषणं निवारयन्ना- **ति** । कतिपये कतिचन नतु सर्वे, द्विजाः मध्वमतस्था ब्राह्मणाः यदि जातु नतु सर्वकालं, आलस्यात् अलसस्य अशक्तेर्भावः आलस्यं तस्मात्, यथा- ऽमनतिक्रम्य, संध्योपास्तिं संध्यानुष्ठानं न तनुयुः बत न कुर्युः, तर्हि ततः किं ? न किमपीति भावः । ननु कालातिक्रमे दोष एव शास्त्रेण विहितः, एवं ादमुच्यते इति चेत्तत्राह— **निगमेति** । हि यस्मात् कारणात् निगम- श्रुति-स्मृतिविहितकर्मणः अनङ्गीकारः नास्तिकत्वादस्वीकरणं, अङ्गिनां

---

[1] वेनानध्यवस्यता'. २ 'तद्भुजस्तु'. ३ 'जातालस्याः'.

किंच—

'पन्थानमनुरुन्धानः पित्रादेर्नैव दुष्यति' ।
इति स्मृतिमधीयानैरेषां दोषो हि दुर्वचः ॥ १८८ ॥

इति विमानं दूरतः समानयन् परितो दृष्ट्वा—
भाषा—वेषाचारैर्भूषाभिः पूरुषाश्च योषाश्च ॥
वीक्षस्व[1] प्रतिदेशं विलक्षणा एव हन्त लक्ष्यन्ते[1] ॥ १८९ ॥

कृ०—सखे[2] वीक्षस्वेति मा वोचः । किंतु सत्वरमतिक्राम[3] कीशकल्पजनानिमान् जनपदान् ॥ ७३ ॥

चन्द्रालोकचयान्धकारभरयोश्चाम्पेय-किम्पाकयो
राजत्कुण्डलिराज-राजिलकयो राजीव-धत्तूरयोः ॥

---

मनुष्याणां दूषणं भवति । किंतु अशकनवशात् अशक्तिपारतन्त्र्यात् अननुष्ठितिः कालातिक्रमणरूपा, जातु कदाचिदपि एषां माध्वानां दोषाय न भवति ॥ १८७ ॥

अथ 'एकादश्यां काल्योर्होमहानात्—' इत्यादि दूषणं परिहरति— **पन्थानमिति** । 'पित्रादेः पितृ-पितामह-प्रपितामहादिगुरुजनस्य पन्थानं आचरणमार्गमनुरुन्धानः अनुसरन्, नैव दुष्यति' इत्यर्थिकां स्मृतिं अधीयानैः, अभ्यसमानैः ज्ञानिभिः, एषां माध्वानां दोषः एकादशीदिने होमाकरणादिरूपः' दुर्वचः वक्तुमशक्यः । हिरवधारणे । त्वादृशैः पुरोभागिभिस्तु सुशक इति भावः ॥ १८८ ॥

**इतीति** । इत्युक्त्वा विमानं दूरतः दूरे । सार्वविभक्तिकस्तसिः । समानयन् परितः आसमन्तात् दृष्ट्वा, आहेति शेषः ।—

**भाषेति** । भाषाश्च वेषाश्च आचाराश्च तैः, भूषाभिः कटक-कुण्डल-हाराद्यलंकारैः करणैः, विलक्षणाः भिन्नभिन्नप्रकाराः पूरुषाः "पुरुषाः पूरुषा नराः" इत्यमरात् दीर्घादिरपि । योषाः स्त्रियश्च "स्त्रीयोषिदबला योषा" इत्यमरः । प्रतिदेशं देशे देशे । हन्तेत्यानन्दे । लक्ष्यन्ते दृश्यन्ते वीक्ष्यस्व । अवलोकय ॥ १८९ ॥

एवमुक्ते अतीव निर्वेदयुक्तः **कृशानुराह—सखे इति** । हे सखे, 'वीक्षस्व' इति मा वोचः मा वद । 'वच परिभाषणे' इत्यस्माल्लुङि "अस्यति-वक्ति-" इत्यादिना अङि "वच उम्" इति उम् । माङ्योगादडागमाभावः । किंतु सत्वरं कीशकल्पाः वानरसदृशाः 'ईषदसमाप्तौ कल्पप्—" इत्यादिना कल्पप्प्रत्ययः । जनाः येषु तान् जनपदान् देशान् अतिक्राम अतिक्रम्य गच्छ । क्रमेर्लोण्मध्यमपुरुषैकवचनम् । "वा भ्राश-भ्लाष-" इत्यादिना श्यन्विकल्पात् पक्षे शप् ॥ ७३ ॥

सत्वरमतिक्रमणे को हेतुरित्याह—**चन्द्रालोकेति** । चन्द्रालोकचयः चन्द्रप्रकाशसमूहश्च अन्धकारभरः अन्धकारातिशयश्च तयोः, चाम्पेय-किम्पाकयोः केसर-

---

१ 'दृश्यन्ते'. २ 'वयस्य'. ३ 'अतिक्रामावः'.

खेलत्कोकिललोक-काककुलयोः क्षीरार्णवान्ध्वोरिव
व्यक्तं पण्डित-मूर्खयोः समदृशो व्रात्या इहत्या अमी ॥ १९० ॥

---

## अथ वेङ्कटगिरिवर्णनम् १५.

**विश्वावसुः**–ओमित्यग्रे विमानमुपानयन् सानन्दं साञ्जलिबन्धं च–
सुरभितमतमालस्तोमपुष्यद्रसाल-
प्रकरतिलकसालप्रेष्ठ[1]सुष्ठुद्रुजालः ॥
श्रितसमवनशीलः श्रीशलीलानुकूलः
शिथिलितभवमूलः सेव्यतां शेषशैलः ॥ १९१ ॥

---

विषवृक्षयोः, सर्वत्र द्वन्द्वः। "चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः"। "महाकाललतायां च किम्पाकः" इत्यमर-रत्नमालयोः। राजत्कुण्डलिराज-राजिलकयोः सुशोभितसर्पराज-डुण्डुभयोः। डुण्डुभो नाम द्विमुखो निर्विषश्च हीनसर्पः। "कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी"। "अलगर्दो जलव्यालः समौ राजिल-डुण्डुभौ" इत्युभयत्राप्यमरः। राजीव-धत्तूरयोः कमलोन्मत्तपुष्पयोः। "उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः" इत्यमरः। खेलन् मधुरविरावादिलीलां कुर्वन् यः कोकिलानां लोकः समूहः काकानां कुलं च तयोः, क्षीरार्णवान्ध्वोः क्षीरसमुद्र-कूपयोश्चैव। अयं व्यवहितोऽपि इवशब्दः उपरि सर्वत्रानुयोज्यः। इहत्याः कर्णाटदेशीयाः अमी व्रात्याः जनाः विधिवदध्ययनादिसंस्कारहीनाः, "व्रात्यः संस्कारहीनः स्यात्" इत्यमरः। व्यक्तं स्फुटं यथा तथा पण्डित-मूर्खयोः, समं न्यूनाधिकभावरहितं यथा स्यात्तथा पश्यन्तीति ते तथोक्ताः सन्तीति शेषः। तस्मादचिरादेवेतः स्थानादतिक्रमणं श्रेय इति भावः ॥ १९० ॥

साम्प्रतं वेङ्कटाचलवर्णनार्थं **विश्वावसोः कृशानु**वचनाङ्गीकारपूर्विकामुक्तिमाह–**ओमिति**। ओमित्यङ्गीकारे। तद्भाषणमङ्गीकृत्येत्यर्थः। अग्रे इत्यादि स्पष्टम्।

**सुरभीति**। सुरभितमाः अतिसुगन्धयुक्ताश्च ते तमालास्तापिच्छवृक्षास्तेषां स्तोमः समूहः। "कालस्कन्धस्तमालः स्यात्तापिच्छः" इत्यमरः। पुष्यन् प्रतिदिनं वृद्धिं प्राप्नुवन् रसालानां आम्रवृक्षाणां प्रकरः समुदायः। "आम्रश्चूतो रसालोऽसौ सहकारोतिसौरभः" इत्यमरः। तिलकाः क्षुरकवृक्षाः "तिलकः क्षुरकः श्रीमान्" इत्यमरः। सालाः सर्जसंज्ञका वृक्षाश्च ते प्रेष्ठाः मुख्याः येषु तानि सुष्ठुद्रूणां शोभनवृक्षाणां जालानि वृन्दानि यस्मिन् सः। प्रेष्ठ इत्ययं शब्दः प्रियशब्दात् इष्ठनि सिध्यति। ततश्च प्रेष्ठ इत्यस्य प्रियतम इत्येवार्थो न्याय्यः, अथाप्यत्र पूर्वापरसंबन्धात् मुख्य इत्यर्थकरणं यु-

---

[1] 'प्रष्ठ'.

पुनःसहर्षम्—

पन्नगेषु च नगेषु खगेषु द्वीपिराजसु[1] पृषत्सु दृषत्सु ॥
वल्लरीषु च दरीषु झरीषु प्रार्थयन्ति जनिमत्र मुनीन्द्राः ॥ १९२ ॥

विविधनिगमसारे विश्वरक्षैकधीरे
वृषशिखरिविहारे वक्षसाऽऽश्लिष्टदारे ॥
भगवति यदुवीरे भक्तबुद्धेरदूरे
भवतु चिरमुदारे भावना निर्विकारे ॥ १९३ ॥

अहो महोन्नता खल्वस्य शैलस्य धन्यता ॥ ७४ ॥

---

क्तम् । कस्मिंश्चित् पुस्तके 'प्रष्ठ' इति पाठान्तरं दृश्यते, तदा तु सुतरां मुख्या इत्यर्थलाभः । श्रितानां आश्रितानां भक्तानामिति यावत् । समवनं सम्यग्रक्षणं तदनुरूपं शीलं स्वभावो यस्य सः । तथा श्रीशस्य श्रीनिवासाभिधविष्णुमूर्तेः लीलानां क्रीडानां अनुकूलः, तथा शिथिलितं भवस्य संसारस्य मूलं मायामोहरूपं येन सः । अयं शेषशैलः वेङ्कटाचलः सेव्यतां आश्रीयताम् । त्वयेति परिशेषात् ॥ १९१ ॥

**पन्नगेष्विति** । अत्र शेषशैले पन्नगेषु सर्पेषु, नगेषु वृक्षेषु, खगेषु पक्षिषु, द्वीपिराजसु व्याघ्रराजसु, महाव्याघ्रेष्वित्यर्थः । " शार्दूल-द्वीपिनौ व्याघ्रे " इत्यमरः । पृषत्सु मृगेषु " पृषन्मृगे पुमान् बिन्दौ न द्वयोः पृषतोऽपि ना " इति कोशः । दृषत्सु, पाषाणेषु, " पाषाण-प्रस्तर-ग्रावोपलाश्मानः शिला दृषत् " इत्यमरः । वल्लरीषु वल्लीषु, दरीषु गुहासु वा, झरीषु जलप्रवाहेषु, मुनीन्द्राः स्थानान्तरनिवासिनः ऋषयः, जनिं जन्म "जनुर्जनन-जन्मानि जनिरुत्पत्तिरुद्भवः" इत्यमरः । प्रार्थयन्ति । सर्पवृक्षादिरूपेणाप्यत्रास्माकं जन्म भवतु इति वाञ्छन्तीत्यर्थः । एतेन तत्स्थानस्यातीव श्रेयःसंपादकत्वं सूचितम् ॥ १९२ ॥

**विविधेति** । विविधनिगमानां कर्म-ज्ञानोपासनारूपविविधमार्गप्रतिपादकानां वेदशास्त्राणां साररूपःप्रतिपाद्यस्तस्मिन्, विश्वस्य जगतो रक्षायां एक एव धीरः समर्थस्तस्मिन्, वृषशिखरिः शेषशैलः तस्मिन् विहारः क्रीडा यस्य तस्मिन्, वक्षसा हृदयेन आश्लिष्टा दाराः भगवती लक्ष्मीपत्नी येन सः तस्मिन्, भक्तानां बुद्धेः अदूरे समीपस्थिते भक्तानामपरोक्षज्ञानविषय इत्यर्थः । उदारे महति, निर्विकारे जन्ममरणादिविकाररहिते, भगवति यदुवीरे श्रीकृष्णे, भावना ध्यानरूपाऽऽसक्तिः चिरं चिरकालं निरन्तरमित्यर्थः । भवतु ॥ १९३ ॥

**अहो इति** । अहो इत्याश्चर्ये । अस्य शैलस्य शेषाचलस्य धन्यता महोन्नता अतीव श्रेष्ठा किल अस्ति ॥ ७४ ॥

---

१ 'द्वीपिराजिषु'.

यतः—

वैकुण्ठेऽपि निरुत्कण्ठमकुण्ठविभवं महः ॥
तदत्र चित्रचारित्रं रमते रमया समम्[1] ॥ १९४ ॥

इति सानन्दं ध्यायति ।

कृ०—हन्त व्यपेतविषयान्तरव्यासङ्गं त्वदन्तरङ्गं देव एवास्मिन्ननुभवति दृढसङ्गम् ॥ ७५ ॥

वि०—सखे सत्यमेवोदितं[2] भवता ॥ ७६ ॥

दधती चिराय सुदतीमुरःस्थले तदतीतसीम ददती सुखं सताम् ॥
रसिकस्य चित्तमिह कस्य देवता प्रतिपन्नपन्नगनगा न गाहते॥१९५॥

कृ०—किमरे केवलमर्थपरममुं देवमनुसंधत्से ॥ ७७ ॥

---

कुत एतदित्यत आह—**वैकुण्ठे इति** । यत् अकुण्ठः लोकत्रयेऽपि प्रतिबन्धरहितः विभवः नित्यानन्दादिरूपं ऐश्वर्यं, दुष्टनिराकरण-सज्जनपालनादिरूपसामर्थ्यं वा यस्य, तत् महः वैष्णवं तेजः, वैकुण्ठेऽपि निरुत्कण्ठं आसक्तिरहितं सत्, अत्र शेषशैले चित्रं चारित्रं यस्य तथाभूतं च सत्, रमया लक्ष्म्या समं सहितं रमते क्रीडति ॥ १९४ ॥

**हन्तेति** । हन्तेत्याश्चर्ये । व्यपेतः निर्गतः विषयान्तरस्य एतद्देवताध्यानादन्यविषयस्य व्यासङ्गः विशिष्टग्रहो यस्य तत् त्वदन्तरङ्गं तव चित्तं, अस्मिन् देवे श्रीनिवासे एव दृढसङ्गं अत्यन्तासक्तिं अनुभवति ॥ ७५ ॥

अतीवानन्देनाह **विश्वावसुः—सखे इति** । हे सखे, भवता सत्यमेव उदितं कथितम् ॥ ७६ ॥

कुत इति चेत्तदाह—**दधतीति** । चिराय चिरकालं उरःस्थले वक्षःस्थले सुष्ठु शोभनाः दन्ताः यस्याः सा तां लक्ष्मीमित्यर्थः । “संख्या-सुपूर्वस्य” इत्यनुवर्तमाने “वयसि दन्तस्य दतृ” इति दत्रादेशः । “उगितश्च” इति ङीप् । दधती धारयित्री, तथा सतां साधूनां तत् प्रसिद्धं अतीता निर्गता सीमा मर्यादा यस्मात् तत् निरवधीत्यर्थः । सुखं ददती अर्पयित्री । अभ्यस्तत्वान्नुमभावः । सतामित्यत्र षष्ठी प्रामादिकी । संप्रदानत्वाच्चतुर्थ्या विधानात् । प्रतिपन्नः स्वीकृतः पन्नगनगः शेषशैलः यया सा देवता श्रीनिवासरूपा, इह कस्य रसिकस्य ब्रह्मस्मविदः । “रसो वै सः” इति श्रुतेर्ब्रह्मरसस्यैव मुख्यरसत्वम् । चित्तमन्तः करणं न तु सर्वस्यापि प्रविशतीत्यर्थः ॥ १९५ ॥

इदानीं कैश्चित् प्रतिश्रुताप्रदाने सा देवता कुप्यतीति

---

१ ‘सह’. २ ‘सत्यमेव विदितम्’.

इष्टप्राप्तिमनिष्टभङ्गमपि वा संप्रार्थ्य भक्त्या जनै-
र्यद्दातव्यमिति प्रतिश्रुतमभूद्द्रव्यं तदाप्ते फले ॥
ते दास्यन्ति न चेत्स्वयं भयमसावुत्पाद्य तेषां पुनः
कृत्स्नं सार्थहिरण्यहृत्पद इदं गृह्णाति वृद्ध्या समम् ॥ १९६ ॥

किंच—

तातेत्यामन्त्र्य कंचिद्वनभुवि तृषितस्तोयबिन्दून्ययाचे
कस्याप्युच्चैस्तटाकं खनत इह गिरौ हन्त मृद्भारमूहे ॥
दत्तां केनापि सूनावलिमधिमुकुटं मृन्मयीमेव दध्रे
सोऽयं भूयः श्रुतिज्ञैर्भुवनपतिरिति स्तूयते ध्यायते च ॥१९७॥

---

**किमरे इति** । अरे **विश्वावसो !** केवलमर्थपरं द्रव्यासक्तममुं देवं, एवं, पूर्वो-क्तप्रकारेण, किं कुतो हेतोरनुसंधत्से ध्यायसि ? ॥ ७७ ॥

अर्थपरत्वमेवाह—**इष्टप्राप्तिमिति** । जनैः सेवकलोकैः इष्टप्राप्तिं अनिष्टभङ्गं संक-टनाशं, वा समुच्चयार्थकः । तदुभयमपि संप्रार्थ्य, भक्त्या यत् द्रव्यं दातव्यं देयमिति प्रतिश्रुतं प्रतिज्ञातं अभूत्, अथ फले प्रार्थितप्राप्तिरूपे आप्ते प्राप्ते सति, तत् पूर्वप्र-तिज्ञातं ते जनाः स्वयं न दास्यन्ति नार्पयिष्यन्ति चेत्, असौ देवः तेषां जनानां भयं व्याधादिरूपं उत्पाद्य, तेभ्यः पुनः सार्थं यथार्थं हिरण्यं धनं, अथवा हिरण्यक-शिपुं, नामैकदेशे नामग्रहणात् । हरति गृह्णातीति तथाभूतं पदं वाचकः शब्दः यस्य तथाभूतः । पुनः इदं द्रव्यं वृद्ध्या अधमर्णदेयमूलाधिकद्रव्येण समं कृत्स्नं संपूर्णमपि गृह्णाति । दीनदयालोर्भगवत एतदनुचितमित्यर्थः ॥ १९६ ॥

किंच यद्ययं सर्वशक्तिमान् स्यात्तदेदमत्यन्तानुचितमित्याह—**ताततीति** । योऽयं वनभुवि अरण्यभूमौ तृषितः सन् कंचिदपि पुरुषं 'हे तात!' इति सकरुणमा-मन्त्र्य संबोध्य, तोयबिन्दून् उदककणान् ययाचे याचितवान् । तथा इह गिरौ शेषाचले, कस्यापि पुरुषस्य तटाकं खनतः सतः, उच्चैरतिमहान्तं, हन्तेति विषादे । मृद्भारं मृत्तिकासमूहं ऊहे धृतवान् । तथा केनाप्यज्ञातकुलगोत्रेण दत्तां समर्पितां मृन्मयीमेव मृत्तिकाप्रचुरामेव । प्राचुर्ये मयट् । सूनावलिं पुष्पमालां अधिमुकुटं मुकुटे इत्यर्थः । दध्रे धृतवान् । सः अयं भूयः वारंवारं श्रुतिज्ञैः वेदविद्भिः भुवनपतिरित्युक्त्वा स्तू-यते, ध्यायते चेत्यपि । एतस्मात्तु दारिद्र्यसादृश्यं प्रतीयते इति भावः । एतत्कथात्रि-तयमपि श्रीवेङ्कटाचलमाहात्म्यतोऽवगन्तव्यम् । अत्र वाच्यया निन्दया परमकारुणिक-त्व-भक्तवात्सल्यादिरूपस्तुतिप्रतीतेर्व्याजस्तुतिरलंकारः ॥ १९७ ॥

**वि०**—किमरे करुणानिधये वेङ्कटाचलपतयेऽप्यसूयसि ? शृणु तावत् ॥ ७८ ॥

नियन्ता जन्तूनां निखिलजगदुत्पाद[1]विभव-
प्रतिक्षेपैः क्रीडन् परमपुरुषः पन्नगनगे ॥
परत्वे सौलभ्यप्रकटनकृते वेङ्कटपतिः
कृपासिन्धुः कां कां ननु मनुजलीलां न तनुते ॥ १९८ ॥

किंच—

किमप्युपादाय दिशन्नभीष्टं कृत्स्नं जनेभ्यः पतिरञ्जनाद्रेः ॥
कृष्णावतारीयकुचैलसंपत्प्रदानरीतिं विवरीवरीति ॥ १९९ ॥

---

**किमिति** । अरे, करुणानिधये दयासागराय वेङ्कटाचलपतये श्रीशेषशैलाधिपतये श्रीनिवासायापि, असूयसि गुणेषु दोषानाविष्करोषि ? । "क्रुध-द्रुहेर्ष्या-" इत्यादिना चतुर्थी । शृणु तावत् वक्ष्यमाणमित्यर्थः ॥ ७८ ॥

**नियन्तेति** । जन्तूनां प्राणिनां नियन्ता अन्तर्यामित्वेन प्रेरयिता, निखिलस्य संपूर्णस्य जगतः उत्पादः उत्पत्तिः विभवः पालनं प्रतिक्षेपो लयस्तैः क्रीडन्, अत एव परमपुरुषः कृपासिन्धुः वेङ्कटपतिः श्रीनिवासः, स्वस्य परत्वे सर्वोत्कृष्टत्वे मनोवाचामगोचरत्वे वा सत्यपि, सौलभ्यस्य भक्त्या सुलभत्वस्य प्रकटनकृते प्रकटनार्थं, पन्नगनगे शेषशैले, कां कां मनुजलीलां मनुष्यचेष्टां न तनुते ननु न करोति ? अपि तु सर्वामपि करोत्येवेत्यर्थः ॥ १९८ ॥

'इष्टप्राप्तिमनिष्टभङ्गमपि—' इत्यादिनोक्तं दूषणं परिहरन्नाह—**किमपीति** । अयमञ्जनाद्रेः शेषशैलस्य पतिः जनेभ्यः भक्तलोकेभ्यः सकाशात्, किमपि स्वल्पं यत्किंचिदपि वस्तु उपादाय गृहीत्वा, तेभ्यः कृत्स्नं यावत्तैः प्रार्थितं तावत्सर्वं अभीष्टं इच्छितं दिशन् अर्पयन्, कृष्णावतारे भवा कृष्णावतारीया सा चासौ कुचैलसंपत्प्रदानरीतिश्च तां, कुचैलः सुदामा नाम ब्राह्मणः कृष्णस्य सखा आसीत् । तस्मै संपदर्पणस्य पद्धतिमित्यर्थः । तद्वृत्तं हि श्रीमद्भागवते उत्तरार्द्धे अशीत्येकाशीतितमाध्याययोः । तदित्थम्—कुचैलस्त्वतिदारिद्र्ययुक्तो भार्यया प्रार्थितश्च सन् मुष्टिमात्रपृथुकान् गृहीत्वा कृष्णसंदर्शनार्थं द्वारकां गतः, तत्र च कृष्णेनातीव सत्कृतः तस्माच्च पृथुकमुष्टिं गृहीत्वा महेन्द्रतुल्यमैश्वर्यं तस्मै समर्पितवान् इति । विस्तरस्तु भागवतादेवावगन्तव्यः । विवरीवरीति अत्यन्तं प्रकटयतीत्यर्थः । विपूर्वात् 'वृञ् वरणे' इत्यस्मात् यङ्लुकि लटि रूपम् ॥१९९॥

---

१ 'दुत्पत्ति'. २ 'इह'.

प्रियसहचरी लक्ष्मीः स्थानं सहस्रवसुः स्वयम्
कुवलयपतिः श्यालो रत्नाकरः श्वशुरो हरेः ।
तदपि हरति द्रव्यं पूर्णो जगत्पतिरेष यत्
तदिह भजतां कर्तुं नृणामुदग्रमनुग्रहम् ॥ २०० ॥

अखिलहेयप्रत्यनीकानन्तकल्याणगुणैकतानस्य विश्वनाथस्य[1] श्रीनिवासाभिधानस्य परब्रह्मणो गुणार्णवामृतकणानां गणनायाम[2]निपुणधिषणा धिषणादयोऽपि ॥ ७९ ॥

गाम्भीर्यैकावलम्बे गरिमनिवसतौ कान्तिकुल्यातटाके
कल्याणाम्भोजकल्ये निरवधिकरुणासारकल्लोलराशौ ॥

---

'तातेत्यामन्त्र्य-' इत्यादि दूषणं निराकरोति—**प्रियेत्यादि** । यस्य हरेः श्रीवेङ्कटाधिपतेः श्रीनिवासस्य प्रिया चासौ सहचरी च सा प्रियपत्नीत्यर्थः । स्वयं साक्षात् लक्ष्मीः, स्थानं निवासस्थलं च सहस्राणि वसवः धनानि किरणाश्च यस्य सः भगवान् सूर्यनारायण इत्यर्थः । "देवभेदेऽनले रश्मौ वसू रत्ने धने वसु" इत्यमरः । कुवलयानां कमलानां पतिश्चन्द्रश्च कु-वलयस्य भूमण्डलस्य पतिः सार्वभौम इति वा । श्यालः पत्नीभ्राता, रत्नाकरः समुद्रः श्वशुरः भार्यापिता । अस्तीति सर्वत्र योज्यम् । एवं पूर्णः सन्नपि अत एव जगतः पतिश्चायं अस्ति, तथापि एषः द्रव्यं भक्तप्रार्थितं हरतीति यत्, तत् इह लोके भजतां, नृणां मनुष्याणां उदग्रं महान्तमनुग्रहं कर्तुमेव । तदुक्तं श्रीमद्भागवते दशमस्कन्धपूर्वार्द्धे सप्तविंशेऽध्याये भगवता श्रीकृष्णेनेन्द्रं प्रति- "मामैश्वर्य-श्रीमदान्धो दण्डपाणिं न पश्यति । तं भ्रंशयामि संपद्भ्यो यस्य चेच्छाम्यनुग्रहम्" इति ॥ २०० ॥

**अखिलेति** । अखिलाः संपूर्णा ये हेयप्रत्यनीका दोषनाशका अनन्तकल्याणगुणास्तेषां एकतानस्य मुख्याधिष्ठानस्य, विश्वनाथस्य जगदधिपतेः श्रीनिवासाभिधानस्य श्रीनिवासनाम्नः परब्रह्मणः गुणार्णवस्य गुणसमुद्रस्य, अमृतकणानां सुधाबिन्दूनां गणनायां संख्याने विषये, धिषणो बृहस्पतिरादिर्येषां ते देवा ऋषयश्च । "बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः" इत्यमरः । अनिपुणधिषणाः अकुशलबुद्धयः बुद्धिसामर्थ्यहीना इत्यर्थः । भवन्तीति शेषः ॥ ७९ ॥

किंच—**गाम्भीर्येति** । गम्भीरस्य भावो गाम्भीर्यं प्रापञ्चिकसुखदुःखविकाररहित्यं तस्य एकावलम्बो मुख्याश्रयस्तस्मिन्, गरिम्णः गौरवस्य निवसतौ निवासस्थाने । कान्तिरूपा या कुल्या अल्पा नदी "कुल्याल्पा कृत्रिमा सरित्" इत्यमरः । तस्यास्तटाके सरोवरे आश्रये इति यावत् । भगवति हि सकलतेजसामाश्रयत्वं । "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ

---

१ 'विश्वनिदानस्य'. २ 'वर्णने'.

चातुर्यौदार्यलक्ष्मीविहरणशरणे सद्गुणौघान् बभूवे
देवे श्रीवेङ्कटेशे न जिगणयिषता केन वा ग्लानवाचा ॥ २०१ ॥



किंच—

समग्रा हि हरेर्वेदैः समग्राहि गुणावलिः ॥
प्रत्यक्षेऽपि परत्वेऽस्य प्रत्यक्षेपि च संशयः ॥ २०२ ॥

अहो महोन्नतस्याप्यस्य सौलभ्यं कनककुसुमस्य सौरभ्यमिव रसिकेभ्य एव स्वदते ॥ ८० ॥

---

तत्तेजो विद्धि मामकम् ॥ ” इति गीतावचनात् प्रसिद्धम् । कल्याणानि निःश्रेयसान्येव अम्भोजानि कमलानि तेषां कल्ये प्रातःकाले “प्रत्यूषोऽहर्मुखं कल्य उषः-प्रत्युषसी अपि ” इत्यमरः । निरवधिर्निःसीमो यः करुणासारः दयासारस्तस्य कल्लोलराशौ महोर्मिनिधौ समुद्रे इत्यर्थः । “ अथोर्मिषु । महत्सूल्लोल-कल्लोलौ ” इत्यमरः । चातुर्यं कर्मसु कौशलं च औदार्यं दातृत्वं च । उदारस्य भावः औदार्यमिति विग्रहः । “उदारो दातृ-महतोः” इत्यमरः । तयोर्लक्ष्म्याः समृद्धेः विहरणशरणं क्रीडागृहं तस्मिन्, देवे स्वप्रकाशे श्रीवेङ्कटेशे विषये, सतां प्रशस्तानां गुणानां ओघान् समूहान् । “ सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् । ” इत्यमरः । जिगणयिषता गणनां कर्तुमिच्छता । गणयतेः स्वार्थिकण्यन्ताच्चौरादिकात्सनि शतृप्रत्ययः । केन पुरुषेण ग्लानवाचा श्रान्तवचनेन न बभूवे । को वा पुरुषः श्रान्तवाङ् न बभूवेत्यर्थः । भवतेर्भावे लिट् । अत्र सर्वत्र ‘ गाम्भीर्यैकावलम्बे ’ इत्यादौ तादात्म्येन वर्णनाद्रूपकालंकारः । “ तद्रूपकमभेदो यः ” इत्यादितल्लक्षणात् ॥ २०१ ॥

**समग्रेति** । हरेः समग्रा हि सकलैव गुणानां आवलिः पङ्क्तिः वेदैः समग्राहि सम्यग्गृहीता । तथा अस्य प्रत्यक्षे दर्शने सति, परत्वे अप्रत्यक्षे विषये संशयोऽपि प्रत्यक्षेपि प्रतिक्षिप्तः निराकृत इति यावत् । अत्र पूर्वार्धे ग्रहेः उत्तरत्र च क्षिपेः कर्मणि लुङि “ चिण् भाव-कर्मणोः ” इति चिण् ॥ २०२ ॥

**अहो इति** । अहो इत्याश्चर्ये । महोन्नतस्य अतीवोच्चस्याप्यस्य वेङ्कटेश्वरस्य सौलभ्यं सुलभत्वं सुखेन प्राप्यत्वं, कनकवर्णस्य कुसुमस्य पुष्पस्य कनकमयपुष्पस्येति वा । सुरभेः सुगन्धेः भावः सौरभ्यं सुगन्धित्वं सुन्दरत्वं वा “ सुरभिर्हेम्नि चम्पके । जातीफले मातृभेदे रम्ये चैत्र-वसन्तयोः । सुगन्धौ ” इति हैमः । रसिकेभ्य एव स्वदते रोचते ॥ ८० ॥

---

१ ‘दधाने’, अयं पाठः अस्मत्संपादितादर्शपुस्तके उपलभ्यते, परं तस्मिन् अध्याहारकरणत्रासात् स नादृतः । २ ‘मौनभाजा’.

पश्य—

प्रचण्डविश्वकण्टकप्रखण्डनैकपण्डितः
पतङ्गमण्डले वसन् य एष पाण्डवप्रियः ॥
अकुण्ठरीतिकः प्रसन्नपुण्डरीकलोचनः
स कुण्डलीन्द्रभूधरप्रकाण्डमण्डनायते ॥ २०३ ॥

अवलोकय तावदुरगवरधरणीधरशिरोमणेश्चक्रपाणेरतितरसुकरवरनिकरवितरणकौशलमतिपेशलम् ॥ ८१ ॥

मूकारब्धं कमपि बधिराः श्लोकमाकर्णयन्ति
श्रद्धालुस्तं विलिखति कुणिः श्लाघया वीक्षतेऽन्धः ॥
अध्यारोहत्यहह सहसा पङ्गुरप्यद्रिशृङ्गम्
सान्द्रालस्याः शिशुभरणतो मन्दमन्दन्ति वन्ध्याः ॥ २०४ ॥

---

**प्रचण्डेति** । प्रकर्षेण चण्डा भयंकरा ये विश्वकण्टकाः कण्टक इव जगत्त्रासोत्पादकाः कंसादयस्तेषां प्रकर्षेण समूलं खण्डने एको मुख्यः पण्डितः कुशलबुद्धियुक्तः, अपि च पाण्डवप्रियः । एतद्विशेषणद्वयेन "परित्राणाय साधूनां—" इत्यादि भगवद्गीतोक्तं प्रतिज्ञावचनं स्मारितम् । यः एषः श्रीनारायणः पतङ्गमण्डले सूर्यबिम्बे "पतङ्गौ पक्षि–सूर्यौ च" इति, "बिम्बोऽस्त्री मण्डलं त्रिषु" इति चामरः । वसन् निवसतीत्यर्थः । अकुण्ठा निरन्तरं वर्तमाना रीतिः सत्परिपालनासद्दलनादिरूपा यस्य सः । प्रसन्ने विकसिते पुण्डरीके कमले इव लोचने नयने यस्य सः । स एव पूर्वोक्तः कुण्डलीन्द्रभूधरप्रकाण्डस्य प्रशस्तशेषशैलस्य "प्रशंसावचनैश्च" इति समासः । 'कुण्डलीन्द्र' इत्यादिपदस्योपसर्जनत्वात्पूर्वनिपातः । "मतल्लिका मचर्चिका प्रकाण्डमुद्ध-तल्लजौ । प्रशस्तवाचकानि" इत्यमरः । मण्डनायते भूषणवदाचरति । तत्र नित्यं निवसतीत्यर्थः । पञ्चचामरं वृत्तम् । "लघुर्गुरुर्निरन्तरं भजेत पञ्चचामरम्" इत्यादितल्लक्षणात् ॥ २०३ ॥

**अवलोकयेति** । उरगवरधरणीधरस्य श्रीशेषाचलस्य शिरोमणेः भूषणभूतस्य चक्रपाणेः श्रीविष्णोः, अतिपेशलं सुन्दरं अतितरसुकरं अतिशयसुलभं वरनिकराणां वरसमुदायानां वितरणस्य अर्पणस्य कौशलं चातुर्यं तावदलोकय पश्य ॥ ८१ ॥

वरार्पणकौशलमेवोपपादयति—**मूकारब्धमिति** । बधिराः कर्णरहिताः मूकैः अवाग्भिः वक्तृत्वशक्तिरहितैरिति यावत् । "अवाचि मूकः" इत्यमरः । आरब्धं पठितं कमपि ईश्वरगुणवर्णनपरं श्लोकं पद्यं "पद्ये यशसि च श्लोकः" इत्यमरः । आकर्णयन्ति शृण्वन्ति । तं च श्लोकं कुणिः छिन्नहस्तः श्रद्धालुः श्रद्धायुक्तः सन् "स्पृहि-गृहि-पति-दयि-निद्रा-तन्द्रा-" इत्यादिना आलुच् प्रत्ययः । विलिखति । अ-

---

१ 'रतितर'. २ 'सान्द्रालस्या शिशुभरणतो मन्दमायाति वन्ध्या'.

सर्वतः पर्वतमालोक्य सश्लाघम्—

सर्वोत्तुङ्गः श्रितशुभगुहः साध्वभिख्यातशीलो
भास्वद्वंशोपचयजनकः सानुजस्फूर्तिकोऽयम् ॥
एनं नूनं क्षितिभृतमियं जानती जानकीशम्
कीशश्रेणी कलय शरणीकुर्वती वर्वरीति ॥ २०५ ॥

पुनः सानन्दम्—

प्रकाशबहुपादवत्यपि फणिक्षमाभृत्यदः
प्रकाममवलोक्यते परममन्यदत्यद्भुतम् ॥

---

न्धो नेत्ररहितश्च श्लाघया प्रशंसया युक्तः, वीक्षते अवलोकयति । अहह इत्याश्चर्ये । पङ्गुः पादरहितोऽपि सहसा त्वरया अद्रिशृङ्गं पर्वतशिखरं अध्यारोहति । तथा वन्ध्याः स्त्रियस्तु शिशुभरणतः बालधारणतः पोषणतो वा, सान्द्रालस्याः अतिशयालस्ययुक्ताः सत्यः, मन्दमन्दन्ति अतिमन्दा भवन्ति । "सर्वप्रातिपादिकेभ्यः क्विब्वा वक्तव्यः" इति मन्दमन्दशब्दात् क्विपि रूपम् । मूकादयस्त्वीप्सितफलं संप्राप्यैवं कुर्वन्तीत्यर्थः । एतच्चरित्राणि श्रीवेङ्कटेश्वरमहात्म्यादिपुराणतोऽवगन्तव्यानि ॥ २०४ ॥

**सर्वत** इत्यादि सुलभम्—

**सर्वोत्तुङ्ग इति** । अयं शेषाचलः सर्वेभ्यः शैलेभ्यः पक्षे जनेभ्यः उत्तुङ्गः उन्नतः श्रेष्ठश्च, श्रिताः स्थिताः शुभा गुहाः कन्दराः, पक्षे श्रितः आश्रितः शुभगुहः एतन्नामा कश्चिन्निषादश्च येन सः, साधुषु मध्ये अभिख्यातं प्रसिद्धं शीलं सद्वृत्तं यस्य तथाभूतः, भास्वन्तः प्रकाशमानाः ये वंशाः वेणवस्तेषां उपचयजनकः वृद्ध्युत्पादकः, पक्षे भास्वतः सूर्यस्य वंशोपचयजनकः कुलविस्तारकरः, सानुभ्यः पर्वतशिखरेभ्यो जाता प्रथमोत्पन्ना स्फूर्तिः प्रकाशो यस्य, पक्षे अनुजानां लक्ष्मण-भरतादीनां स्फूर्त्या कान्त्या सहितः सानुजस्फूर्तिकः । अस्तीति शेषः । अत एव एनं क्षितिभृतं पर्वतं राजानं च नूनं निश्चयेन, जानकीशं सीतापतिं श्रीरामचन्द्रमेव जानती अवगच्छन्ती इयं कीशानां वानराणां श्रेणी पङ्क्तिः, शरणीकुर्वती रक्षकं गृहं वा कुर्वती सती, वर्वरीति भृशं पुनः पुनर्वा वृणोति वेष्टयतीति यावत् । 'वृञ् आवरणे' इत्यस्माद्यङ्लुकि रूपम् । कलय अवलोकय । अत्र 'सर्वोत्तुङ्ग' इत्यादिश्लिष्टसहेतुकविशेषणैः शैले श्रीरामसंभावनात् श्लेषविशिष्टोत्प्रेक्षालंकारः ॥ २०५ ॥

**प्रकाशेति** । प्रकाशाः दृश्याः बहवः पादाः प्रत्यन्तपर्वताः, समन्तात् स्थिताः

---

१ 'सर्वोत्तुङ्गश्रितशुभगुहं साध्वभिख्यातशीतं भास्वद्वंशोपचयजनकं सानुजस्फूर्तिकायम् ॥ एवं नूनं क्षितिभृतममुं', 'साध्वभिख्यातशीतो'. २ 'वंशोच्चयन'. ३ 'एवं'. ४ 'भृत्यतः'.

निजोरसि पयोधरश्चिरमचञ्चलां विद्युतम्
पयोधरमुरस्यसावपि विभर्त्ति नित्यं निजे ॥ २०६ ॥

## अथ वनवर्णनम् १६.

इति विमानं दक्षिणतः समानयन् सानन्दम्—

विलोकय सखे विपिनानाममीषां परमं रामणीयकम् ॥ ८२ ॥

पुरः पुरो घनं वनं वने वने महागिरि-
र्महागिरौ महागिरौ विराजते गुहागृहम् ॥
गुहागृहे गुहागृहे विहारतत्परो हरि-
र्हरौ हरौ निरङ्कुशः कृतेभसाध्वसो ध्वनिः ॥ २०७ ॥

स्वल्पपर्वता इत्यर्थः । "पादाः प्रत्यन्तपर्वताः" इत्यमरः । पक्षे चरणाश्च विद्यन्ते अस्येति तथाभूते, फणिक्ष्माभृति शेषशैले सर्पराजे च, अदः इदं वक्ष्यमाणं, अन्यत् वस्तुतो गुप्तचरणस्य सर्पराजस्य प्रकाशबहुपादवत्वादितरत्, परमं महत् अद्भुतं आश्चर्यं, प्रकामं यथेच्छं अवलोक्यते दृश्यते । अस्माभिरिति शेषः । तत्किमित्यपेक्षायामाह—पयोधरो मेघः निजोरसि स्वकीयवक्षःस्थले, चिरं अचञ्चलां स्थिरां विद्युतं बिभर्ति । मेघसदृशः श्यामवर्णो भगवान् वक्षसि नित्यं लक्ष्मीं बिभ्रदत्र निवसतीति वास्तवोऽर्थः । असावपि विद्युदपि निजे उरसि पयोधरं मेघं वस्तुतः स्तनयुग्मं नित्यं बिभर्ति । इदमेवाश्चर्यमिति भावः । श्लेषमूलकविरोधाभासालंकारः । सत्यार्थेन च तत्परिहारः ॥ २०६ ॥

अथ विचित्रवनवर्णनप्रस्तावार्थमाह—**इतीत्यादि** ।—

**विलोकयेति** । हे सखे अमीषां पुरो दृश्यमानानां विपिनानामरण्यानां "अटव्यरण्यं विपिनं" इत्यमरः । परमं रामणीयकं रमणीयत्वं मनोहरत्वमिति यावत् । मनोज्ञादित्वाद्वुञ् । अवलोकय पश्य ॥ ८२ ॥

रामणीयकमेवाह—**पुर इति** । पुरः पुरः अग्रे अग्रे घनं निबिडं वनं, विराजते शोभते । इदमेव क्रियापदं सर्वत्रान्वेतव्यम् । वने वने प्रतिवनं महागिरिः । वीप्सायां द्वित्वम् । एवमेव सर्वत्रोह्यम् । गुहा गृहमिवेत्युपमितसमासः । विहारे क्रीडायां तत्परः आसक्तः हरिः सिंहः । "विष्णु-सिंहांशु-वाजिषु । शुकाहि-कपि-भेकेषु हरिर्ना कपिले त्रिषु ।" इत्यमरः । निरङ्कुशः प्रतिबन्धरहितः, कृतमुत्पादितं इभानां गजानां साध्वसं भयं येन, तादृशः ध्वनिः गर्जनम् ॥ २०७ ॥

१ 'पयोधरे', 'पयोधरम्'.

**कु०**—किमरे वर्णयस्यचक्षुष्याणि मनुष्याङ्गकवलनचपलचण्डपुण्डरीकाननानि काननानि? ॥ ८३ ॥

इतस्तावद्ग्रावव्यतिकर इतः सन्त्यजगरा
इतो लुण्टाकानां समुदय इतः कण्टकचयः ॥
इतो व्याघ्रा उग्रा ज्वलनजनका वेणव इतो
वनं संलक्ष्यैतन्मन इदमहो मोहमयते ॥ २०८ ॥

**वि०**—सखे निपुणनिरूपणत एतेषां गुणानपि गृहाण ॥ ८४ ॥

अनायासग्राह्याण्यवनिपतिभोग्यान्यपि फला-
न्ययत्नेन प्राप्या नृपसुदृगपेक्ष्याः[1] सुमनसः ॥
असूर्यंपश्यान्यप्यहह सुलभान्यश्मभवना-
न्यरण्यानीभाजामतिषतति भाग्यं किल गिरः ॥ २०९ ॥

---

**किमिति**। अरे भो **विश्वावसो**, मनुष्याणां अङ्गानां अवयवानां कवलने ग्रसने चपलानि लोलुपानि अत एव चण्डानि भयंकराणि पुण्डरीकाणां व्याघ्राणां "व्याघ्रेऽपि पुण्डरीको ना" इत्यमरः। आननानि मुखानि येषु तानि। अत एवाचक्षुष्याणि अदर्शनीयानि, काननानि वनानि किं वर्णयसि? ॥ ८३ ॥

अदर्शनीयत्वमेवाह—**इत इति**। इतः एकस्मिन्स्थले, तावत्साकल्येन सर्वत्रेत्यर्थः। ग्राव्णां पाषाणानां व्यतिकरः समूहः, इतः अन्यत्र अजगराः सन्ति, इतः तदितरत्र लुण्टाकानां चोराणां समुदयः, इतः कण्टकानां चयः समुदायः, इतः तद्भिन्नस्थले, उग्रा भयंकरा व्याघ्राः, इतोऽन्यत्र ज्वलनजनकाः परस्परसंघर्षणेनाग्न्युत्पादकाः वेणवः कीचकाः, सन्तीत्यर्थः। एतदेव वचनविपरिणामेन यथायोग्यं सर्वत्र संयोजनीयम्। एवमेतद्वनं संलक्ष्य दृष्ट्वा, इदं मे मनः मोहं भयजन्यं भ्रमं, अयते प्राप्नोति ॥ २०८ ॥

**सख इति**। सखे हे मित्र, निपुणनिरूपणतः विचारयुक्तावलोकनं कृत्वेत्यर्थः। पञ्चम्यर्थे तसिल्। सा च ल्यब्लोपे। एतेषां वनानां गुणानपि गृहाण, नतु केवलान् दोषानेव ॥ ८४ ॥

तान् गुणानेवाह—**अनायासेति**। अवनिपतिभी राजभिर्भोक्तुं योग्यानि नतु साधारणैर्जनैः अपि, फलानि आम्र-दाडिमादीनि, अत्र वने अनायासेन अयत्नेन ग्राह्याणि भवन्ति। तथा नृपसुदृग्भिः राजपत्नीभिरपि अपेक्ष्याः ईप्सितव्याः, किमुतान्याभिः, सुमनसः मालती-मल्लिकादीनां पुष्पाणि "स्त्रियः सुमनसः पुष्पं" इत्यमरः। अयत्नेन प्राप्या लब्धुं शक्याः। तथा असूर्यंपश्यानि सूर्यं न पश्यन्तीति विग्रहः। असमर्थसमासोऽयम्। "असूर्य-ललाटयोः—" इत्यादिना खश्। "अरुर्द्विषद—" इत्यादिना च मुमागमः।

---

१ 'प्राप्यास्त्वपि सुदृगपेक्ष्याः'.

अपि च—

गहनगुहाविहारिहरिपाणिरुहाभिहत-
द्विरदशिरस्तटोद्गलितमौक्तिकसंहतिभिः ॥
अहह विभूषितैरिह चिरं विहरन्ति सुखं
सममबलाजनैरतिविलासपराः शबराः ॥ २१० ॥

---

## अथ घटिकाचलवर्णनम् १७.

इति व्योमयानं दक्षिणतः प्रापयन् पुरतो निर्दिश्य—

कण्ठोपरि कण्ठीरवशुचिदंष्ट्रारुचिविचित्रचन्द्रिकया ॥
स्फटिकाचल इव नयने घटिकाचल एष संप्रति धिनोति॥२११॥

---

अश्मनां पाषाणानां भवनानि गृहाणि सुलभानि यत्न विनैव लभ्यानि सन्ति । अहहे-त्यानन्दे । एवं सति अरण्यानीभाजां महारण्यसेविनां "इन्द्र-वरुण-भव-" इत्यादिसूत्रेणानुगागमः ङीप् च विधीयते । सच "हिमारण्ययोर्महत्त्वे" इति वार्तिकेन महत्त्व-विवक्षायामेव । "महारण्यमरण्यानी" इत्यमरश्च । भाग्यं दैवं गिरः वाणीः अतिपतति अतिक्रामति । वाण्या वर्णयितुमशक्यमिति भावः । किल निश्चयेन ॥ २०९ ॥

**गहनेति** । इह शेषाचले, गहनगुहासु वनस्थगुहासु, गहनेषु अरण्येषु गुहासु चेति वा । विहर्तुं क्रीडितुं शीलं येषां ते विहारिणः तादृशानां हरीणां सिंहानां पाणिरुहैः नखैः अभिहतानां विदारितानां द्विरदानां हस्तिनां शिरस्तटात् गण्डस्थलात् उद्गलि-तानि भूमौ निपतितानि यानि मौक्तिकानि तेषां संहतिभिः समूहैः, हारैरिति यावत् । विभूषितैरलंकृतैः अबलाजनैः स्त्रीजनैः समं सह, अतिविलासपराः भृशं क्रीडासक्ताः सन्तः, शबराः म्लेच्छविशेषाः सुखं यथा तथा, चिरं बहुकालं विहरन्ति क्रीडन्ति । अहहेत्यानन्दे । नर्दटकं वृत्तम् । "यदि भवतो नजौ भजजला गुरु नर्दटकम् " इति तल्लक्षणात् ॥ २१० ॥

अथ घटिकाचलवर्णनं प्रस्तौति—**इतीति** । निर्दिश्य अवलोक्य, सुगममन्यत् । **कण्ठोपरीति** । कण्ठस्य उपरि ऊर्ध्वभागे, कण्ठीरवस्य सिंहस्य "सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः । कण्ठीरवः " इत्यमरः । अर्थात् कण्ठपर्यन्तं मनुष्या-कारस्य तदुपरि च सिंहाकारस्येति ज्ञेयम् । शुचीनां शुभ्राणां दंष्ट्राणां स्थूलदन्तानां या रुचिः कान्तिः सैव विचित्रा आश्चर्यावहा चन्द्रिका ज्योत्स्ना तया स्फटिकाचल इव स्फटिकमणिमय पर्वत इव, एष दृश्यमानो घटिकाचलः नृसिंहनिवासः पर्वतः, [illegible] प्रीणयति ॥ २११ ॥

सभक्तिप्रकर्षमञ्जलिं बद्ध्वा—

वरकेतुस्थताक्ष्याय स्मरकेलिपुषे श्रियः ॥
नरकेक्षणविघ्नाय नरकेसरिणे नमः ॥ २१२ ॥

किंच—

स्थिरशङ्खादिचिह्नाय सुरसंघार्चिताङ्घ्रये ॥
परसंहारदक्षाय नरसिंहाय मङ्गलम् ॥ २१३ ॥

जम्भदम्भहरक्षेमारम्भलम्भनमूर्तये ॥
शंभुसंभावनीयाय स्तम्भडिम्भाय मङ्गलम् ॥ २१४ ॥

कु०—किमरे क्रोधमयेऽपि नरमृगेन्द्रे स्तववचनं विरचयसि? ॥८५

प्रह्लादमाह्लादयितुं तमेकं सर्वस्य कुर्वन् भुवनस्य भीतिम् ॥
सैंहं दधे संहननं पुरा यस्तव स्तवस्तत्र कथं प्रवृत्तः ? ॥ २१५ ॥

---

**वरेति** । वरे श्रेष्ठे केतौ ध्वजे तिष्ठतीति वरकेतुस्थः ताक्ष्यः गरुडः यस्य तस्मै, श्रियः लक्ष्म्याः स्मरकेलिपुषे मदनक्रीडावर्धनाय संभोगेच्छोत्पादकायेति यावत् । नरकस्य ईक्षणे अवलोकनेऽपि, किमुत गमने, विघ्नाय प्रतिबन्धरूपाय । तद्भक्तानां नरकदर्शनमपि नैव भवतीति भावः । नरकेसरिणे श्रीनृसिंहाय नमः अस्तु ॥ २१२ ॥

**स्थिरेति** । स्थिराणि सर्वदा सन्ति शङ्खादिचिह्नानि शङ्ख-चक्राद्यायुधानि यस्मिन् तस्मै, सुराणां देवानां संघैः समुदायैः आर्चितौ पूजितौ अङ्घ्री चरणौ यस्य तस्मै, परेषां शत्रूणां संहारे विनाशे दक्षश्चतुरः समर्थो वा तस्मै, नरसिंहाय मङ्गलम् । अस्त्विति शेषः ॥ २१३ ॥

**जम्भेति** । जम्भस्य एतन्नाम्नो दैत्यस्य दम्भं गर्वं हरतीति तद्धरः, अर्थाज्जम्भ-दैत्यविनाशकः इन्द्रः, तस्य क्षेमस्य, दैत्यहृतस्वर्गस्थानस्य पुनः प्रापणरूपस्य कल्याणस्य आरम्भाणां उद्योगानां लम्भनं संपादनं यस्यास्तादृशी मूर्तिर्यस्य तथाभूताय । हिरण्यकशिपुविनाशेन तद्धृतं स्वर्गसाम्राज्यं पुनरिन्द्राय समर्पितमिति भावः । शंभोः शिवस्यापि संभावनीयाय मान्याय, स्तम्भस्य डिम्भाय बालकाय, स्तम्भादुत्पन्नायेत्यर्थः । मङ्गलम् ॥ २१४ ॥

**किमिति** । अरे हे **विश्वावसो,** क्रोधमये कोपप्रचुरेऽपि, प्राचुर्ये मयट् । नर-मृगेन्द्रे नृसिंहे विषये, स्तववचनं स्तोत्रभाषणं, किं कुतो हेतोर्विरचयसि करोषि? ॥८५॥

**प्रह्लादमिति** । यः नृसिंहः तं प्रसिद्धभक्तं, एकमेव प्रह्लादं हिरण्यकशिपुपुत्रं आह्लादयितुं संतोषयितुं, सर्वस्य भुवनस्य लोकस्य भीतिं कुर्वन्नुत्पादयन् सन्, सैंहं सिंहसंबन्धि, संहननं शरीरं "गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ।" इत्यमरः ।

---

१ 'नरसिंहाय मङ्गलम्'. २ 'लम्भक'. ३ 'व्यधात्'.

**वि०**—वयस्य मैवं वादीः ॥ ८६ ॥

यतः—

अपुण्यधौरेयहिरण्यदूनत्रिलोकशोकक्षपणाय शौरिः ॥
कायाधवायासनिरासदम्भैः स्तम्भादिहोज्जृम्भत संभ्रमेण ॥ २१६ ॥

इदं चावधार्यताम्—

मनुष्यतिर्यक्त्वमुपेत्य नित्यो देवः स्वयं स्थावरतोऽभ्युदञ्चन् ॥
विचित्रशक्त्यन्वयमत्र वेदैः प्रत्याय्यमानं प्रकटीकरोति ॥ २१७ ॥

पुनः सविश्रम्भम्—

घटिकाचलं वपुरवेक्ष्य तत्त्वतो घटिकाचलं समधिरुह्य भक्तितः ॥
नरकेसरीन्द्रचरणौ विलोकयन् नरके सरिष्यति न जातु मानवः॥२१८॥

---

पुरा कृतयुगे दधे धृतवान् । तत्र तस्मिन्विषये, तव त्वत्कृत इत्यर्थः । स्तवः स्तुतिः, कथं प्रवृत्तः ? ॥ २१५ ॥

**वयस्ये**त्यादि सुलभम् ॥ ८६ ॥

**अपुण्येति** । न विद्यते पुण्यं सुकृतं येषु तेषां पापिनां धौरेयोऽग्रेसरः यः हिरण्यः हिरण्यकशिपुस्तेन दूनानां पीडितानां 'दु गतौ' इत्यस्मात् क्तप्रत्यये "दुग्वोर्दीर्घश्च" इति वार्तिकेन निष्ठातकारस्य नो दीर्घश्च । त्रिलोकानां शोकस्य क्षपणाय विनाशं कर्तुम् । "तुमर्थाच्च भाववचनात्" इति चतुर्थी । शौरिः विष्णुः, कयाधोः हिरण्यकशिपुपत्न्याः अपत्यं कायाधवः प्रह्लादः तस्य आयासस्य पितृकृतत्रासस्य निरासो विनाश एव दम्भो निमित्तं यस्य तथाभूतः सन्, इह लोके स्तम्भात् संभ्रमेण त्वरया अजृम्भत प्रकटीबभूव । एतेन 'सर्वस्य भुवनस्य भीतिं कुर्वन्' इत्यादिदूषणं परास्तमिति ज्ञेयम् ॥ २१६ ॥

**मनुष्येति** । यः नित्यः सर्वदैकरूपः सन्नपि, देवः भक्तपालनार्थं विविधक्रीडाकारकः, मनुष्यश्चासौ तिर्यङ्च मनुष्यतिर्यङ् तस्य भावः नरसिंहरूपत्वमित्यर्थः । उपेत्य स्वीकृत्य, स्थावरतः स्तम्भात् न त्वितरवन्मातृतः । अभ्युदञ्चन् प्रकटीभवन् सन्, वेदैः प्रत्याय्यमानं वर्ण्यमानं, विचित्रायाः इतरसुरदुष्करत्वेन अघटितघटनाकारित्वेन च आश्चर्योत्पादिकायाः शक्तेः सामर्थ्यस्य अन्वयं संबन्धं अत्र भूलोके प्रकटीकरोति आविष्करोति । वेदवर्णितं विविधं चरित्रं प्रत्यक्षतया प्रदर्शयतीत्यर्थः ॥२१७॥

अत एवास्य स्थानस्यातिशयपुण्यसंपादकत्वमस्तीति द्योतयन्नाह—**घटिकाचलमिति** । घटिकाचलं घटिकाकालमात्रमप्यस्थिरं, विनश्वरमित्यर्थः । वपुः शरीरं, तत्त्वतः स्वभावादेवावेक्ष्य दृष्ट्वा ज्ञात्वेत्यर्थः । दृशिरत्र ज्ञानार्थकः । भक्तितः

---

१ 'दम्भात् स्तम्भादिहाजृम्भत'. २ 'सद्यो'. ३ 'रवेत्य'.

## अथ वीक्षारण्यवर्णनम् १८.

इति विमानमन्यतः संचोदयन् सहर्षम्—

वीक्षारण्यमिदं वदन्ति सरसी हृत्तापनाशिन्यसा-
वस्या रोधसि वीरराघव इति प्रख्यातनामा हरिः ॥
व्यक्तं राजति वीतिहोत्र इव यो विस्तीर्णहेतिद्युतिः
क्षेत्रं प्राप्तकुशस्थलं[1] प्रभजति श्रीशालिहोत्राञ्चितम् ॥२१९॥

आकलयतु भवानत्रेमं चमत्कारम् ॥ ८७ ॥

द्विरेफवर्णां सुमनोरमां तनुं बिभर्ति संज्ञामिव वीरराघवः ॥
सुपर्वराजेन यदीयमर्चितं[2] मुखं पदद्वन्द्वमिवोपशोभते ॥ २२० ॥

---

घटिकाचलं पर्वतं अधिरुह्याऽऽरुह्य, नरकेसरीन्द्रचरणौ नरसिंहचरणौ, विलोकयन् विलोकयन् 'लक्षणहेत्वोः–' इति हेतावत्र शता । मानवः जातु कदाचिदपि, नरके निरये न सरिष्यति नैव पतिष्यति । 'सृ गतौ' इत्यस्माल्लृट् ॥ २१८ ॥

अथ वीक्षारण्यप्रस्तावमाह—**इतीति** । संचोदयन् गमयन्—

**वीक्षारण्यमिति** । इदं पुरो दृश्यमानं वीक्षारण्यमेतन्नामकं वनं, वदन्ति कथयन्ति । जना इति शेषः । तथा असौ सरसी सरोवरं एतद्वनमध्ये वर्तमानेत्यर्थः । हृत्तापनाशिनी हृदयसंतापहारिणी विद्यते । अस्याः सरस्याः रोधसि तीरे, "कूलं रोधश्च तीरं च" इत्यमरः । वीरराघवः इति प्रख्यातं अतिपावनत्वेन प्रसिद्धं नाम यस्य तथाभूतः, व्यक्तं प्रत्यक्षं यथा तथा यः, विस्तीर्णा आसमन्तात् प्रसृता हेतीनां शङ्ख-चक्राद्यायुधानां शिखानां च द्युतिः कान्तिर्यस्य तथाभूतः, "रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः" इत्यमरः । वीतिहोत्र इव अग्निरिव "अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनंजयः ।" इत्यमरः । राजति शोभते । पुनश्च यो वीरराघवः, प्राप्तं कुशानां स्थलं स्थानं येन तत्, अत एव श्रीशालिहोत्रमुनिना अञ्चितमाश्रितं क्षेत्रं स्थानं प्रभजति सेवते । तत्र तिष्ठतीत्यर्थः ॥ २१९ ॥

**आकलयत्विति** । अत्र वीक्षारण्ये, इमं पुरोदृश्यमानं चमत्कारं भवान् आकलयतु अवलोकयतु ॥ ८७ ॥

**द्विरेफेति** । वीरराघवो भगवान्, द्विरेफस्य भ्रमरस्येव वर्णो यस्याः सा तां श्यामवर्णामित्यर्थः । पक्षे द्वौ रेफवर्णौ रकाराक्षरे यस्यां तां, "द्विरेफ-पुष्पलिड्-भृङ्ग-षट्पद-भ्रमरालयः" इति, "रवर्णे पुंसि रेफः स्यात्" इति चोभयत्राप्यमरः । सुमनस्सु सदाचरणेन शुद्धचित्तेषु, सुमनस्सु पुष्पेषु च रमते क्रीडति तां सुमनोरमां, "स्त्रियः सुमनसः पुष्पं" इत्यमरः । अत एव संज्ञां 'वीरराघव' इति नामेव "संज्ञा-

---

१ 'कुशस्थली'. २ 'मर्चितं'.

कृ०—वयस्य किं सन्नह्यसि वीरराघवस्तवने[1]? यदस्मिन्नपि पन्नगनगनाथ इव परधनग्रहणपरत्वादयः प्रादुःष्यन्ति दोषाः ॥ ८८ ॥

वि०—तत्रास्मदुक्तेनैव तत्समाधानेन पुनरत्रापि संतोष्टव्यमायुष्मता भवता। पामरमते रमते न कस्य मनो वीरराघवे देवे? ॥ ८९ ॥

स्वेक्षा[2]साध्यजगज्जनिः सुतनुपल्लाक्षाङ्कितोरःस्थलः
साक्षादेषः[3] परः पुमान् कृतनुतिर्दाक्षायणीशादिभिः ॥
वीक्षारण्यपतिर्विराजति गतिर्द्राक्षासदृक्साहिती
धी-क्षान्त्यायुररोगता-धन-यशो-मोक्षाद्यपेक्षावताम् ॥ २२१ ॥

---

स्याच्चेतना नाम" इत्यमरः। तनुं शरीरं बिभर्ति। किंच यदीयं मुखं यदीयं पदद्वन्द्वमिव सुपर्वराजेन सुष्ठु पर्वणि पूर्णिमायां राजते तेन चन्द्रेण, सुपर्वणां देवानां राज्ञा इन्द्रेण चेति क्रमेणोभयत्र योज्यम्। अर्चितं पूजितं एकपदोपात्ततयाऽभेदाध्यवसायेन सुपर्वराजार्चितत्वस्य साधारणधर्मता बोध्या। उपशोभते ॥ २२० ॥

**वयस्येति**। हे वयस्य मित्र, वीरराघवस्तवने विषये, किं कुतो हेतोः संनह्यसि उद्युक्तो भवसि? यत् यतः अस्मिन् वीरराघवेऽपि, पन्नगनगस्य शेषशैलस्य नाथः श्रीनिवासः तदिव परधनग्रहणे परत्वं आसक्तत्वं तदादयः दोषाः प्रादुःष्यन्ति उद्भविष्यन्ति ॥ ८८ ॥

**तत्रेति**। तत्र दोषप्रादुर्भावे, अस्मदुक्तेनैव पूर्वं मया कथितेनैव तत्समाधानेन शेषाचलाधिपतिसमाधानेन, पुनरत्रापि संतोष्टव्यमायुष्मता भवता। पामरमते हे क्षुद्रबुद्धे, वीरराघवे देवे, कस्य पुरुषस्य मनः न रमते आसक्तं न भवति? अपि तु सर्वस्यापि रमते इत्यर्थः ॥ ८९ ॥

**स्वेक्षेति**। स्वस्य ईक्षया पर्यालोचनेन साध्या कर्तुं शक्या जगतो जनिः सृष्टिर्यस्य सः। एतेन "स ऐक्षत लोकान्नु सृजा इति" इत्याद्यैतरेयोपनिषच्छ्रुतिः स्मारिता। अत्र 'जगज्जनिः' इत्युक्तिरुपलक्षणपरा। तेन स्थिति-संहारावपि ज्ञेयौ। सुतनोः लक्ष्म्याः पल्लाक्षया पदसंबन्धिलाक्षारसेन अङ्कितं चिह्नितं उरःस्थलं वक्षःस्थलं यस्य सः। सर्वदा लक्ष्म्यास्तत्र विद्यमानत्वादित्यर्थः। किंच साक्षात् परः शरीर-वाङ्मनो-बुद्ध्यहंकारादिसंघातेभ्यः परः पुमान्, अत एव दाक्षायणीशः पार्वतीपतिः शिवः आदिः प्रमुखो येषु, तैर्ब्रह्मेन्द्रादिभिः कृता नुतिः स्तुतिर्यस्य तथाभूतः। धीः बुद्धिश्च क्षान्तिः क्षमा च आयुर्जीवनकालश्च अरोगता आरोग्यं च धनं च यशश्च मोक्षश्च ते आदयो येषु तेषु अपेक्षावतामिच्छावतां द्राक्षया सदृशी सुखसेव्यतयेति भावः। साहिती साहित्यमाराधनमिति यावत्, यस्याः तादृशी गतिरुपायः। अल्पमाराधितोऽपि सकलाभीष्टपूरक इत्यर्थः। वीक्षारण्यपतिर्वीरराघवाख्यः, विराजति शोभते ॥ २२१ ॥

---

१ 'वीरराघवे देवे स्तवनं विरचयितुं'. २ 'स्वेच्छा'. ३ 'देव'.

किंच—

उपेत्य वीक्षावनमुन्नतः सदा सुवर्णवल्ल्या सुमनःपुषाश्रितः ॥
अहीनसेव्यो हरिचन्दनस्तनोत्युपाश्रितानामुचितां सुवासनाम् ॥ २२२ ॥

---

## अथ श्रीरामानुजवर्णनम् १९.

इत्यन्यतो विमानं प्रेङ्खयन्नग्रतो वीक्ष्य सप्रत्यभिज्ञम्—

एषा भूतपुरी निरीक्षितचरी दोषापहन्त्री मया[1]
श्रीमानत्र गुणाब्धिराविरभवद्रामानुजार्यो[2] मुनिः ॥
त्र्यय्न्तामृतसिन्धुमन्थनभवद्धय्यंगवीनात्मकम्
विज्ञानं यदुपज्ञमेव विदुषामद्यापि विद्योतते ॥ २२३ ॥

---

**उपेत्येति** । सुष्ठु मनांसि येषां ते सुमनसः पण्डितास्तान्, सुमनसः पुष्पाणि च पुष्णातीति तथा तया, अत एव सुष्ठु वर्णो यस्यास्तया वल्ल्या मल्लिकादिपुष्पवल्ल्येति यावत् । पक्षे सुवर्णस्य वल्लीव वल्ली तया लक्ष्म्या आश्रितः सदा आलिङ्गितः, अहीनां सर्पाणां इनाः श्रेष्ठा महासर्पा इत्यर्थः । अहीनः सर्पस्वामी शेषश्च तेन, न हीना अहीनाः श्रेष्ठजनास्तैश्च सेव्यः सेवितुं योग्यः, हरिः श्रीविष्णुरेव चन्दनः, हरिचन्दनो वृक्षश्च वीक्षावनं उपेत्य संप्राप्य, उन्नतः उच्चः श्रेष्ठश्च सन्, उपाश्रितानां भक्तानां उचितां योग्यां, सुवासनां मनोऽभिलषितं तनोति विस्तारयति ॥ २२२ ॥

**इतीति** । अन्यतो विमानं प्रेङ्खयन् गमयन्, सप्रत्यभिज्ञं सानुस्मरणम्—

**एषेति** । एषा पुरो दृश्यमाना, दोषाणां अपहन्त्री विनाशयित्री भूतपुरी 'श्री-पेरूम्बुरू' इति प्रसिद्धा, मया निरीक्षितचरी पूर्वं अवलोकिता । "भूतपूर्वे चरट्" इति चरट् प्रत्ययः । टित्त्वान्ङीप् । अत्र भूतपुर्यां, गुणानां अब्धिः सागरः श्रीमान् रामानुजार्यो मुनिः, आविरभवत् प्रकटीबभूव । कीदृशः स रामानुजार्यः । त्र्यय्न्ता उपनिषद्विद्याः एव अमृतसिन्धुः क्षीरसागरः तस्य मन्थनेन विलोडनेन भवदुत्पद्यमानं यत् हय्यंगवीनं नवनीतं आत्मा स्वरूपं यस्य तत्तदात्मकम् । सर्वोपनिषदां सारभूतमिति तात्पर्यम् । विज्ञानं विशिष्टाद्वैतप्रतिपादकं शारीरकभाष्यं, यस्य रामानुजार्यस्य उपज्ञा आद्यज्ञानविषयः यदुपज्ञं 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इति नपुंसकत्वम् । रामानुजार्येणैव प्रथमं निर्मितमित्यर्थः । "उपज्ञा ज्ञानमाद्यं स्यात्" इत्यमरः । विदुषां पण्डितानां मध्ये, अद्यापि विद्योतते प्रकाशते ॥ २२३ ॥

---

१ 'नृणां'.  २ 'रामानुजाख्यो'.

किंच—

कामादिवैरिगणभीमानवद्यनिजनामाभिलाषगरिमा[1]
वैमानिकार्यसमभूमा मतौ[2] वचनसीमातिलङ्घिमहिमा ॥
श्रीमाननूनकलसोमाननो विमलधामावमानितरविः
क्षेमाणि जृम्भयतु भूमावमुत्र च स रामानुजो यतिपतिः॥२२४॥

अपि च—

स जयति रामानुजयतिरजयति परवादिनं यदीयोक्तिः ॥
संजयति बोधमनघं रञ्जयति बुधान् व्यथां च भञ्जयति ॥ २२५ ॥

अन्यच्च—

ते मीमांसाशास्त्रप्रमथनपरिकलितबुधजनानन्दाः ॥
लक्ष्मणमुनेः प्रबन्धा लक्ष्मणपूर्वजशरा इव जयन्ति ॥ २२६ ॥

---

**कामादीति** । कामः आदिः प्रथमो येषु क्रोध-लोभादिषु तेषां वैरिणां अन्तः-शत्रूणां गणस्य समुदायस्य भीमः भयंकरः अनवद्यः निर्दोषः निजस्य स्वकीयस्य नाम्नः अभिलाषगरिमा इच्छाप्रभावः यस्य सः । यस्य नामग्रहणस्येच्छामात्रेणापि कामादीनां विनाशो भवति, किमुत प्रत्यक्षनामग्रहणे कृते इति तात्पर्यम् । तथा मतौ बुद्धौ विषये वैमानिकानां देवानामार्यः गुरुः बृहस्पतिः तेन समस्तुल्यः भूमा माहात्म्यं यस्य सः, अनूनाः संपूर्णाः कला यस्य तस्य सोमस्य चन्द्रस्येवाननं मुखं यस्य सः, किंच विमलधाम्ना स्वकीयनिर्मलप्रकाशेन अवमानितस्तिरस्कृतः रविः सूर्यो येन तथाभूतः, अत एव वचनानां सीमा मर्यादा तस्याः अतिलङ्घी उल्लङ्घनशीलः महिमा माहात्म्यं यस्य सः श्रीमान् रामानुजो यतिपतिः, भूमौ भूलोके, अमुत्र पर-लोके च क्षेमाणि कल्याणानि जृम्भयतु वर्धयतु । सर्वजनानामिति शेषः । अश्वधाटी वृत्तम् । (?) अस्य लक्षणं वृत्तरत्नाकरे नैवोपलभ्यते । चित्रवृत्तेष्वस्यान्तर्भावः॥ २२४ ॥

**स इति** । स रामानुजयतिर्जयति सर्वोत्कर्षेण वर्तते । कथंभूतः सः । यदीया यस्य संबन्धिनी उक्तिः भाष्यरूपा, परवादिनं मतान्तरस्थवादिनं अजयति क्षेप-यति तिरस्करोतीति यावत् । 'अज गति-क्षेपणयोः' इत्यस्य ण्यन्तस्य रूपम् । अथवा अजमिव छागमिव तुच्छीकरोति । एतत्पक्षे अजशब्दात् 'तत्करोति' इति णिच् । न केवलं तिरस्करोत्येव, किंतु अनघं निर्मलं बोधं ज्ञानं च संजयति उत्पादयति । बुधान् पण्डितांश्च रञ्जयति रमयति । तेषां व्यथां दुःखं च भञ्जयति विनाशयति ॥ २२५ ॥

**ते इति** । मीमांसाशास्त्रस्य प्रमथनेन आलोडनेन सर्वशास्त्रपर्यालोचनेनेति या-वत् । पक्षे ते अमी मांसाशानां राक्षसानां अस्त्राणां शस्त्राणां प्रमथनेन विनाशनेन च परिकलितः उत्पादितः बुधजनानां पण्डितजनानां देवसमूहानां च आनन्दो यैस्ते,

---

१ 'अभिलापगरिमा'. २ 'अवनौ'.

अत्र कश्चिदपश्चिमो विपश्चितामित्थमेनमनुदिनं प्रणमति ॥ ९० ॥
'रामानुजाय गुरवे नरवेषभाजे शेषाय धूतकलये कलये प्रणामान् ॥
यो मादृशानपि कृशान् परिपातुकामो भूमाववातरदुदञ्चितबोधभूमा' २२७
इति । एतच्चाकर्ण्यताम्—

रामानुजौ यामुनतीर्थसेवापरावुदीतौ नरकं निरोद्धुम् ।
तयोः पुराणः प्रणिनाय गीतां तस्या नवीनस्तु ततान टीकाम् २२८

**कृशानुः**—सत्यमेवं तथापि तत्पथानुविधायिनां[1] मेधाविनामपि परावमन्तृत्वादयो दोषाः प्रसिद्धाः ॥ ९१ ॥ तथाहि—

---

लक्ष्मणमुनेः रामानुजयतेः प्रबन्धाः ग्रन्थाः, लक्ष्मणस्य पूर्वजो रामस्तस्य शराः बाणाः इव, जयन्ति ॥ २२६ ॥

**अत्रेति** । अत्रास्मिन् देशे कश्चित् विपश्चितां विदुषां मध्ये, अपश्चिमः अत्युत्तमः एनं श्रीरामानुजाचार्यं, अनुदिनं प्रतिदिनं इत्थं वक्ष्यमाणप्रकारेण, प्रणमति नमस्करोति ॥ ९० ॥

**रामानुजायेति** । नरवेषं मनुष्यस्वरूपं भजति आश्रयतीति नरवेषभाक् तस्मै, शेषाय सर्पराजाय, रामानुजाय, धूतः निरस्तः कलिः पापं येन तस्मै, पापरहितायेत्यर्थः । अत एव गुरवे आचार्याय प्रणामान् नमस्कारान् कलये करोमि । यः मादृशान् कृशान् अतिदीनानपि परिपातुकामः रक्षितुमिच्छुः सन्, उदञ्चितः स्वभावत एवोत्पन्नः बोधभूमा ज्ञानातिरेको यस्य सः, भूमौ अवातरत् प्रकटीबभूव ॥ २२७ ॥

**रामेति** । यमुनैव यामुनं, स्वार्थेऽण् । यामुनं च तत्तीर्थं च तस्य, पक्षे यामुनतीर्थस्य गुरोश्च सेवापरौ सेवासक्तौ, नरकं एतन्नामकमसुरं दुर्गतिं च निरोद्धुं निवारयितुं, रामस्य बलरामस्य अनुजः कृष्णः, रामानुजाचार्यश्च, रामानुजश्च, रामानुजश्च तौ इत्येकशेषसमासः । उदीतौ उत्पन्नौ । दीर्घत्वं छन्दोऽनुरोधात् । तयोः द्वयो रामानुजयोर्मध्ये पुराणः प्रथमः कृष्णः गीतां भगवद्गीतां प्रणिनाय विरचितवान् । नवीनो रामानुजाचार्यस्तु, तस्या गीतायाः टीकां व्याख्यां ततान चकार ॥ २२८ ॥

**सत्यमिति** । सत्यमेवं तथापि तस्य रामानुजाचार्यस्य पन्थानं प्रवृत्तिं अनुविदधति अनुसरन्तीत्यनुविधायिनः तेषां बुद्धिमतामपि, परेषां भिन्नमतानुयायिनां अवमन्तृत्वं अपमानः आदिर्येषां मात्सर्यादीनां ते दोषाः प्रसिद्धाः । सन्तीति शेषः ॥ ९१ ॥

---

१ 'पथानुधाविनाम्'.

श्रीरामानुजदर्शनैकरसिकः शिष्टः प्रकृष्टैर्गुणैः
पूर्णानां विदुषां मतान्तरजुषां पङ्क्तौ न भुङ्क्ते क्वचित् ॥
हाहन्तौदनमन्ततः शुचितमं तद्दृष्टमाशु त्यज-
त्यास्तां तत्स्वमतस्थितैरपि समं प्रायेण नाश्नात्यसौ ॥ २२९ ॥

किंच—

नैषां न्याय्य इह द्विजान्वयजुषां भाषाप्रबन्धे[1] श्रमो
वेदे विश्वपुमर्थसाधनविधौ बद्धादरे[2] जाग्रति ॥
तीरं क्षीरपयोनिधेरुपगतो दैत्यारिदीप्त्यावृतम्
को वा धावति दुग्धलब्धिचपलो गोपालकस्यालयम्॥२३०॥

किंच—

एतन्मतानुवर्तिनां केषांचिदेषां चेष्टा नेष्टा वैदिकानाम्। पश्य ॥९२॥

---

तानेव दोषान् दर्शयति—**श्रीरामानुजेति**। श्रीरामानुजस्य दर्शने एव एकं मुख्यं यथा तथा रसिकः रसज्ञः, प्रकृष्टैः विद्वत्त्वाचारसंपन्नत्वादिभिरुत्तमैर्गुणैः शिष्टः श्रेष्ठश्च सन्, मतान्तरजुषां शांकराद्यन्यमतानुयायिनां पूर्णानां विद्याचरणादिभिः परिपूर्णानामपि, किमुतापूर्णानाम्। पङ्क्तौ भोजनपङ्क्तौ क्वचित् कदाचिदपि न भुङ्क्ते भोजनं नैव करोति। किंच नैतावदेव, अन्यदपि मात्सर्यं कथयति। अन्ततो वस्तुतः शुचितममतिपवित्रमपि ओदनमन्नं तैर्दृष्टं मतान्तरस्थैरवलोकितं सत्, आशु शीघ्रमेव त्यजति। तत्तु आस्तां नाम, किंतु स्वमतस्थितैरपि समं सह असौ रामानुजीयः प्रायेण न अश्नाति नैव भुङ्क्ते। कदाचित्तु भुङ्क्ते ॥ २२९ ॥

**नैषामिति**। एषां रामानुजीयानां द्विजान्वयं ब्राह्मणवंशं जुषन्ति आश्रयन्ति तेषां ब्राह्मणकुलोत्पन्नानामिति यावत्। विश्वेषां सकलानां पुमर्थानां धर्मादिपुरुषार्थानां साधनविधौ संपादनकर्मणि, बद्धादरे स्वीकृतादरे वेदे जाग्रति सति, भाषाप्रबन्धे द्राविडभाषानिर्मिते ग्रन्थे श्रमः अभ्यासः इह न न्याय्यः नैव युक्तः। तत्र दृष्टान्तमाह—**तीरमिति**। दैत्यारेः श्रीविष्णोः दीप्त्या कान्त्या आवृतं वेष्टितं क्षीरपयोनिधेः क्षीरसमुद्रस्य तीरं उपगतः प्राप्तः सन्, को वा पुरुषः दुग्धस्य लब्धौ प्राप्तौ चपलः आसक्तः गोपालकस्य नीचगोपालस्य, अल्पार्थे कन्। आलयं गृहं धावति शीघ्रं गच्छति? अपि तु कोपि नैव गच्छतीत्यर्थः ॥ २३० ॥

**एतदिति**। एतन्मतानुवर्तिनां रामानुजमतानुसारिणां केषांचिदेषां पुरुषाणां, अविदुषामित्यर्थः। चेष्टा आचरणं वैदिकानां वेदानुयायिनां नेष्टा न प्रिया ॥ ९२ ॥

---

१ 'प्रबन्धश्रमो'. २ 'बद्धादरो'.

मुञ्चन्तः पञ्चयज्ञान् द्रविडभणितिभिर्मोहयन्तोऽनभिज्ञान्
निन्दन्तो हन्त यज्ञानसकृदपि हरेर्वन्दनं वारयन्तः ॥
लुम्पन्तः श्राद्धचर्यां यतिमपि गृहिणां वन्दनं कारयन्तः
सद्वेषं धारयन्तः कतिचिदविहितैरेवं कालं क्षिपन्ति ॥ २३१ ॥

**किंच—**

घण्टाघोषं त्यजन्तो हरिपरिचरणे सर्वलोकाविगीतम्
ख्यातं त्रैलोक्यमातुः श्रुतिभिरभिहितं वैभवं खण्डयन्तः ॥
संकेतश्रद्धयैव स्वचरणसलिलं स्वीयगोष्ठ्यां पिबन्तः
केचिद्विप्लावयन्ते जगदभिदधतः केशवं दोषभोग्यम् ॥ २३२ ॥

---

**मुञ्चन्त इति** । पञ्चयज्ञान् ब्रह्मयज्ञ-वैश्वदेव-भूतयज्ञातिथिपूजा-बलिहरणात्मकान् मुञ्चन्तस्त्यजन्तः, त्यजन्तीत्यर्थः । एवमेव सर्वत्र शत्रन्तस्यार्थो ज्ञेयः । द्रविडभणितिभिः द्रविडभाषावाक्यैः अनभिज्ञान् वेद-शास्त्रादिज्ञानरहितान् मोहयन्तः स्वमतग्रहणे भ्रामयन्तः, हन्तेति खेदे । यज्ञान् अग्निष्टोमादीन् निन्दन्तः काम्या इति मत्वा निन्दां कुर्वन्तः, हरेः श्रीविष्णोरपि वन्दनं असकृत् वारं वारं वारयन्तः निषेधयन्तः, श्राद्धचर्यां श्राद्धानुष्ठानं लुम्पन्तः अकुर्वन्तः, यतिं स्वसंन्यासिनमपि, किमुत इतरं, गृहिणां गृहस्थाश्रमिणां वन्दनं कारयन्तः, सत्सु सत्पुरुषेषु द्वेषं अप्रीतिं धारयन्तः । एवं कतिचित् रामानुजीयाः अविहितैः वेद-शास्त्रनिषिद्धैः कर्मभिरेव कालं क्षिपन्ति नयन्ति ॥ २३१ ॥

किंच पूजादिष्वपि विधिवदनुष्ठानं नैव भवतीत्याह—**घण्टाघोषमिति** । सर्वेषु लोकेषु अविगीतमनिन्दितं प्रशस्तमित्यर्थः । हरिपरिचरणे श्रीविष्णुपूजने घण्टाघोषं देवताह्वानार्थं विहितं घण्टानादं त्यजन्तः, त्रैलोक्यमातुः श्रीलक्ष्म्याः श्रुतिभिः "सा हि श्रीरमृता सताम्" इत्याद्यनेकाभिः अभिहितमुक्तं ख्यातं प्रसिद्धं वैभवं स्वातन्त्र्यरूपं खण्डयन्तः, लक्ष्मीस्तावद्भगवतो मायेत्युक्त्वा दूषयन्तः, किंच स्वीयानां रामानुजीयानां गोष्ठ्यां सभायां, संकेते स्वकल्पितविधौ या श्रद्धा विश्वासस्तयैव स्वचरणसलिलं स्वपादोदकं सर्वेषामप्येकीकृत्य पिबन्तः, आशयन्तः । एतदेव तेषां मतस्य सर्वस्वम् । केचित् केशवं श्रीविष्णुं दोषभोग्यं नियामकतया कृतानां दोषाणां भोक्तारं अभिदधतः कथयन्तः सन्तः, जगत् विप्लावयन्ते अधर्मप्रचारेण विनाशप्रवणं कुर्वन्तीत्यर्थः ॥ २३२ ॥

---

१ 'तैः संक्षिपन्त्येव कालम्'.

अपि च—

यज्ञाः पञ्च महत्पदेन सहिता ये चापरे विश्रुता
यत्कर्म ग्रहसंक्रमादिसमये सर्वे बुधाः कुर्वते ॥
यत्सर्वं विसृजन्ति काम्यमिति ये त्र्य्यन्तविध्वंसका-
स्तैर्द्वे नित्यतयाऽऽश्रिते यदशनं या च व्यवायक्रिया ॥२३३॥

अन्यच्च—

विदुषामपि मोहमावहन्तो वितथैतिह्यसहस्रवर्णनेन ॥
विनयाभिनयात्खलाः किलाऽमी विजयन्ते कपटालया जगन्ति २३४

किंच—

यस्यां नास्ति पुरस्कृतिर्नयविदां यज्वा तु हासास्पदम्
पूज्यन्ते च निरक्षराः पुनरमी सांकेतिकाचार्यकाः ॥

---

**यज्ञा इति ।** ये पञ्च यज्ञाः ब्रह्मयज्ञादयः महत् इति पदेन सहिताः महायज्ञा इत्यर्थः । ये त्वपरे यज्ञाः ज्योतिष्टोमादयः विश्रुताः प्रसिद्धाः, इदं पूर्वत्रापि योज्यम् । चस्त्वर्थः । सर्वे बुधाः श्रुति-स्मृतिज्ञाः, ग्रहः चन्द्र-सूर्योपरागः, "उपरागो ग्रहो राहु-ग्रस्ते त्विन्दौ च पूष्णि च" इत्यमरः । संक्रमः रवेर्मेषादिषु प्रवेशः तदादौ समये यत्कर्म देव-पित्राद्युद्देशेन कुर्वते तत्सर्वं नित्यं नैमित्तिकं च कर्म काम्यं, कामहेतुकमिति अप-लप्येति शेषः । ये त्र्य्यन्तस्य वेदान्तमार्गस्यापि विध्वंसकाः सन्तः, अमी विसृजन्ति मुञ्चन्ति । तैर्दूषकैः, अशनं भोजनं यत्, याच व्यवायक्रिया मैथुनं ते द्वे कर्मणी नित्यतया नित्यकर्तृत्वेन आश्रिते अङ्गीकृते । शिश्नोदरमात्रपरायणा एत इत्यर्थः ॥ २३३ ॥

**विदुषामिति ।** वितथानामसत्यानां ऐतिह्यानां कल्पितपूर्वतनमिथ्यावादानां 'एतन्मतं स्वीकृत्य ते कृतार्थाः' 'एते च कृतार्थाः अभवन्' इत्यादिरूपाणां सहस्रस्य वर्णनेन कथनेन विदुषामपि, किमुत अज्ञानां, मोहं स्वमताभिनिवेशं आवहन्तः कुर्व-न्तः । वस्तुतः खलाः पापाः कपटस्य आलयाः गृहरूपाः दाम्भिका इत्यर्थः । अत एव अमी रामानुजीयाः विनयस्य आरोपितस्य अभिनयात् प्रकटनाद्धेतोः जगन्ति विज-यन्ते किल ॥ २३४ ॥

**यस्यामिति ।** यस्यां गोष्ठ्याम् । इदं सर्वत्र योज्यम् । नयविदां शास्त्रज्ञानां पुर-स्कृतिः पूजा नास्ति । यज्वा विधिवद्यज्ञाद्यनुष्ठानकर्ता तु "यज्वा तु विधिनेष्टवान्" इत्यमरः । हासास्पदम्, निरक्षराः वेद-शास्त्रग्रन्थाक्षरस्यापि ज्ञानरहिताः अमी सां-केतिका संकेतसिद्धा आचार्य इति संज्ञा येषां ते आचार्यकाः संज्ञायां कन् । आचार्यपुरुषाश्च पुनः पूज्यन्ते । वेदानामवहेलनं काम्यकर्मानुष्ठापका इत्यवमाननं

---

'जगत्सु'.

वेदानामवहेलनं[1] व्यतिहता वर्णाश्रमप्रक्रिया
गोष्ठ्यै दुष्कलिपुष्कलीकृतपुषे[2] कस्यैचिदस्यै नमः ॥ २३५ ॥

किं बहुना—

प्रायो येषां सकृदकरणे प्रत्यवायोऽस्ति भूयान्
यज्ञादींस्तानिह विजहति स्पष्टवेदोपदिष्टान् ॥
कर्मैवामी विदधति जडाः किंतु संकेतसिद्धं
कष्टं कष्टं बत हतकलेः कश्चिदुन्मेष एषः ॥ २३६ ॥

किं च—

न गाहन्ते गङ्गामपि नैट[3]जटासार इति ये
न मज्जन्त्यम्भोधौ लवणरसवेशन्तक इति ॥
न पञ्चैवं गव्यान्यपि पशुशकृत्सार इति हा
पिबन्त्येषां दोषान्क इह निपुणः स्याद्गणयितुम् ॥ २३७ ॥

**विश्वावसुः**—किमरे कलङ्कलेशरहितेषु श्रीमद्रामानुजदर्शनैकनिष्ठेषु

---

भवति । वर्णानामाश्रमाणां च प्रक्रिया आचारः व्यतिहता ध्वस्ता । दुष्टस्य कलेः पापस्य पुष्कलीकृतं वर्धनं पुष्णातीति तत्पुषे कस्यैचिदस्यै गोष्ठ्यै तेङ्गलीयायै नमः । सर्वथा त्याज्या गोष्ठीयमित्यर्थः ॥ २३५ ॥

**प्राय इति** । येषां यज्ञादीनां सकृत् एकदाप्यकरणे अननुष्ठाने सति, भूयान् प्रत्यवायः पापं अस्ति भवति, तान् स्पष्टं वेदैरुपदिष्टान् चोदितान् यज्ञादीन् ब्रह्मयज्ञादिपञ्चसंख्याकान् इह लोके अमी रामानुजीयाः विजहति त्यजन्ति । किंतु अत एव जडाः मूर्खाः संकेतसिद्धमेव कर्म । एवकारेण श्रौत-स्मार्तव्यवच्छेदः । विदधति कुर्वन्ति । कष्टं कष्टम् अन्याय्यमन्याय्यम् । बतेति खेदे । एषः विहितत्यागः अविहितानुष्ठानं च हतकलेः सम्बन्धी कश्चिदनिर्वाच्यः उन्मेषः प्रभाव एव ॥ २३६ ॥

**नेति** । ये तेङ्गलाख्याः गङ्गामपि लोकपावनीं नटस्य नर्तकस्य शिवस्य जटानां आसारः वर्षमिति विगर्ह्येति शेषः । न गाहन्ते न स्नान्ति । अम्भोधौ समुद्रे, लवणरसः क्षाररसस्तस्य वेशन्तकः पल्वलमिति "वेशन्तः पल्वलं चाल्पसरः" इत्यमरः । न मज्जन्ति न स्नान्ति । एवं पञ्चगव्यान्यपि पशोः शकृत्सारः पूरीषभाग इति न पिबन्ति । एवं सति एषां दोषान् गणयितुं संख्यातुं इह कः निपुणः स्यात्? न कोऽपीत्यर्थः । हेति खेदे ॥ २३७ ॥

**किमिति** । कलङ्कस्य दोषस्य लेशेन यत्किंचिदंशेनापि रहितेषु श्रीमतो रामानु-

---

१ 'वेदानामपि हेलनं.' २ 'कृतिपुषे.' ३ हर.'

गरिष्ठेष्वपि सन्नह्यसि? अथवा भवादृशानां कृशविवेकानां का नाम मर्यादा? ॥ ९३ ॥

उक्तं हि—

'अनल्पकं धरायां हि सर्वज्ञस्यापि दारुणाः ॥
आरोपयन्ति मालिन्यं काकोला इव ते खलाः' ॥२३८॥ इति।

पश्य तावदेतेषां पवित्रतमं चरित्रम् ॥ ९४ ॥

उच्छिष्टान्यतिदूरतः परिहरन्त्युज्झन्त्यसत्सङ्गतिं
प्राणापत्स्वपि बान्धवेतरगृहे प्राश्नन्ति नापोऽप्यमी ॥
काम्यं निर्मिमते न कर्म भगवत्कैंकर्य एव स्थिताः
सत्त्वस्थैः स्पृहणीय एष जयति श्रीवैष्णवानां क्रमः ॥२३९॥

किं च—

भाले शुद्धमृदूर्ध्वपुण्ड्रतिलकः पद्माक्षमाला गले
दिव्यं शङ्खरथाङ्गचिह्नमनिशं दीप्तं भुजामूलयोः ॥
वक्त्रे शौरिगुणैकवर्णनपरा वाचस्तदेनोमुचा-
मेतेषां हरिभक्तितुन्दिलहृदां वीक्षापि मोक्षावहा ॥ २४० ॥

---

जाचार्यस्य दर्शने शास्त्रे एका अनन्या निष्ठा श्रद्धा येषां तेषु अत एव गरिष्ठेषु श्रेष्ठेषु संनह्यसि दोषारोपणे प्रवर्तसे? अथवा भवादृशानां त्वादृशानां कृशविवेकानां अल्पविचाराणां का नाम मर्यादा स्थितिः? कापि नैवेत्यर्थः ॥ ९३ ॥

**अनल्पकमिति**।धरायां भूमौ ते खलाः काकोला द्रोणकाका इव "द्रोणकाकस्तु काकोलः" इत्यमरः। सर्वज्ञस्यापि अनल्पकं मालिन्यं दोषमशुद्धिं च आरोपयन्ति प्रापयन्ति हि। पक्षे सर्वज्ञस्य शिवस्यापि अनल्पायां कन्धरायां ग्रीवायां मालिन्यं नैल्यं काकोलाः कालकूटा इव ॥ २३८ ॥

**पश्येति**। पवित्रतममतिपवित्रम् ॥ ९४ ॥

तत्राद्यं शिष्टपङ्क्तावभुक्तिरूपं दोषं निवारयति—**उच्छिष्टानीति**। अमी रामानुजीयाः उच्छिष्टान्यन्नानि अतिदूरतः परिहरन्ति, असद्भिः संगतिं सहभोजनादिरूपां उज्झन्ति त्यजन्ति, प्राणापत्सु सतीष्वपि बान्धवेतरगृहे अपोऽपि उदकान्यपि न प्राश्नन्ति, काम्यं स्वर्गादिहेतुकं कर्म न निर्मिमते न कुर्वन्ति। किंतु भगवतः कैंकर्ये पूजादिरूपसेवायामेव स्थिताः। अत एव एषः उक्तविधः श्रीवैष्णवानां क्रमः रीतिः सत्त्वस्थैः सात्त्विकैः स्पृहणीयः कामनीयः सन् जयति ॥ २३९ ॥

**भाल इति**। यस्मादेतेषां भाले शुद्धमृदा श्वेतमृत्तिकया गोपीचन्दनरूपया ऊर्ध्वपुण्ड्रात्मकस्तिलकः, गले पद्मबीजमयी अक्षमाला, भुजामूलयोर्बाह्वग्रयोः अनिशं दिव्यं

---

१ 'अविवेकानां'. २ 'अतिमात्रं'. ३ 'उच्छिष्टानति'. ४ 'निर्मंमते'. ५ 'जगति'.

दोषारोपणं चैतेषु त्वदीयमपहास्यम् ॥ ९५ ॥ तथाहि—

इष्टात्स्वबान्धवजनादितरैरदृष्टम्
यद्भुञ्जतेऽन्नमिह लक्ष्मणपक्षनिष्ठाः ॥
दोषः किमेष दुरितापहरो गुणो वे-
त्येवं विविच्य परिपृच्छ गुणागुणज्ञान् ॥ २४१ ॥

किंच—

दृष्टं बन्ध्वितरैः सतामनदतां दोषो य एषोऽपरैः
शिष्टैः स्पृष्टमनश्नतामिह महाराष्ट्रादिकानां समः ॥
एषां दूषयिता न कोऽपि नियताहारः परंतु द्विजः
सर्वाशी नतु दूषणं हित[1]भुजां तेषामिदं भूषणम् ॥ २४२ ॥

यश्च शठारिप्रभृ[2]तिसत्त्वस्थमुनिविनिर्मितदिव्यप्रबन्धाध्ययने दोष उद्घा[3]टितः सोऽयमितिहास-पुराणादिभिर्वेदमुपबृंहयद्भ्यः सद्भ्[4]यो न रोचते । शृणु तावत् ॥ ९६ ॥

दीप्तं शङ्खस्य रथाङ्गस्य चक्रस्य च चिह्नम्, वक्त्रे शौरिगुणैकवर्णनपराः श्रीकृष्णगुणवर्णनासक्ताः वाचः । सर्वत्र यथायोग्यमस्तीत्यादिवचनानुसारेण क्रियापदं योज्यम् । तत्तस्मात् हरिभक्तितुन्दिलहृदां श्रीकृष्णभक्त्या पूर्णमानसानां अत एव एनोमुचां निष्पापानामेतेषां वीक्षा दर्शनमपि मोक्षावहा भवति ॥ २४० ॥

**दोषेति ।** अपहसितुं योग्यं अपहास्यम् । परिहासास्पदमित्यर्थः ॥ ९५ ॥

**इष्टादिति ।** इह लक्ष्मणपक्षे रामानुजमते निष्ठाः स्थिताः इष्टात् स्वमतस्थात् स्वबान्धवजनात्, इतरैः मतान्तरस्थैः अबान्धवैरदृष्टमन्नं भुञ्जत इति यत्, एष उक्तविधान्नभोजनरूपः, दोषः? किं वा दुरितं पापं अपहरति विनाशयतीति दुरितापहरो गुणः? इति उक्तप्रकारं विविच्य आलोक्य गुणानगुणान् दोषांश्च जानन्तीति तज्ज्ञान् परिपृच्छ विचारय ॥ २४१ ॥

अथ 'विदुषां मतान्तरजुषां पङ्क्तौ न भुङ्क्ते'—इत्यादि दूषणमुद्धारयन्नाह—**दृष्टमिति ।** बन्ध्वितरैर्दृष्टं अन्नं अनदतां अभक्षयतां सतां, य एष दोषः कथितः, स एष दोषः अपरैः शिष्टैः स्पृष्टं अनश्नतां अभक्षयतां महाराष्ट्रादिकानां महाराष्ट्रादीतरदेशवासिनामपि समः तुल्यः । नियताहारः मितभोजनः कोऽपि द्विजः एषां रामानुजीयानां दूषयिता दूषकः न भवति । परंतु किंतु सर्वत्राश्नातीति सर्वाशी द्विजः दूषयिता स्यात् । इदं अनियमभोजनकृतदूषणं तु हितभुजां शरीरसुखकरभोजिनां तेषां भूषणमेव न तु दूषणमिति योज्यम् ॥ २४२ ॥

भाषाप्रबन्धाध्ययनरूपं दोषं निराकर्तुमाह—**यश्चेति ।** शठारिः एतन्नामा

[1] 'मितभुजां.' [2] 'प्रमुखसत्त्वस्थमुनि.' [3] 'उद्भावितः'. [4] 'विद्व-

बकुलविभूषणेन गुरुणा करुणानिधिना
श्रुतिमुकुटाभिसन्धिमवधार्य परं गहनम् ॥
रचितमिह प्रबन्धमनुसंदधतां कथितम्
सममपि दूषणं स्मृति-पुराणमधीतवताम् ॥ २४३ ॥

किंच—

उपादेयं प्राज्ञैरुचितविषयं द्राविडवचो-
ऽप्ययुक्तार्थं हेयं भवति वचनं संस्कृतमपि ॥
हरिं बिभ्रच्चेतस्यनतिसुभगोऽपि स्तुतिपदम्
न सद्रूपोऽप्यन्तःकरणधृतनारीस्तनभरः ॥ २४४ ॥

वस्तुतस्त्वगस्त्यव्याकरणानुशिष्टानामनवद्यशिष्टपरिग्रहविशेषप्रकृष्टानां द्राविडशब्दानां को नाम संस्कृतादपकर्षः ॥ ९७ ॥ पश्य—

---

कश्चिन्मुनिः सः प्रभृतिर्मुख्यो येषु तैः सत्त्वस्थमुनिभिः सत्त्वगुणयुक्तऋषिभिः, एतेन तेषां शम-दमादिसाधनसंपत्तिमत्त्वं, काम-क्रोधादिराहित्यं च सूचितम्। निर्मितदिव्यप्रबन्धानां अज्ञजनज्ञानार्थं विरचितदिव्यभाषाग्रन्थानां अध्ययने यश्च दोषः उद्घाटितः प्रकटीकृतः, सोयं इतिहास-पुराणादिभिर्वेदमुपबृंहयद्भ्यो वर्धयद्भ्यः सद्भ्यः, व्यास-वसिष्ठसदृशसज्जनेभ्यो न रोचते। अनेन इतिहास-पुराणानि यथा वेदोपबृंहणानि, तथैवैतेषां भाषाप्रबन्धा अपीति सूचितम् ॥ ९६ ॥

एतदेव सविस्तरमुपपादयति—**बकुलेति**। करुणानिधिना अत एव बकुलविभूषणेन शठकोपेन गुरुणा, श्रुतिमुकुटानां उपनिषदां अभिसन्धिं तात्पर्यं परमुत्कृष्टं गहनं दुर्ज्ञेयं अवधार्य निश्चित्य रचितम्। द्राविडभाषयेति शेषः। प्रबन्धं अनुसंदधतां पठतां यत् दूषणं कथितं, तत् दूषणं स्मृतिः मानवादिः पुराणानि वैष्णव-भागवतादीनि च। "नपुंसकमनपुंसकेन" इत्यादिना एकवद्भावः। अधीतवतां तत्पठनं कुर्वतामपि समं, वेदार्थोपबृंहकत्वाविशेषादिति भावः ॥ २४३ ॥

ननु तथात्वेऽपि प्रबन्धस्य द्रविडदेशभाषामयत्वेन "देशभाषामयं काव्यं श्रोतव्यं जातु न द्विजैः।" इति स्मरणादनुचितमेव तत्पठनमित्याशङ्क्याह—**उपादेयमिति**। उचितः योग्यः विषयः प्रतिपाद्यं यस्य तत् द्राविडवचः प्रबन्धरूपमपि, प्राज्ञैर्मनीषिभिः उपादेयं स्वीकार्यं भवति। अयुक्तार्थं अनुचितविषयं संस्कृतमपि वचनं भाण-प्रहसनादिरूपं हेयं त्याज्यं च भवति। उक्तेऽर्थे दृष्टान्तमाह—न अतिसुभगः सुन्दरः अनतिसुभगः कुरूपोऽपि, हरिं चेतसि अन्तःकरणे बिभ्रत् धारयन् जनः स्तुतेः पदं स्थानं भवति। सद्रूपोऽपि सुरूपसंपन्नोऽपि अन्तःकरणे चेतसि धृतः नारीस्तनभरः स्त्रीस्तनसौन्दर्यं येन तादृशः जनः स्तुतिपदं न भवति। दृष्टान्तालंकारः ॥ २४४ ॥

**वस्तुतस्त्विति**। अगस्त्यव्याकरणं 'इलक्कणं' इति भाषानामप्रसिद्धं

स यासां व्याकर्ता चुलुकितसमुद्रो मुनिवरः
प्रबन्धारः प्रौढाः शठमथनमुख्याः शमधनाः ॥
प्रवक्तारः शुद्धाः प्रथितयशसः पूर्वगुरवो
गिरांपारे तासां जयति गरिमा द्राविडगिराम् ॥ २४५ ॥

यश्चैकदेशविषयदूषणोपन्यासस्तत्राप्याकर्ण्यताम् ॥ ९८ ॥

---

तेनानुशिष्टानां व्युत्पन्नानां, अनवद्याः स्तुत्याः ये शिष्टाः तेषां परिग्रहविशेषेण आदरातिशयेन प्रकृष्टानामुत्तमानां द्राविडशब्दानां, प्रबन्धगतानामिति शेषः । को नाम संस्कृतादपकर्षः निकृष्टत्वम्? ॥ ९७ ॥

**स इति ।** यासां द्राविडवाणीनामिति वाक्यत्रयेऽपि योज्यम् । व्याकर्ता व्याकरणेन संस्कारकर्ता तु, चुलुकितः आचमनमात्रेणैव प्राशितः समुद्रो येन तथाभूतः, सः प्रसिद्धः मुनिवरोऽगस्त्यः, प्रबन्धारः भाषाग्रन्थकर्तारश्च प्रौढाः प्रगल्भाः शठमथनमुख्याः शठकोपादयः, शमो बाह्येन्द्रियनिग्रहस्तद्रूपमेव धनं येषां तथाभूता मुनयः, किंच प्रवक्तारः अध्यापकाश्च, शुद्धाः अन्तर्बाह्येन्द्रियदमनेन शुद्धान्तःकरणाः, प्रथितयशसश्च, पूर्वे गुरवः रामानुजादयः । सर्वत्र भवतीत्यादि यथायोग्यं वचनविपरिणामेनानुसंधेयम् । तासां द्राविडगिरां गरिमा महत्त्वं, गिरांपारे जयति । वाचामविषय इत्यर्थः ॥ २४५ ॥

इदानीं 'घण्टाघोषं' त्यजन्तः—' इत्यादिश्लोकैरुपन्यस्तदूषणमुद्धारयन्नाह—

**य इति ।** एकदेशः पूजायां घण्टानादाकरण-यज्ञादिकर्मत्यागादिरूपः विषयः येषां तेषां दूषणानामुपन्यासः कथनम् ॥ ९८ ॥

इतः परं दश पद्यानि सप्त गद्यानि चात्र मुद्रितपुस्तके अधिकान्युपलभ्यन्ते, प्राचीनपुस्तकेषु, अस्मत्संपादितादर्शपुस्तके च तानि नोपलभ्यन्त एव । तस्मात्तानि केनचित्प्रक्षिप्तानीति भाति । एतद्विषये च मुद्रितपुस्तके टीकाकारः, 'ग्रन्थकर्त्रा वेङ्कटाध्वरिणा 'तेङ्गले' इत्याख्यानां दोषानुद्भाव्य तन्निवारणं सम्यक्तया न कृतमिति मत्वाऽन्येन केनचित्तेङ्गलसंप्रदायिना स्वसंप्रदायोपर्यारोपितदोषनिरसनार्थमयमंशः प्रक्षिप्तः' इति वदति च । अतस्तेषां मूले निवेशोऽयुक्त इति अत्रैव वाचकानां परिज्ञानार्थं निवेश्यन्ते । तेषां टीका च टिप्पणीस्थले यथावलोकनं निवेशिता । मूलबहिर्भूतत्वान्न मया पृथक् टीकाकरणे यतितम् । यथा—

**किंच—**

**यज्ञान् पञ्च च संचितात्मधिषणा मान्यानथान्याध्वरान्**
**तत्तद्देवशरीरमाधवमुखोल्लासावहानप्यमी ॥**

---

**यज्ञानिति ।** संचिता आत्मधिषणा आत्मज्ञानसाक्षात्कारः यैस्ते । ज्ञानिन इत्यर्थः । अमी रामानुजीयाः । "पञ्च वा महायज्ञा ब्रह्मयज्ञो देवयज्ञो भूतयज्ञः पितृयज्ञो मनु-

**संत्यज्याप्यवधानतः प्रभुतमं स्वाराधनैस्तोषय-**
**न्त्येषां सच्चरितं यशांसि भजतां सूते पुनीते जगत् ॥ १ ॥**
**सर्वाभ्यर्हितवैष्णवाङ्घ्रिपयसां पानेन पूतात्मभि-**
**र्बह्वायासनिषेव्यपावनजटा गङ्गापि नाङ्गीकृता ॥**
**सामीप्येऽपि पयोनिधिः परिहृतः पश्वादिकाम्याद्विधेः**
**सारासारविवेचने समुचिता संदृश्यते चातुरी ॥ २ ॥**

**हन्त एतेष्वेव सांसिद्धिकामच्युतभक्तिमपेक्ष्य विजयते तद्भक्तभक्तिरनितरसाधारणी ॥ १ ॥**

**दृष्टे झटित्यखिललोकनिदानभक्ते साष्टाङ्गमत्रपमपाकृतसर्वगर्वम् ॥**
**अस्पृष्टदेशसमयं प्रणमन्ति तेषां धन्यात्मनां वद किमन्यदुपास्यमस्ति॥३॥**

**यच्च यतिवन्दनविषयेऽप्यवहितोऽसि तत्राप्याकर्ण्यताम् ॥ २ ॥**

---

ध्ययज्ञ इति'' इत्यादिश्रुत्युक्ताः तान् । अथ मान्यान् अन्यानध्वरान् ज्योतिष्टोमादीन्, तत्तद्यज्ञस्थदेवतारूपत्वेन माधवस्य विष्णोः मुखं अग्निः ''अग्निमुखा वै देवाः'' इति श्रुतेः । तस्य उल्लासः तृप्तिः तामावहन्तीति तानपि एतादृशान् यज्ञान् संत्यज्य विहाय, अमी अवधानतः सावधानतया प्रभुतमं सर्वेश्वरं विष्णुं स्वाराधनैः पूजन-भजनादिभिः तोषयन्ति । एतादृशानामेषां हरिं भजतां सत् साधु चरितं आचरितं यशांसि सूते, जगत् पुनीते पवित्रयति च ॥ १ ॥

**सर्वेति** । सर्वेभ्य इतरेभ्यो जलेभ्यः अभ्यर्हितानां सन्निधानां सुखलभ्यानां पूज्यानां वा वैष्णवाङ्घ्रिपयसां वैष्णवपादोदकानां पानेन पूतः आत्मा शरीरं येषां तैः एभिः, बह्वायासेन निषेव्या पावना जटा मूलं उगमश्च यस्याः । ''मूले लग्नकचे जटा'' इत्यमरः । तुषारपिहितात्युच्चहिमाचलनिर्गतत्वात् अतिदूरत्वाद्वा बह्वायासनिषेव्यत्वम् । गङ्गापि नाङ्गीकृता पावित्र्यार्थं न स्वीकृता । अनायासलभ्यवैष्णवपादतीर्थेनैव पावित्र्यलाभात् । तीरोपान्तनिवासित्वात् सामीप्येऽपि पयोनिधिः समुद्रः स्नानादिषु परिहृतः । पशुबन्धादिकाम्यकर्मविधेः सारासारविवेचने कर्तव्याकर्तव्यविवेके समुचिता चातुरी नैपुण्यं दृश्यते । एषामिति शेषः ॥ २ ॥

**हन्तेति** । सांसिद्धिकां जन्मान्तरसुकृतलब्धां अच्युतस्य भगवतो भक्तिमपेक्ष्य, तद्भक्तानां वैष्णवानां भक्तिः, अनितरसाधारणी असदृशी विजयते सर्वोत्कर्षेण वर्तते । भगवतोऽप्यधिकं तद्भक्तानेवामी भजन्तीति भावः । हन्तेति हर्षे ॥ १ ॥

कथमित्याकाङ्क्षायामाह—**दृष्टे इति** । अखिललोकस्य विश्वस्य निदानं आदिकारणं ''निदानं त्वादिकारणम्'' इत्यमरः । भगवान् विष्णुः तस्य भक्ते दृष्टे सति, साष्टाङ्गं

''उरसा शिरसा दृष्ट्या मनसा वचसा तथा ।
पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग उच्यते ॥''

इत्युक्तलक्षणं अत्रपं लज्जारहितं अपाकृतः दूरीकृतः सर्वोऽपि गर्वः यस्मिन्नेतादृशं च यथा स्यात्तथा प्रणमन्ति नमस्कुर्वन्ति । एतादृशानां तेषां भगवद्भक्तादन्यत् किं उपास्यमस्ति? न किमपीत्यर्थः ॥ ३ ॥

**यच्चेति** । अवहितोऽसि बद्धकटाक्षोऽसि ॥ २ ॥

उत्कर्षं चरमाश्रमी जडमतिः स्वेनैव जानाति चेत्
नेदिष्ठेष्वपि सर्वलोकगमितुर्भक्तेषु भित्तीयते ॥
अन्येऽमी यतयः प्रबोधमतयः सर्वस्य चोत्कर्षदा
भक्तिर्भागवतीति सस्पृहममूनर्चन्ति नृत्यन्ति च ॥ ४ ॥

इदं चावधेयम्—

चतुर्वेदाध्यायी सकलविहिताचारनिपुणो
निषिद्धाचारानप्यथ परिहरञ्छास्त्रपदवीम् ॥
यतिर्वाप्यन्यो वा हरिचरणभक्तान्यदि जनानु-
पेक्षेत क्षान्त्यैर्न भवति पदं विश्वगमितुः ॥ ५ ॥

तदनतिक्रान्तलोकमर्यादमाश्रमत्रयस्यैव न केवलं, निखिलाश्रमिणामपि परस्परभक्तिप्रकर्षप्रकटितदास्यमुक्तिप्रत्युद्गमाभिवादनादिकमवश्यानुष्ठेयमेवेति साधु जानीहि ॥ ३ ॥ यदपि प्रपन्नजनजीवनप्रधाननिदानपावनपादावनेजनावलम्बिदूषणं तदपि तन्महिमाऽपरिज्ञानविजृम्भितं बुद्धेः पिशुनयति दौर्भाग्यम् ॥ ४ ॥ तथाहि—

**उत्कर्षमिति** । जडा मतिर्यस्य सः अपण्डितः चरमाश्रमी सन्यासिकः, स्वेनैव अर्थात् स्वस्य उत्तमाश्रमेणैव उत्कर्षं इतरेभ्यः श्रेष्ठत्वं जानाति चेत् तर्हि, सर्वेषां लोकानां गमितुः सर्वलोकव्यापिनः भगवतः भक्तेषु भित्तीयते भित्तिवदाचरति । इतराश्रमिषु भगवद्भक्तेषु नमत्स्वपि जडमतिरयं स्वात्मानमेव पूज्यतमं मन्वानो यतिः भित्तिवत् स्थाणुरिव भवति, प्रतिवन्दनादिकं किमपि न करोतीत्यर्थः । ये त्वन्ये अमी यतयः प्रबोधमतयः प्राज्ञाः, ते तु सर्वस्यापि प्राणिनः उत्कर्षदा महत्त्वप्रदा भागवती भगवत्सम्बन्धिनी भक्तिरेव भगवद्भक्तस्यैव पूज्यत्वं महत्त्वं च नान्यैः आश्रमादिभिर्लिङ्गैरिति मत्वा, सस्पृहं अमूनन्यान् वैष्णवान् वानप्रस्थ-गृहस्थ-ब्रह्मचारि-स्त्री-शूद्रानपि अर्चन्ति पूजयन्ति तदानन्देन नृत्यन्ति च ॥ ४ ॥

**चतुर्वेदेति** । चतुर्णां ऋग्यजुःसामाथर्वाख्यानां वेदानां अध्यायी अध्ययनकर्ता सकले समग्रे विहिताचारे शास्त्रचोदितानुष्ठाने निपुणः कुशलोऽपि, निषिद्धान् वर्णाश्रमाद्यधिकृत्य शास्त्रेषु वर्जितान् आचारान् लशुन—गृञ्जनभक्षणादिरूपान् परिहरन् वर्जयन्नपि, शास्त्रपदवीं शास्त्रोदितमार्गं, चरन्निति शेषः । यतिः अन्यः गृहस्थोऽपि वा हरिचरणभक्तान् वैष्णवान् यदि उपेक्षेत अवज्ञायेत चेत्, तस्य तत् कर्म विश्वगमितुः विश्वपतेर्भगवतः क्षान्त्यै क्षमायै पदं आस्पदं न भवति । विद्यादिसकलगुणविशिष्टोऽपि पुमान् वैष्णवापमानकृदपराधी भवतीत्यर्थः ॥ ५ ॥

**तदिति** । तत् तस्मात् हेतोः अनतिक्रान्तलोकमर्यादं लोकमर्यादां अनतिक्रम्य यथा स्यात्तथा ब्रह्मचारि-गृहस्थ-वानप्रस्थरूपस्य आश्रमत्रयस्यैवायं परस्परवन्दनादिरूपो धर्म इति न, तर्हि निखिलाश्रमिणां संन्याससहितानां चतुर्णामपि आश्रमाणां परस्परस्य भक्तिप्रकर्षेण प्रकटितं दास्यं प्रश्रयोक्तिः प्रत्युद्गमनाभिवादनादिकं च सर्वैरनुष्ठेयमेवेति साधु सम्यक् जानीहि बुध्यस्व ॥ ३ ॥

एवं यतिवन्दनदूषणं परिहृत्य वैष्णवपादोदकसेवनदूषणं परिहरति—**यदपीति** । यदपि प्रपन्नानां प्रपत्तिधर्मेण भगवते शरणागतानां जीवनस्य प्रधानं मुख्यं निदानं

स्वातन्त्र्यं परिवर्जयन्निजगुरोरङ्घ्रिद्वयांशीभवन्
प्रीत्यै स्वामिजनस्य निःस्पृहतया तन्वीत तीर्थान्वयम् ॥
गोष्ठीभूय समार्जितं निपुणधीः श्रीपादतीर्थं स्वयम्
स्वीकुर्याद्यदि पाञ्चरात्रपदवीभाजां न तद्दूषणम् ॥ ६ ॥

वद रहसि पदाम्बु स्वीयमापीयते वा विगतनिजपदाम्भो नार्थ्यते वाऽङ्घ्रितीर्थम् ॥
अपि तु तदभिलाषा स्वामिनां स्वाङ्घ्रिसङ्गेऽप्यधिकतरपवित्रं सेव्यते पादतीर्थम् ॥ ७ ॥

तदवधेहि उपेक्षणीयनिजपदपयःसङ्गेऽप्यङ्गीकरणमधिकतरपवित्रबहुलतरहरिचरणसन्ततान्तरङ्गजनचरणावनेजनस्य समुचितमेवेति ॥ ५ ॥

---

यत् पावनं पवित्रं पादावनेजनं पादोदकं तत् अवलम्बते इति तदवलम्बि तत्सम्बन्धि । पादोदकवन्दनरूपं यद्दूषणं, त्वयोपन्यस्तमिति शेषः । तदपि तस्य पादतीर्थस्य महिमा महत्त्वं तस्य अपरिज्ञानेन अज्ञानेन विजृम्भितं सत्, बुद्धेः धियः-दौर्भाग्यं दुर्बलत्वं आकुञ्चितत्वमित्यर्थः । पिशुनयति प्रकटयति ॥ ४ ॥

तदेवोपपादयति—**स्वातन्त्र्यमिति** । स्वातन्त्र्यं स्वच्छन्दतां कामचारित्वमिति यावत् । परिवर्जयन् दूरतस्त्यजन्, निजगुरोः भगवतः अङ्घ्रिद्वयस्य अंशीभवन् स्वात्मानं भगवच्चरणांशभूतमिति मन्वानः सन्, स्वामिजनस्य संन्यासिजनस्य प्रीत्यै तदुक्तकरणेन तत्संतोषजननार्थं निःस्पृहतया फलाभिसन्धिराहित्येन तीर्थान्वयं तीर्थयात्रां तन्वीत आचरेत् वा आचरणं कुर्यादित्यर्थः । गोष्ठीभूय वैष्णवसमाजरूपेण स्थित्वा, गृह एवेति शेषः । समार्जितं संपादितं श्रीपादतीर्थं प्रपन्नजनपादोदकं निपुणधीः कुशलबुद्धिः स्वयं स्वीकुर्यात् यदि स्वीकरोति चेत्, तर्हि तत् पादतीर्थग्रहणं मतान्तरस्थायिनां दूषणं भविष्यति चेत् भवतु नाम । परं पाञ्चरात्रपदवीभाजां पञ्चरात्रागमं प्रमाणीकुर्वतां रामानुजीयानां तद्दूषणं न-भवति, अपि तु भूषणमेवेति फलितोऽर्थः ॥ ६ ॥

अन्यदप्याह—**वदेति** । रहसि वैष्णवगोष्ठ्याम्, स्वीयं स्वकीयं पदाम्बु पादतीर्थमेव आपीयते प्राश्यते वेति वद । विगतनिजपदाम्भः विगतं निजं पदं स्थानं यस्य तादृशं अम्भः स्वस्थानभ्रष्टमुदकं अङ्घ्रितीर्थं चरणतीर्थं च नार्थ्यते न याच्यते वा अपि तु याच्यत एवेत्यर्थः । तस्य चरणतीर्थस्य अभिलाषां स्वामिनां प्रभूणां विष्णोरित्यर्थः । बहुवचनं पूजायाम् । अस्त्येव । यतः स्वाङ्घ्रिसङ्गेऽपि अधिकतरपवित्रं स्वचरणादपि तदुद्भवं गाङ्गमुदकं भगवतापि सेव्यते । अतस्तद्भक्तानां वैष्णवपादोदकसेवने न कोऽपि दोषः । भगवदनुष्ठितत्वादस्य मार्गस्येति भावः ॥ ७ ॥

**तदिति** । उपेक्षणीयस्य निजपदपयसः स्वीयपादोदकस्य सङ्गेऽपि तस्य अङ्गीकरणं गोष्ठ्यां हि सर्वेषां तत्रत्यानां पादोदकग्रहणे स्वस्यापि पादावनेजनादेकं तत्र वर्तत एव । तथापि तस्य अङ्गीकरणं प्राशनं वन्दनं वा स्वस्मादपि अधिकतरपवित्राणां विशेषतया पावनानां बहुलानां हरिचरणयोः भगवत्पादयोः सततं आसक्तं अन्तःकरणं येषां तेषां वैष्णवानां जनः समूहः तस्य चरणावनेजनस्य पादप्रक्षालनस्य यदुदकं तस्य सेवनं समुचितमेव युक्तमेव । स्वाधिकभगवद्भक्तपादतीर्थमि-

**मज्जन् जनः स्वचरणद्वयसङ्गभाजि गङ्गाझरे निजकलङ्कनिरासहेतोः ॥**
**पूर्णोपमानमवधेहि निजाङ्घ्रिसङ्गिभक्ताग्रगण्यपदपद्मपयःपिपासोः ॥ ८ ॥**
**आस्तामिदं वाचनिके वितण्डायमानाः संध्यासु विहितमात्मप्रदक्षिणमप्यधिक्षिपन्तु । हन्तैतेषामनपायसत्संप्रदायप्रवर्तकः सकलगुरुतिलकलोकगुरुहृदयानुसारी स एष विजयते सौम्योपयातानां देशिकसार्वभौमः ॥ ६ ॥**

**पुण्यश्लोकः परमभिमतः स्वःस्थलेष्वास्थयाऽसौ**
**यस्य श्लोकप्रथमपठनश्लाघनाकम्पमानैः ॥**
**चूडासूनैः स्नपयति मधुस्यन्दिभिश्चञ्चरीकैर्द-**
**त्तस्वस्तिप्रवचनमुरो नित्यभूषां स्वयोषाम् ॥ ९ ॥**

**खलकृतपरिभाषाकर्णनोद्यज्जिगीषावितननिजमनीषा विस्तृतब्रह्मयोषा ॥**
**जयति दलितदोषा दत्ततत्त्वाभिलाषा वरवरमुनिवेषा कापि वैकुण्ठभूषा ॥ १० ॥**

श्रत्वात् स्वपादतीर्थबुद्ध्या तस्याग्रहणाच्च स्वपादोदकस्पर्शनेऽपि न कोऽपि दोष इति भावः ॥ ५ ॥

**मज्जन्निति ।** स्वस्य चरणद्वयस्य सङ्गभाजि स्वचरणद्वयसङ्गते गङ्गाझरे भागीरथीप्रवाहे निजकलङ्कस्य स्वीयपापस्य निरासहेतोः दूरीकरणार्थं मज्जन् स्नानं कुर्वन् जनः, भगवद्भक्तेषु अग्रगण्यानां मान्यानां यत् पदपद्मं पादकमलं तत्सम्बन्धि पयः उदकं तस्य पिपासुः पातुमिच्छुः तस्य प्रपन्नपादतीर्थसेविनः रामानुजीयस्य गङ्गास्नानकृदयं जनः पूर्णं उपमानं अवधेहि । पूर्णोपमेति तत्समानमिति जानीहि ॥ ८ ॥

**आस्तामिति ।** वाचनिके शब्दकोट्यां वितण्डायमानाः सम्प्रदायान्तरास्थायिन इति शेषः । स्वपादतीर्थसेवनमधिक्षिपन्ति, तर्हि ते संध्यासु संध्यावन्दनसमयेषु विहितमात्मप्रदक्षिणमपि अधिक्षिपन्तु, तत्तु नाधिक्षिपन्ति । प्रत्युत अहरहराचरन्त्येव । अत उभयत्र साम्यात् स्वपादतीर्थसेवने तदधिक्षेपे न कापि हानिरिति भावः । हे सौम्य साधो, उपयातानां शरणागतानां, अनपायः अपायरहितः निर्विघ्न इत्यर्थः । तादृशस्य सतः संप्रदायस्य सन्मार्गस्य प्रवर्तकः प्रवृत्तिकर्ता सकलानां गुरूणां आचार्याणां तिलकः श्रेष्ठः । लोकगुरोः भगवतः श्रीविष्णोः हृदयं अभिप्रायः तं अनुसरति भगवदभिप्रायानुसारिमार्गस्थापक इत्यर्थः । स एष प्रसिद्धः रामानुजः विजयते सर्वोत्कर्षेण वर्तत इति भावः । देशिकानां उपदेशकर्तॄणां आचार्याणां सार्वभौमः श्रेष्ठः ॥ ६ ॥

तमेव रामानुजं वर्णयति—**पुण्येति ।** पुण्यकारकं श्लोकः यशः यस्य स पुण्यश्लोकः इति । परं अत्यर्थं अभिमतः स्वस्थलेषु स्वर्गलोकप्रदेशेषु यस्य श्लोकस्य यशसः यत्कृतपद्यस्य च प्रथमपठने या श्लाघना स्तुतिः तया कम्पमानैः चञ्चलैः मधुस्यन्दिभिः मकरन्दस्रुभिः चूडासूनैः वेणीकुसुमैः चञ्चरीकैः भ्रमरैः दत्तस्वस्तिप्रवचनं दत्तस्वस्त्युत्तरं दत्तशान्तिकमिति यावत् । नित्यभूषां अयातयामकुसुमधारिणीं स्वयोषां स्नपयति ॥ ९ ॥

**खलेति ।** खलैः दुर्जनैः कृतायाः परिभाषायाः निन्दायाः आकर्णनेन उद्यन्ती जिगीषा जेतुमिच्छा तया वितता विस्तृता निजमनीषा स्वेच्छा तया विस्तृता प्रप-

कतिचिदलसाः कर्मायासासहा[1] यदि निश्चला-
स्तदपि भगवद्भक्तिस्तेषां धुनोति भवव्यथाम् ॥
श्रमसहजनैकार्हैर्नृणां विनैव हि लङ्घनै-
र्ज्वरनिरसनायालं वीर्योत्तरं परमौषधम् ॥ २४६ ॥

किंच—

रहस्यव्याख्यानै रघुवरचरित्रानुकथनै-
स्त्रयीसध्रीचीनां बकुलधरवाचां प्रवचनैः ॥
अमी भाष्याख्यानैर्हरिचरणकैंकर्यविधिभिः
प्रणामैश्चार्याणां क्षणमिव नयन्त्यत्र दिवसान् ॥ २४७ ॥

---

आकर्णय तावदेतदीयानां पवित्रतमं चारित्रम् ॥ ७ ॥

**कतिचिदिति ।** एषां रामानुजीयानां मध्ये इति शेषः । कतिचित् जनाः अलसाः कर्माणि कर्तुमशक्ताः सन्तः, कर्मणां संध्यादीनां आयासं श्रमं न सहन्ते ते तथाभूताः अपि, यदि भगवद्भक्तौ निश्चलाः स्थिरचित्ताः भवन्ति, तदपि तावन्मात्रेणापि भगवद्भक्तिः तेषां रामानुजीयानां भवस्य संसारस्य व्यथां धुनोति विनाशयति । अत्र दृष्टान्तं प्रमाणयति—श्रमं क्षुत्तृड्जन्यं सहन्ते इति तत्सहास्तथाभूतानां जनानां एकं मुख्यं यथा तथा अर्हैर्योग्यैः लङ्घनैः भोजननिवृत्तिभिः विनैव हि, नृणां रोगिजनानां वीर्योत्तरं बलवत्तरं परममुत्तमं च तत् औषधं च तत्, ज्वरस्य निरसनाय विनाशाय अलं समर्थं भवति । वैद्यशास्त्रे हि रुग्णजनानां रोगशान्त्यै लङ्घनं प्रधानत्वेनोक्तं, परं यदि लङ्घने अशक्ताः केचिज्जना भवेयुस्तर्हि केवलमौषधेनैव तेषां रोगशान्तिर्भवतीति भावः । तथैवैतेषां भक्तिसामर्थ्यम् ॥ २४६ ॥

**रहस्येति ।** किंच अमी रामानुजीयाः, रहस्यानां ईश्वरस्वरूपप्रतिपादकानां व्याख्यानैः अर्थप्रकाशपरैः, रघुवरस्य श्रीरामचन्द्रस्य चरित्रानुकथनैः चरित्रवाचनैः त्रयीसध्रीचीनां वेदानुसारिणीनां बकुलधरवाचां श्रीरामानुजवचनानां प्रवचनैः कथनैः, भाष्यस्य श्रीरामानुजप्रणीतस्य आख्यानैः, हरेः श्रीविष्णोः चरणयोः कैंकर्यविधिभिः दास्यकरणैः, आर्याणां तन्मतस्थश्रेष्ठजनानां प्रणामैर्वन्दनैश्च, अत्र क्षणमिव दिवसान् नयन्ति निर्यापयन्ति ॥ २४७ ॥

---

श्रिता ब्रह्मणः योषा वाणी यस्याः सा, दलिताः खण्डिताः दोषाः यया, दत्तः तत्त्वे परतत्त्वे अभिलाषः यया, वरः श्रेष्ठो यो मुनिः तस्य वरः वेषो यस्याः रामानुजरूपेत्यर्थः । वैकुण्ठलोकस्य भूषा भूषणं विष्णुः क्वापि जयति सर्वोत्कर्षेण वर्तते ॥ १० ॥

---

१ 'कर्मायासाद्विहाय विनिश्चलाः'.

पुनः क्षणमनुध्याय सश्लाघम्—

अन्यदास्तां नाम तामेव काममन्योन्यं कलहायमानानां नानाविधानां श्रुतीनाम[1]विरोधसाधनेन साधुभावं प्रकटयन्तीं अखिलगुणाभिरामां रामानुजसरस्वतीमभिनन्दामि । प्रसिद्धं हि "सन्धिमिच्छन्ति साधवः" इति ॥ ९९ ॥ पश्य—

नित्यं हेयगुणावधूननपरा नैर्गुण्यवादाः श्रुतौ
मुख्यार्थाः सगुणोक्तयः शुभगुणप्रख्यापनाद्ब्रह्मणः ॥
अद्वैतश्रुतयो विशिष्टविषया निष्कृष्टरूपाश्रया
भेदोक्तिस्तदिहाखिलश्रुतिहितं रामानुजीयं मतम् ॥ २४८ ॥

---

**अन्यदिति** । अन्यत् दूषणनिराकरणं, आस्तां नाम, किंतु नानाविधानां ईश्वरस्य साकारत्व-निराकारत्व-जीवात्मनोरैक्य-भिन्नत्वप्रतिपादकत्वेनानेकप्रकाराणां श्रुतीनां अन्योन्यं कलहायमानानां कलहं कुर्वन्तीनामिव स्थितानां अविरोधसाधनेन विरोधं परिहृत्येत्यर्थः । साधुभावं सर्वासां सत्यतात्पर्यं प्रकटयन्तीं, अत एवाखिलैर्गुणैरभिरामां मनोरमां, तां प्रसिद्धां रामानुजस्य सरस्वतीं वाणीमेवाभिनन्दामि । अत्रार्थे सहजं साधूनां चेष्टितमाह—प्रसिद्धं हीति ॥ ९९ ॥

यदुक्तं 'श्रुतीनामविरोधेन साधुभावं प्रकटयन्तीम्' इति तदेव प्रतिपादयति—**नित्यमिति** । ये श्रुतौ निर्गुणस्य भावो नैर्गुण्यं तस्य वादाः, ईश्वरस्य निर्गुणत्वबोधकानि वाक्यानीत्यर्थः । तानि च "अनादिमध्यान्तविहीनमेकम्" न रूपमस्येह तथोपलभ्यते" इत्यादीनि । ते नित्यं निरन्तरं हेयगुणानां त्याज्यगुणानां दोषाणामिति यावत् । अवधूननपराः विनाशप्रतिपादकाः, सन्तीति सर्वत्रानुसंधेयम् । तथा सगुणोक्तयः "सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्" "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" इत्यादयः सन्ति, ताश्च ब्रह्मणः आत्मनः शुभगुणानां लोकविलक्षणसृष्टि-स्थिति-लयकर्तृत्वादीनां प्रख्यापनात् प्रसिद्धिकरणात् मुख्यार्थाः शक्यार्थप्रतिबोधिकाः, तथा अद्वैतश्रुतयः "तत्त्वमसि" "अयमात्मा ब्रह्म" "अहं ब्रह्मास्मि" इत्यादयः जीवात्मपरमात्मनोरभेदप्रतिपादनपराः तास्तु, विशिष्टः सच्चिदानन्दात्मकस्य परमात्मनः असज्जड-सुख-दुःखात्मकस्य जीवस्य च अभेदप्रतिपादनरूपः विषयः यासां तथाभूताः, तथा भेदोक्तिः जीवेश्वरयोः परस्परं भेदवचनं तु निष्कृष्टं पूर्वप्रतिपादितविशेषणरहितं रूपं ययोर्जीवात्मनोस्तौ आश्रयौ प्रतिपाद्यौ यस्यास्तादृशी विद्यते । तत्तस्मात् इह लोके रामानुजस्येदं रामानुजीयं मतम् अखिलानां सकलानां श्रुतीनां हितम् । सर्वभेदनिराकरणेनैकवाक्यताकरणादिति भावः । एतत्प्रतिपादनेन रामानुजीये मते ग्रन्थकर्तुः पक्षपातः प्रकटीभवति । नहि तावत्तत्त्वतः सर्वत्रेदृश्येव विवेचनरीतिर्दृश्यते ।

---

१ 'अविरोधेन साधुभावम्'

**कृशानुः**—अवितथमेतदथापि य इमे संचरन्त्याचार्यपुरुषसमाख्याता एतन्मताभिनिविष्टाः शिष्टास्तेषामेषा रीतिर्न रोचते विवेचकेभ्यः[1]। पश्य तावत् ॥ १०० ॥

हत्वा मार्गे द्विजादीनखिलमपि धनं हन्त हृत्वाऽतिदृप्ता[2]
दुर्वृत्तास्तस्करा ये वन-गिरिनिलया ये च नीचा इहान्ये ॥
कृत्वा चक्राङ्कमेषां झटिति विदधतः किंच मन्त्रोपदेशं
तद्दत्तैरेव वित्तैर्दधति तनुममी वंशपारंपरीभिः[3] ॥ २४९ ॥

किंच—

जारान् चोरान् किरातान् जनपदैदमनान्[4] राजपाशान्महीशान्[5]
शिष्यान्कृत्वातिदृप्ताः श्रुतिपथ[6]विधुराः श्रोत्रियैर्ब्रह्मनिष्ठैः ॥

---

अन्यथा पूर्वत्र माध्ववर्णनेऽपि तथैव कुर्यात् । तत्र तु 'चन्द्रालोकचयान्धकार–' इत्यादि**कृशानु**प्रतिपादितदोषारोपणेनैव तद्वर्णनं समापितम् । एतच्च यथार्थगुणदोषप्रतिपादनपरे ग्रन्थे अयुक्तमिति प्रतिभाति ॥ २४८ ॥

अथ **कृशानु**रर्धाङ्गीकारपूर्वकमाह—**अवितथमिति**। एतत्पूर्वोक्तमवितथं सत्यं, अथापि य इमे आचार्यपुरुषसमाख्याताः आचार्यनाम्ना प्रसिद्धाः एतन्मते श्रीरामानुजमते अभिनिविष्टाः अत्यन्तासक्ताः शिष्टाः सन्तश्च संचरन्ति, तेषामेषा वक्ष्यमाणा रीतिराचारः विवेचकेभ्यो विचारशीलेभ्यो न रोचते । का सा रीतिरित्याशङ्कायामाह—पश्येत्यादि ॥ १०० ॥

**हत्वेति**। ये लोकाः वनानि च गिरयः पर्वताश्च निलयः वसतिस्थानं येषां ते तथोक्ताः तस्कराः चोराः अर्थात् किरातादयो लोकाः, मार्गे वनपथे द्विजादीन् ब्राह्मणादिश्रेष्ठजातीयान् जनान् हत्वा, एतेन ब्रह्महत्याकरणं सूचितम् । तेषां अखिलं संपूर्णमपि धनं हृत्वा परिहृत्य, हन्तेति खेदे । अतिदृप्ताः अतिशयगर्वयुक्ताः, अनेन स्वर्णस्तेयरूपं द्वितीयं महापातकं सूचितम् । अत एव दुर्वृत्ताः दुराचाराः, ये च इह अन्ये उक्तेभ्य **इतरे** नीचाः सद्गुण-सत्कुलोत्पत्त्यादिहीनाः सन्ति तेषामेषां ब्रह्महत्यादिमहापातकयुक्तानामपि, झटिति तेषां कुलशीलादिकमविचार्यैवेत्यर्थः । अङ्गमिति शेषः । चक्राङ्कं मुद्रादानेन चिह्नितं कृत्वा, नैतावदेव, किंच मन्त्रस्य रामायणाष्टाक्षरस्य उपदेशं विदधतः कुर्वन्तः सन्तः, तद्दत्तैः तैः किरातादिदुर्जनैः समर्पितैरेव वित्तैः द्रव्यैः, तनुं शरीरं अमी रामानुजीयः वंशपारंपराभिः कुलपरंपराभिः दधति धारयन्ति एतदतीव निन्द्यमिति भावः ॥ २४९ ॥

**जारानिति**। किंच अमी रामानुजीयाः जारान् परस्त्रीसक्तपुरुषान्, चोरान्,

---

१ 'विवेकिभ्यः' २ 'मत्ताः' ३ 'वंशपारम्परीतः.' ४ 'मथनाम्.' ५ 'महाशाः.' ६ 'नयविधुराः.'

साकं नो भुञ्जतेऽमी सकृदपि विनतिं कुर्वतेऽग्रे न तेषाम्
संकेतेनैवसिद्धं तदिदमविदुषां श्लाघ्यमाचार्यपुंस्त्वम् ॥ २५० ॥

अहो महानयमभिजन-विद्या-वृत्तसंपन्नानामन्येषामप्यनिर्वृत्तो व्यामोहः ॥ १०१ ॥

आचारस्य दवीयसां धनतृषामज्ञातवेदाध्वनाम्
कामातङ्ककलङ्कपङ्किलहृदां केषांचिदेषाममी ॥
शुद्धाचारजुषो जितेन्द्रियतया श्रेष्ठाः स्वयं सूरयः
शिष्यत्वं यदुशन्ति तत्किल कलेः साम्राज्यमत्रोर्जितम् ॥२५१॥

---

किरातान् म्लेच्छजातीयविशेषान्, जनपददमनान् दुस्तरकरभारग्रहणादिना देशविध्वंसकान्, अत एव राजपाशान् कुत्सितराजन्यान् । कुत्सितेऽर्थे पाशप् । महीशान् राज्ञश्च शिष्यान् कृत्वा, श्रुतिपथविधुराः वेदविहितमार्गत्यागिनः, अत एवातिदृप्ता गर्विताश्च सन्तः, ब्रह्मनिष्ठैः आत्मनिष्ठैः श्रोत्रियैः विधिवदग्निहोत्रानुष्ठानयुक्तैश्च जनैः साकं सह, सकृदेकवारमपि नो भुञ्जते भोजनं नैव कुर्वन्ति । एतावदेव न, किंतु तेषां श्रोत्रियादीनामग्रे नतिं नमस्कारमपि न कुर्वते । अपि च संकेतेनैव सिद्धं निष्पन्नं, अविदुषामज्ञानां मूर्खाणामिति यावत् । आचार्यपुंस्त्वं आचार्यपुरुषत्वं तदिदं श्लाघ्यं किमिति काकुः । अपि तु अतीव गर्हणीयमेवेति भावः ॥ २५० ॥

एतत्तु अविदुषामाचरणं, विदुषामपि निन्द्यमिति वक्तुमवतारयति— **अहो इति** । अभिजनः सत्कुलं च विद्या वेद-शास्त्रादिज्ञानं च वृत्तं वर्तनं च तैः संपन्नानां युक्तानामन्येषां पूर्वेभ्य इतरेषां, एषां लोकानामपि अयं वक्ष्यमाणः महान् व्यामोहो विवेकराहित्यं, अनिवृत्तः नैव गतः ॥ १०१ ॥

व्यामोहानिवृत्तत्वमेव प्रतिपादयति—**आचारस्येति** । अमी शुद्धं वेद-शास्त्रायुक्तमाचारं जुषन्ति सेवन्ते इति तथोक्ताः, जितेन्द्रियतया बाह्यान्तरिन्द्रियमदनेन श्रेष्ठाश्च, स्वयं सूरयः पण्डिताः अपि "पण्डितः कविः । धीमान् सूरिः" इत्यमरः । आचारस्य यथोक्ताचरणस्य दवीयसां दूरतराणां, दूरशब्दात् अतिशयार्थे ईयसुनि "स्थूल-दूर-युव-ह्रस्व-" इत्यादिना रकारलोपे पूर्वस्य गुणः । अत एव अज्ञातवेदाध्वनां अज्ञातवेदमार्गाणां, धनतृषां द्रव्याशापराणां, कामातङ्कः कामविकार एव कलङ्कः मलिनत्वं तेन पङ्किलं दूषितं हृदन्तःकरणं येषां तेषां, केषांचित् एषां आचार्याणां शिष्यत्वं यत् उशन्ति इच्छन्ति, तत् अत्र लोके कलेः साम्राज्यं अप्रतिहतं स्वातन्त्र्यं ऊर्जितं प्रवृद्धम् । किल निश्चयेन ॥ २५१ ॥

---

१ 'मनिवर्त्यो.' २ 'मत्यूर्जितं.'

अपि च—

स्वयं तरितुमक्षमः किमपरानसौ तारये-
दिति स्वयमचिन्तयन्नगणयन् धनानां व्ययम् ॥
जडं गुरुरिति भ्रमन् श्रयति पुस्तकाडम्बरै-
र्बहूपकरणान्वितैर्बहुलदेवताविग्रहैः ॥ २५२ ॥

अपि च—

अमलमतिषु लोके जागरूकेष्वनेके-
ष्वपि निजगुरुवंशोत्पत्तिमेवावलोक्य ॥
विगतशुभचरित्रं वेद-शास्त्रानभिज्ञम्
कमपि गुरुरितीमे कष्टमाराधयन्ति ॥ २५३ ॥

अपरमपि कलेराकर्णय चमत्कारम् ॥ १०२ ॥

सम्यक् शिष्यजनं परीक्ष्य बहुभिः संवत्सरैरुत्सुकं
शुश्रूषाभिरुपादिशन् प्रमुदिताः पूर्वे भुवीति [1]श्रुतम् ॥
[2]आराध्येष्टसमर्पणैरविनतानाचार्य एवादरा-
[3]दब्दैर्भूरितमैः [4]प्रसह्य लभते शिष्यान् [5]श्रमेणाऽधुना ॥ २५४ ॥

---

**स्वयमिति** । स्वयं तरितुं पारं गन्तुं अक्षमः असमर्थः असौ आचार्यः, अपरानन्यान् किं कथं तारयेत्? भवसागरमिति शेषः । इति स्वयं विद्वानपि अचिन्तयन् अविचारयन्, धनानां व्ययं च अगणयन् सन्, पुस्तकानामाडम्बरैः बहुपुस्तकभारैरित्यर्थः, तथा बहुभिरुपकरणैरलंकारादिभिः अन्वितैर्युक्तैः, बहुलदेवताविग्रहैः पुष्कलदेवमूर्तिभिश्च भ्रमन्, मोहं प्राप्नुवन् । पुस्तकभारं देवतार्चनाडम्बरं च दृष्ट्वाऽयं मां भवसागरमुत्तारयेदिति भ्रान्तः सन्नित्यर्थः । जडं विद्यादिरहितं, गुरुरिति मत्वा श्रयति आश्रयति ॥ २५२ ॥

**अमलेति** । किंच लोके अमला वेदोक्तकर्मानुष्ठानतया परिशुद्धा मतिर्बुद्धिर्येषां ते तथाभूतेषु अनेकेषु बहुषु लोकेषु जागरूकेषु वर्तमानेषु सत्स्वपि, निजगुरोः पितृ-पितामहादिपरंपरया आचार्यस्य वंशे उत्पत्तिं केवलं जन्मैव, न तु विद्यादिसंपन्नत्वं, अवलोक्य, वेद-शास्त्रयोः अनभिज्ञं अनिपुणं, वेदादिज्ञानशून्यमित्यर्थः । तत एव च विगतं नष्टं शुभचरित्रं इह-परलोकयोः श्रेयःसंपादकं चेष्टितं यस्य तथोक्तं कमपि पुरुषं गुरुः आचार्य इति मत्वा, इमे जनाः आराधयन्ति सेवन्ते । कष्टं अन्याय्यमेतत् ॥ २५३ ॥

**अपरमिति** । अपरमन्यं कलेश्चमत्कारं आश्चर्यावहं प्रभावं, आकर्णय शृणु १०२

...स्थाः वसिष्ठ-वामदेव-पिप्पलादादयः गुरवः, भुवि

---

...अर्थै.' ४ 'प्रशस.' ५ 'क्रमेणा.'

वि०—मन्दमनीष महतः पुरुषानेवं मा दूदुषः ॥ १०२ ॥

भवजलधिनिमज्जत्सज्जनोज्जीवनार्थम्
जगति महति वंशे जातवन्तो महान्तः ॥
प्रपदनधनतुष्टाः पञ्चसंस्कारदानात्
कति न कृतिन एते ज्ञानहीनान् पुनन्ति ॥ २५५ ॥

किं च—

आचार्याः पुरुषा महत्तरकुलेष्वब्जाक्षदास्योज्ज्वला
नावः संसृतिवारिधेः परममी नावातरिष्यन्यदि ॥

---

पृथिव्यां उत्सुकं विद्याग्रहणे उत्कण्ठितं, बहुभिः संवत्सरैः वर्षैः न तु द्वित्र-दिवसैः, शुश्रूषाभिः सेवाभिः शिष्यजनं सम्यक् परीक्ष्य "नापरिज्ञातकुल-शीलरूपाय ना-संवत्सररात्रोषिताय–" इत्यादिश्रुत्युक्तनियममनुसृत्य शिष्यस्य परीक्षां कृत्वेत्यर्थः । तथाच प्रश्नोपनिषदि पिप्पलादस्य सुकेशादीन् ब्रह्मविद्यार्थमागतान् षट् शिष्यान् प्रति वाक्यम्— "भूय एव तपसा ब्रह्मचर्येण सवत्सरं संवत्स्यथ यथाकामं प्रश्नान् पृच्छत यदि विज्ञास्यामः सर्वं ह वो वक्ष्यामः" इति । छान्दोग्ये च गौतमहारिद्रु-मतस्य ऋषेः सत्यकामं प्रति—"किंगोत्रो नु सोम्यासि" इत्यादि । ततः प्रमु-दिताः सन्तः उपादिशन् विद्यामध्यापयामासुः इति श्रुतम् । उपनिषदादिषु पुराणेषु चेति शेषः । अधुना सांप्रतं तु एष रामानुजीयाचार्यः अविनतान् उन्मत्तान् इष्टस-मर्पणैः तेषामिच्छितवस्त्रादिप्रदानैः, भूरितमैः अतिबहुभिः अब्दैः, आदरात् आराध्यैव प्रसह्य बलात्कारेण, शिष्यान् श्रमेण बहुप्रयत्नेन लभते संपादयतीत्यर्थः ॥ २५४ ॥

**भवेति ।** भवजलधौ संसारसमुद्रे निमज्जतां सज्जनानां उज्जीवनार्थमुद्धारणार्थं, जगति महति वंशे कुले जातवन्तः उत्पन्नाः, अत एव महान्तः कृतिनः पुण्यव-न्तश्च एते आचार्यपुरुषाः, प्रपदनं शरणगमनमेव धनं तेन तुष्टाः सन्तः, ज्ञानहीनान् वेद-शास्त्रज्ञानशून्यान् आत्मानात्मविवेकरहितान् वा, पञ्चसंस्काराणां दानात् अर्प-णात्, पञ्चसंस्काराश्च— "तापः पुण्ड्रस्तथा नाम मन्त्रो यागश्च पञ्चमः" इति प्रसि-द्धाः । कति कियन्तो वा न पुनन्ति पवित्रयन्ति ? । अत्र 'सज्जनोज्जीवनार्थं' इत्युक्त्या, चोराणां मध्ये च प्रायशः सज्जनानां दौर्लभ्याच्च 'हत्वा मार्गे—' इत्यादेः सम्यक्तया नैव दूषणोद्धारः । अत एव ग्रन्थकर्तुः पक्षपातित्वं रामानुजीये मते इत्युक्तं प्रागस्माभिः ॥ २५५ ॥

**आचार्या इति ।** अमी रामानुजमतानुसारिणः संसृतिवारिधेः संसारसमुद्रस्य नावः तारकत्वान्नौरूपाः, अब्जाक्षस्य श्रीविष्णोः दास्येन दास्यरूपभक्त्येत्यर्थः । उज्ज्व-लास्तेजस्विनः आचार्याः आचार्यसंज्ञकाः पुरुषाः, महत्तरेषु तत्संप्रदायप्रवर्तकोच्चत-

---

१ 'मन्दमते.' २ 'महापुरुषान्'; 'महतः पुंस एवं.' ३ 'कुष्टाः.'

अप्राप्ताच्युतदास्यवृत्तय इहाऽविज्ञातमन्त्रोत्तमाः
सर्वे तर्हि कलाव[1]तप्ततनवो हन्तापतिष्यन्नधः ॥ २५६ ॥
तापादिभिः सपापां जनतां पुनतां महात्मनामेषाम् ॥
दोषश्चेदेष समो दुष्टान् पुनतोऽपि गाङ्गपूरस्य ॥ २५७ ॥
इदं चावबोद्धव्यम्—
सद्वंशप्रभवश्चरित्ररहितोऽप्यादृत्य एवोत्तमैः
साध्वाचारयुतोऽपि दुष्कुलभवः सभ्येषु नाभ्य[2]र्हितः ॥
शालग्राममकृत्रिमं पटु[3]मतिः सल्लक्षणायुक्तम-
प्यादत्ते न तु लक्षणाढ्यमपि तं चक्रोज्ज्वलं कृत्रिमम् ॥२५८॥

---

मकुलेषु यदि न अवातरिष्यन् न प्रादुरभिष्यन्, तर्हि सर्वे जनाः इह लोके कलौ युगे च अप्राप्ता अलब्धा अच्युतस्य विष्णोर्दास्यवृत्तिर्यैस्ते तथाभूताः अत एव अज्ञाताः मन्त्रोत्तमाः विष्णोः प्राप्तिकरत्वादुत्तमा मन्त्रा यैस्ते तथोक्ताः, तत एव च अतप्ता चक्र-शङ्खादिमुद्राभिः, विष्णोः पूजन-स्तवन-कथाश्रवणादिराहित्येन च अपरिशुद्धा तनुर्येषां ते तथाभूताश्च अधः अपतिष्यन् नरके पतिष्यन्तीत्यर्थः। अत्र तरति-पतत्योः "लिङ्निमित्ते—" इत्यादिना क्रियाया अनिष्पत्तिरूपेऽर्थे लृङ् ॥ २५६ ॥

यच्च 'आराध्येष्टसमर्पणैः—' इत्यादिना नीचोद्धृतजनप्रपत्तिरूपं दूषणमुक्तं तन्निराकर्तुमाह—**तापादिभिरित्यादि**। सपापां पापयुक्तां जनतां जनसमूहं, तापादिभिः तप्तमुद्रादिसंस्कारैः, आदिशब्देन मन्त्रोपदेशादेर्ग्रहणम्। पुनतां पवित्रीकुर्वतां अत एव महात्मनामुदारचित्तानां, एषां आचार्यपुरुषाणां दोषः अनधिकारिशिष्यस्वीकाररूपः अस्ति चेत्, तर्हि दुष्टान् जनान् पुनतः पवित्रीकुर्वतः गाङ्गपूरस्य गङ्गाप्रवाहस्यापि एष दोषः, समस्तुल्य एव। गङ्गाप्रवाहस्य यथा यस्यकस्यापि पवित्रीकरणं नाधिकारिविशेषावलम्बं, तथैवैतेषामिति भावः। इदमेव च महतां महत्त्वभूषणं, यत् सूर्य इव आनीचजनमहाजनपर्यन्तं सर्वत्र पक्षपातं विना समबुद्धित्वमित्यप्यवधेयम् ॥ २५७ ॥

**सदिति**। किंच सद्वंशे उत्तमवंशे प्रभव उत्पत्तिर्यस्य सः उत्तमकुलप्रसूत इत्यर्थः। चरित्ररहितोऽपि सदाचरणशून्योऽपि, उत्तमैः श्रेष्ठजनैरादृत्य एव स्वीकार्य एव। अपि च साध्वाचारयुतः सदाचारसंपन्नोऽपि सः दुष्कुलभवः नीचकुलोत्पन्नश्चेत्, सभ्येषु मध्ये नाभ्यर्हितः न पूज्यः। भवतीति शेषः। अत्र दृष्टान्तः—पट्वी कार्याकार्यकुशला मतिर्बुद्धिर्यस्य तथाभूतः पुरुषः, सद्भिः शङ्ख-चक्राद्युत्तमैर्लक्षणैश्चिह्नैः अयुक्तमपि, अकृत्रिमं सहजोत्पन्नं शालग्रामं आदत्ते स्वीकरोति। किंतु तं कृत्रिमं केनापि पुरुषेण निर्मितं शालग्रामं चक्रोज्ज्वलं चक्रादिचिह्नैः सुशोभितमपि, अत एव लक्षणाढ्यं

---

१ 'बवाप्ततनवो.' २ 'नाभ्यर्चितः.' ३ 'पटुतमं.'

सविनयमञ्जलिं बद्ध्वा—

शिष्यार्पितेन शुचिना द्रविणेन तुष्टाः
शिष्टा मुकुन्दशरणागतिधर्मनिष्ठाः ॥
सत्संप्रदायनियमप्रयताः सदा ये
तेभ्यो नमांसि करवै वरवैष्णवेभ्यः ॥ २५९ ॥

---

## अथ चन्नपट्टण(मद्रास)वर्णनम् २०.

इति विमानमन्यतः प्रस्थापयन्नग्रतो दृष्ट्वा—

एषा कैरविणी विशल्यकरणी दोषाशुगार्तात्मना-
मेतद्रोधसि पार्थसारथिरिति ख्यातः समिन्धे हरिः ॥
यत्पादाम्बुजचुम्बिनां सुरपतेः कोटीरगारुत्मत-
स्तोमानां तुलसीदलप्रकरतो नो वेद भेदं जनः ॥ २६० ॥

---

अन्यैः सर्वसल्लक्षणैः संपन्नमपि न स्वीकरोति । एतत् 'अमलमतिषु लोके जागरूकेषु–' इत्याद्युक्तदूषणोद्धारमात्रपरमिति ज्ञेयम् ॥ २५८ ॥

एवं सर्वाणि दूषणानि परिहृत्य सर्वथा एते वन्द्या एवेति सूचयन्नाह—**शिष्यार्पितेनेति** । ये शिष्यैः अर्पितेन दत्तेन शुचिना न्यायसंपादितेन स्वल्पेनापीति शेषः । द्रविणेन धनेन तुष्टाः, मुकुन्दस्य विष्णोः शरणागतिः शरणप्रपत्तिरेव धर्मस्तस्मिन्निष्ठा आसक्तिर्येषां ते तथाभूताः, सदा निरन्तरं सतां संप्रदाये ये नियमाः संध्या-पूजादयः तैः प्रयताः पवित्राः "पवित्रः प्रयतः पूतः" इत्यमरः । अत एव शिष्टाः, तेभ्यः वरवैष्णवेभ्य श्रेष्ठवैष्णवेभ्यः नमांसि नमस्कारान् करवै कुर्याम् । 'नमस्' इति सान्तोऽयं शब्दः ॥ २५९ ॥

अथ चन्नपट्टणवर्णनं सूचयन्नाह कविः—**इतीत्यादि** ।

**एषेति** । एषा कैरविणी सरसी, अत्र विराजते इति शेषः । कथंभूता सा । दोषाः पापान्येव आशुगा बाणास्तैः आर्तः आत्मा अन्तःकरणं येषां तेषां, संसारदोषखिन्नचित्तानामिति यावत् । विशल्यकरणी शरीरनिर्विष्टबाणाग्रनिस्सारिणी । एतद्रोधसि अस्याः कैरविण्यास्तीरे, पार्थसारथिः इति नाम्ना ख्यातः प्रसिद्धः हरिः विष्णुः समिन्धे सम्यक् प्रकाशते । कीदृशः सः । यस्य पार्थसारथेः पादाम्बुजं चरणकमलं चुम्बन्ति स्पृशन्ति ते तथाभूतास्तेषां सुरपतेरिन्द्रस्य कोटीरगारुत्मतस्तोमानां किरीटस्थमरकतमणिसमूहानां तुलसीदलानां तुलसीपत्राणां प्रकरः समूहः तस्मात् भेदं भिन्नत्वं जनः नो वेद नैव जानाति । वर्णसाम्यात् मरकतमणीनपि तुलसीपत्राण्यवगच्छतीत्यर्थः ॥ २६० ॥

अत्र वसन्तः सन्तश्चिरंतनोक्त्यन्तचिन्तनाश्रान्ताः ॥
आतन्वन्तं सुचरितमातन्वन्तो विभान्ति मानधनाः[1] ॥ २६१ ॥

**कृशानुः**—अस्तु तथापि परिकलित[2]गुणप्रहाणहूणप्रायहेयजननिबिडनगरविशेषसन्निकर्ष एवात्र महान् दोषः। दुर्लभाः खलु हूणेभ्यः कुत्सिततमा लोके ॥ १०४ ॥

हूणाः करुणाहीनास्तृणवत् ब्राह्मणगणं न गणयन्ति[3] ॥
तेषां दोषाः पारे वाचां ये नाचरन्ति शौचमपि ॥ २६२ ॥

पुनः सनिर्वेदं विधिमुद्दिश्य[4]—

शौचत्यागिषु हूणकादिषु धनं शिष्टेषु च क्लिष्टताम्
दुर्मेधस्सु धराधिपत्यमतुलं दक्षेषु भिक्षाटनम् ॥
लावण्यं ललनासु दुष्कुलभवास्वग्र्यासु नीरूपताम्
कष्टं सृष्टवता त्वया हतविधे किं नाम लब्धं फलम् ॥ २६३ ॥

---

**अत्रेति**। किंच अत्र कैरविणीतीरे वसन्तो वासं कुर्वन्तः सन्तः सज्जनाः, चिरंतनस्य ब्रह्मण उक्तयो वेदास्तेषामन्ता उपनिषदस्तेषां चिन्तनेन विचारेण अश्रान्ताः विश्रामरहिताः सततमुपनिषद्विचारासक्ता इत्यर्थः। अत एव आतन्वन्तं शरीरावसानपर्यन्तं सुचरितं सत्कर्म आतन्वन्तो विस्तारयन्तः कुर्वन्त इति यावत्। मानधनाः सन्तः विभान्ति प्रकाशन्ते ॥ २६१ ॥

अथ **कृशानु**र्हीनजनसांनिध्यादिरूपं दोषमुद्घाटयन्नाह—**अस्त्विति**। पूर्वोक्तप्रकारं सर्वं अस्तु नाम, तथापि परिकलितं स्वीकृतं गुणानां दया-दाक्षिण्यादीनां प्रहाणं त्यागो यैस्तथाभूता हूणाः श्वेतवर्णाः म्लेच्छादिहीनकुलोद्भवा नराः प्रायाः बहवो येषु तादृशैः अत एव हेयैस्त्याज्यैः जनैः निबिडस्य परिपूर्णस्य नगरविशेषस्य चन्नपट्टणस्य सन्निकर्षः सान्निध्यमेव अत्र क्षेत्रे, महान् दोषः। यतः हूणेभ्यः कुत्सिततमाः अतिनिन्दनीयाः लोके जनाः दुर्लभाः खलु ॥ १०४ ॥

कुत्सिततमत्वमेव स्पष्टयति—**हूणा इति**। करुणया दयया हीनाः हूणाः ब्राह्मणगणं ब्राह्मणसमुदायं तृणवत् तृणमिव न गणयन्ति। तुच्छीकुर्वन्तीत्यर्थः। किंच ये हूणाः शौचं पुरीषोत्सर्गानन्तरं गुदप्रक्षालनादिरूपमपि न आचरन्ति, किमुत मृज्जलादिना स्नानादिरूपं, अत एव तेषां दोषाः पापानि पारे वाचां, वाचा वक्तुमशक्या इत्यर्थः। सन्तीति शेषः ॥ २६२ ॥

**पुनरिति**। सनिर्वेदं सखेदं विधिं ब्रह्माणमुद्दिश्य—

**शौचेति**। हे हतविधे मन्द प्रजापते, शौचं त्यक्तुं शीलं येषां तेषु हूणकादिषु हूण-म्लेच्छादिषु धनं द्रव्यं, शिष्टेषु सदाचरणसंपन्नेषु जनेषु च क्लिष्टतां दारिद्र्यं

---

१ 'शान्तिधनाः.' २ 'परिकल्पित.' ३ 'विगणयन्ति.' ४ 'दैव.'

**विश्वावसुः**—पश्य त्वमेतेष्वपि गुणग्राहित्वम् ॥ १०५ ॥

प्रसह्य न हरन्त्यमी परधनौघमन्यायतो
वदन्ति न मृषावचो विरचयन्ति वस्त्वद्भुतम् ॥
यथाविधि कृतागसां विदधति स्वयं दण्डनम्
गुणानवगुणाकरेष्वपि गृहाण हूणेष्वमून् ॥ २६४ ॥

---

## अथ काञ्चीवर्णनम् २१.

इति विमानमितः प्रतीच्यां दिशि योजनपञ्चकमतिक्रामयन् पुरतो दृष्ट्वा सामोदम्—

---

दुष्टा मेधा बुद्धिर्येषां तेषु "नञ्-दुस्-सुभ्यः" इत्यनुवर्तमाने "नित्यमसिच् प्रजा-मेधयोः" इत्यसिच् समासान्तः । धरायाः पृथ्व्याः अतुलं अनन्यसदृशं आधिपत्यं स्वामित्वं, दक्षेषु बुद्धिमत्सु च भिक्षाटनं भिक्षार्थं संचारम्, तथा दुष्कुलभवासु यवन-म्लेच्छादिहीनकुलोत्पन्नासु ललनासु स्त्रीषु लावण्यं सौन्दर्यं अग्र्यासु श्रेष्ठब्राह्मणादि-कुलोत्पन्नासु स्त्रीषु च नीरूपतां कुरूपत्वं, एतादृशं परस्परविरुद्धं सृष्टवता उत्पादयता त्वया, किं नाम फलं लब्धं प्राप्तम्? कष्टं अन्याय्यम् ॥ २६३ ॥

अथ तेष्वपि विचित्रवस्तुरचनादिरूपान् गुणान् प्रदर्शयन्नाह **विश्वावसुः—पश्येति** । त्वं एतेष्वपि पूर्वोक्तनिन्द्याचारयुक्तेष्वपि, गुणग्राहित्वं पश्य ॥ १०५ ॥

गुणग्राहित्वमेवोपपादयति—**प्रसह्येति** । अमी हूणाः परेषां लोकानां धनौघं द्रव्यसमूहं, अन्यायतः प्रसह्य बलात्कारेण न हरन्ति । किंतु विचित्रवस्तुप्रदर्शनादिना मोहयित्वा, करग्रहणादिना च प्रतिवर्षं स्वल्पं स्वल्पमिति बहुना कालेन बह्वेव हरन्तीति ध्वनिः । एवमुत्तरत्रापि यथायथमूह्यम् । तथा मृषावचः अनृतभाषणं न वदन्ति, अद्भुतं आश्चर्यकरं वस्तु विरचयन्ति उत्पादयन्ति, तथा कृतागसां कृतापराधानां यथाविधि राजनियममनुसृत्य स्वयं दण्डनं शिक्षां विदधति कुर्वन्ति । तस्मात् अवगुणानां 'शौचत्यागिषु—'इत्यादिश्लोकप्रतिपादितानां दोषाणां आकरेषु उत्पत्तिस्थानेष्वपि सत्सु हूणेषु, अमूनधुना मया प्रतिपादितान् गुणान् गृहाण । नैते सर्वथा दोषार्हा इति भावः ॥ २६४ ॥

इदानीं काञ्चीनगरवर्णनमाक्षिपन्नाह कविः—**इतीति** । इतः चन्नपट्टणदेशात्, प्रतीच्यां पश्चिमायां दिशि, योजनपञ्चकं विंशतिक्रोशपर्यन्तं अतिक्रामयन् गमयन्, सामोदं सानन्दम् ।

---

१ 'अवेहि'; 'एहि.'

इयं काञ्ची काञ्ची करिशिखरिणः कापि नगरी
गरीयस्यां यस्यां विहरणजुषां पक्ष्मलदृशाम् ॥
मुखं दर्शं दर्शं रजनिकरमादर्शम[1]मलम्
स्वरूपं के पङ्केरुहमपि न निन्दन्ति रसिकाः ॥ २६५ ॥

किं च—

[2]सुमनोजनतास्थानं [3]स्थाने सद्रूपशोभनी सेयम् ॥
सुरताभ्युदयविधात्री शुभकाञ्ची साधु रञ्जयति चेतः ॥ २६६ ॥

नगरीमेनां दक्षिणेन करुणाझरीव [4]भगवती वेगवती नाम प्रवहति पावनी शैवलिनी ॥ १०६ ॥

---

**इयमिति ।** इयं करिशिखरिणः हस्तिशैलस्य काञ्ची रशना, "स्त्रीकट्यां मेखला-काञ्ची सप्तकी रशना तथा" इत्यमरः । तमभिवेष्ट्य स्थितेत्यर्थः । काञ्ची नाम कापि अनिर्वाच्या नगरी वर्तते । गरीयस्यां अतिमहत्यां, गुरुशब्दात् ईयसुनि "प्रिय-स्थिर-स्फिर—" इत्यादिना गरादेशः । यस्यां नगर्यां विहरणजुषां क्रीडां कुर्वतीनां पक्ष्मलदृशां स्त्रीणां मुखं दर्शं दर्शं पुनः पुनरवलोक्य, के रसिकाः पुरुषाः अमलस्वरूपं स्वच्छस्वरूपं, एतत् रजनिकरादर्श-पङ्केरुहेष्वपि संब-न्धनीयम् । रजनिकरं चन्द्रं, आदर्शं दर्पणं, पङ्केरुहं कमलमपि च न निन्दन्ति? अपि तु सर्वे एव एतान् सर्वानपि निन्दन्तीत्यर्थः ॥ २६५ ॥

**सुमन इति ।** सुष्ठु मनो येषां ते सुमनसः पण्डितास्ते च ते जनाश्च तेषां समूह-स्तत्ता तस्याः स्थानं, यथाविधिस्वकर्मानुष्ठानेन शुद्धमानसानां पण्डितानां वसतिस्थान-मित्यर्थः । पक्षे सुष्ठु मनोजः कामस्तेन नतानां नम्राणां, अत्यन्तकामासक्तानामित्य-र्थः । आस्थानम् । सद्भिरुत्तमैः स्वादु-सुगन्धिफल-पुष्पसंपन्नैरिति यावत् । द्रुभिः वृक्षैः आम्र-पनस-दाडिम-नारीकेलादिभिः उपशोभनी पक्षे सता उत्तमेन रूपेण शोभनी च, सुराणां समूहः सुरता तस्याः, पक्षे सुरतस्य कामसौख्यस्य च अभ्युदयं वृद्धिं विधत्ते इति तथाभूता, सा इयं शुभा काञ्ची नगरी रशना च, अस्मिंस्थाने चेतः अन्तःकरणं साधु यथा स्यात्तथा रञ्जयति रमयति ॥ २६६ ॥

अन्यदप्याश्चर्यमाह—**नगरीमिति ।** एनां काञ्चीं नगरीं दक्षिणेन अस्या दक्षि-णत इत्यर्थः । "एनबन्यतरस्याम्—" इति एनप्प्रत्ययः । "एनपा द्वितीया" इति तद्योगे द्वितीया च । करुणायाः झरीव भगवती वेगवती नाम पावनी पवित्रा शैव-लिनी नदी प्रवहति ॥ १०६ ॥

---

१ 'मतुलम्.' २ 'सुमनोजनवादरणस्थानं.' ३ स्थाने सद्रूपसेवनी सेयम्.' ४ 'भगवतो.'

माधुर्याध्ययनोपसन्नमधुनिष्यन्दानिमन्दानिल-
व्यालोलत्तटचारुभूरुहशिखानिष्पातिपुष्पाधिकैः ॥
डिण्डीरैः स्मितवन्ति पान्ति दुरिताद्वेगापगायाः स्फुर-
द्वेगोद्वेजितवाजिमेधमखकृद्वेधांसि पाथांसि नः ॥ २६७ ॥

इतश्च सखे चक्षुर्निक्षिप्यताम् ॥ १०७ ॥

य एष राजत्कटकः सदालिभिः समाश्रितः शोभनदानसंपदा ॥
स नित्यशुद्धं वरदं-तमुद्वहन्यथार्थनामा गजभूभृदीक्ष्यते ॥ २६८ ॥

सभक्तिप्रकर्षमञ्जलिं बद्ध्वा—

द्विपाचलमुपाश्रितं त्रिदशपादपस्वर्गवी-
त्रपाकरमुपास्महे दिगधिपावनं पावनम् ॥

---

तामेव वर्णयति—**माधुर्येति** । माधुर्यस्य मधुरतायाः अध्ययनार्थं शिक्षणार्थं उपसन्नाः संमिलिताः मधुनः तीरस्थवृक्षरसस्य निष्यन्दा बिन्दवो येषु तानि, पुनश्च मन्दानिलेन मन्दवायुना व्यालोलन्ति चञ्चलानि तटयोस्तीरयोः चारुभूरुहाणां सुन्दरवृक्षाणां शिखाभ्यः अग्रेभ्यः निष्पातीनि पतनशीलानि यानि पुष्पाणि तैः अधिकैः प्रवृद्धैरित्यर्थः । डिण्डीरैः फेनैः "डिण्डीरोऽब्धिकफः फेनः" इत्यमरः । स्मितवन्ति मन्दहास्ययुक्तानीव स्थितानि, अपि च स्फुरता वेगेन जवेन उद्वेजितः यज्ञभङ्गभिया दुःखितः, वाजिमेधं अश्वमेधं नाम मखं यज्ञं करोतीति तत्कृत् वेधाः ब्रह्मा येषां तानि वेगापगायाः वेगवत्या नाम नद्याः पाथांसि उदकानि, नः अस्मान् दुरितात् पापात् पान्ति रक्षन्ति । पाठान्तरे, नः पान्तु रक्षन्तु इत्यर्थः । पुरा किल ब्रह्मदेवे काञ्च्यामश्वमेधं कुर्वति सति तद्विनाशार्थं सरस्वत्येव वेगवतीरूपेण यज्ञवेदिमावृणोत् इति पौराणिकी कथात्रानुसंधेया ॥ २६७ ॥

**इत इति** । हे सखे, इतः अस्मिन्प्रदेशे चक्षुः दृष्टिः निक्षिप्यतां दीयताम् ॥ १०७ ॥

**य इति** । य एष पुरो दृश्यमानः पर्वतः राजन् शोभमानः कटकः नितम्बभागः यस्य सः, राजन्तौ शोभमानौ कटौ गण्डस्थले यस्य स राजत्कटक इति च । "कटकोऽस्त्री नितम्बोऽद्रेः" "गण्डः कटो मदो दानं" इत्युभयत्राप्यमरः । अत एव सतां साधूनामालिभिः पङ्क्तिभिः, सदा अलिभिर्भ्रमरैश्च, शोभनानां शुभफलप्रदानां दानानां, शोभनस्य दानस्य मदोदकस्य च संपदा समृद्ध्या च समाश्रितः नित्यं सततं शुद्धं निर्मलं श्वेतवर्णं च, तं भक्तेष्टफलदातृत्वेन प्रसिद्धं वरदं एतन्नामकं भगवन्तं, वरं सुन्दरं दन्तं रदनं च, उद्वहन् धारयन् अत एव यथार्थनामा अन्वर्थनामा सः गजभूभृत् हस्तिशैलः, गजानां भूभृत् राजा च ईक्ष्यते अवलोक्यते ॥ २६८ ॥

अतीव भक्तिप्रवणान्तःकरण आह—**द्विपाचलमिति** । द्विपाचलं हस्तिशैलं

---

१ 'पपन्न.' २ 'पान्तु.' ३ 'मधु.' ४ 'निरूप्यताम्.'

कृपाशिशिरलोचनं कृतभवव्यथामोचनम्
वपासुरभिलाधरं वरदनाम धाम स्थिरम् ॥ २६९ ॥

कृशानुमामन्त्र्य—

वरदं भो भज सततं शरदम्भोरुहविलोचनं देवम् ॥
परदम्भोपहतिकरं हर-दम्भोलिधर-मुखमखाशनुतम् ॥ २७० ॥

पुनः सानुस्मरणरोमाञ्चम्—

तापत्रयप्रशमनादमृतं ग्रहीतुम्
तामेव वैधहयमेधवपामुपासे ॥
अम्भोधिजाधरसुधारसवासितेन
या चुम्बिता वरदराजमुखाम्बुजेन ॥ २७१ ॥

---

उपाश्रितं, त्रिदशपादपः कल्पवृक्षः स्वर्गवी कामधेनुश्च तयोः त्रपाकरं लज्जोत्पादकं, भक्तेष्टप्रदानेनेति भावः। दिशां अधिपाः इन्द्रादयो लोकपालास्तान् अवति दैत्यादिदुष्टजनविनाशनेन रक्षतीति तथाभूतं, स्वतः पावनं पवित्ररूपं, कृपया दयया शिशिरे शीते लोचने यस्य तथाभूतं, कृतं भवव्यथायाः संसारपीडायाः मोचनं मुक्तिर्येन तं, वपया ब्रह्मकृताश्वमेधीयया सुरभिलः सुगन्धयुक्तः अधरः अधरोष्ठो यस्य सः तं, सुरभिलेति प्रामादिकोऽयं प्रयोगः। इलच्प्रत्ययविधायके तुन्दादिगणे सुरभिशब्दस्य पाठाभावात्। नाप्ययमाकृतिगणः। तस्मात् 'वपासुरभितामनं' इति पाठान्तरं पुस्तकान्तरे दृश्यते, तदेव युक्ततरमिति ज्ञेयम्। तत्र तारकादित्वादितच्प्रत्यये सुरभितेति प्रयोगस्य सुसाध्यत्वात्। तत् वरदनाम स्थिरं धाम वैष्णवं तेजः वयं उपास्महे भजामहे ॥ २६९ ॥

**कृशानुं** संबोध्याह—**वरदमिति**। भो **कृशानो,** शरदि शरदृतौ ये अम्भोरुहे कमले ते इव विलोचने नेत्रे यस्य तं परेषां शत्रूणां दम्भस्य गर्वस्य उपहतिकरं नाशकरं, हरः शिवश्च दम्भोलिधरः वज्रधर इन्द्रश्च तौ मुखे अग्रे येषां तैर्मखाशैर्यज्ञभुग्भिः देवैः नुतं स्तुतं, देवं वरदं सततं निरन्तरं भज उपास्स्व। मैनं दोषदृष्ट्याद्राक्षीरिति भावः ॥ २७० ॥

**तापत्रयेति**। तापानां आध्यात्मिकाधिभौतिकाधिदैविकात्मकानां त्रयस्य प्रशमनात् नाशं प्राप्येत्यर्थः। ल्यब्लोपे पञ्चमी। अमृतं जन्म-मरणराहित्यं मोक्षमिति यावत्। ग्रहीतुं स्वीकर्तुं, तां प्रसिद्धां विधेर्ब्रह्मणोऽयं वैधः स चासौ हयमेधोऽश्वमेधयज्ञः तत्सम्बन्धिनीं वपामेव उपासे सेवे। तस्याः सेवनार्हत्वमुपपादयति—**अम्भोधिजेति**। या वपा अम्भोधिजाया लक्ष्म्याः अधर एव सुधारसोऽमृतरसस्तेन वासितेन सुगन्धयुक्तेन वरदराजस्य भगवतो मुखाम्बुजेन मुखकमलेन चुम्बिता आस्वादिता। अतस्तामेवोपासे इति ॥ २७१ ॥

---

१ 'वपासुरभितामनं.'

पुनः सानन्दम्—

भुवनवहनशीला सिन्धुरागं[1] भजन्ती
जयति वरदमूर्तिः साधु वेगापगा च ॥
दमयितुमवतीर्णा धातृयज्ञं द्वितीया
सफलयितुमिहाद्या सादरा[2] प्रादुरासीत् ॥ २७२ ॥

कृ०—वयस्य तवेयं जयानभिज्ञे तस्मिन् जयतीत्युक्तिरयुक्ता। सवनसफलीकरणभणितिरपि तत्प्रातिकूल्यभाजि[3] नोचिता ॥ १०८ ॥

तथाहि—

अजयज्ञोद्भवे तस्मिन्कथं नाम जयज्ञता? ॥
सवनाशानुकूले का सवसाफल्यकारिता? ॥ २७३ ॥

---

**भुवनेति**। भुवनानां स्वर्गादिलोकानां जलानां च वहनं धारणं प्रवहणं च शीलं स्वभावो यस्याः सा, सिन्धुरः गजः तन्नामा यः अगः पर्वतस्तं हस्तिशैलमिति यावत्। पक्षे सिन्धौ समुद्रे यो रागः प्रेमा तं च भजन्ती सेवमाना सा वरदमूर्तिः वरदाभिधाना भगवतो मूर्तिः, वेगापगा वेगवतीनाम नदी च साधु यथा तथा जयति। तत्र द्वितीया वेगापगा धातुर्ब्रह्मणः यज्ञं दमयितुं विनाशयितुमवतीर्णा आविर्भूता। आद्या वरदराजमूर्तिस्तु इह काञ्च्यां नगर्यां, धातृयज्ञं सफलयितुं सफलं कर्तुं, सादरा आदरसहिता सती प्रादुरासीत् प्रकटीबभूव ॥ २७२ ॥

**वयस्येति**। हे वयस्य मित्र, जये अनभिज्ञः अनिपुणः जयानर्ह इत्यर्थः। तस्मिन् वरदराजे इयं तव 'जयति' इत्युक्तिः अयुक्ता अयोग्या। तथा सवनस्य यज्ञस्य सफलीकरणभणितिः सफलीकरणोक्तिरपि, तस्य यज्ञस्य प्रातिकूल्यं विरुद्धत्वं भजतीति तद्भाक् तस्मिन् नोचिता न योग्या ॥ १०८ ॥

उक्तार्थमेव प्रपञ्चयति—**अजेति**। जयं सर्वोत्कर्षं न जानातीत्यजयज्ञः, अजस्य ब्रह्मदेवस्य यज्ञोऽश्वमेधश्च तस्मात् उद्भवे उत्पन्ने तस्मिन् वरदे जयज्ञता जयज्ञानत्वं कथं नाम? अपि तु नास्त्येवेत्यर्थः। तथा सवस्य यज्ञस्य नाशे विनाशे अनुकूलः, सवनाशानां यज्ञभुजां देवानां अनुकूले च तस्मिन्, सवस्य यज्ञस्य साफल्यकारिता सफलीकरणत्वं का नाम? नास्त्येवेत्यर्थः। अत्र मुद्रितपुस्तकटीकायां अन्यदप्यर्थान्तरं दृश्यते। यथा—'पूर्वार्द्धे कथं नामेत्यत्र 'कथं न अम' इति छित्त्वा, हे अम भाग्यरहित कृशानो, तस्मिन् वरदे जयज्ञता कथं नास्तीति काकुः। अस्त्येवेत्यर्थ इति। उत्तरार्द्धे च 'कासव—' इत्यत्र अकारं प्रश्लिष्य असवसाफल्यकारिता केति काकुः। नास्त्येव? अपि तु सवसाफल्यकारितैवास्तीत्यर्थान्तरं चातुर्यात्कल्पयन्ति' इति। श्लेषालंकारः ॥ २७३ ॥

---

१ 'सिन्धुराजं.' २ 'सादरं.' ३ 'तत्प्रातिकूल्यभाजिनि नोचिता.'

**विश्वावसुः**—सखे श्लेषभङ्ग्यैव दोषमुद्भावयता भवता तस्मिन्नखिलहेयप्रत्यनीकतैवाविष्कृता । युक्तं चैतत् ॥ १०९ ॥

पद्मोल्लासविधायिनि सत्पथदीप्तिकृति चक्रभव्यकरे ॥
भास्वति वरदे भविता न जातु दोषानुषङ्गवार्तापि ॥ २७४ ॥

समन्तादवलोकयन्नञ्जलिं बद्ध्वा—

सेवेऽनन्तसरः श्रये करिगिरिं श्रीपुण्यकोट्या समम्
ध्यायाम्युत्तरवेदिमत्र महितं देवाधिराजं भजे ॥
कल्याणीं कलयामि कंजनिलयां कल्याणकोटिस्थिता-
मीडे राघव-यादवादिमकिटीन्वन्दे मुकुन्दाश्रितान् ॥ २७५ ॥

इति प्रतीच्यां दिशि किंचिदन्तरमतिक्रम्य सविस्मयानन्दम्—

---

अथ **विश्वावसुः कृशानोः** श्लिष्टार्थमभिनन्दयन्नाह—**सखे इति** । हे सखे, श्लिष्यति एकीभवति अर्थबाहुल्यं यत्र स श्लेषः तस्य भङ्ग्या रीत्या दोषमुद्भावयता आरोपयता भवता, तस्मिन् वरदे अखिलानां सकलानां हेयानां दोषाणां प्रत्यनीकता विरोधितैवाविष्कृता प्रकटीकृता । अत एव एतत् युक्तम् ॥ १०९ ॥

युक्तत्वमेव प्रतिपादयति—**पद्मेति** । पद्मानां कमलानां पद्माया लक्ष्म्याश्च उल्लासं विकासं विधत्ते तच्छीलः उल्लासविधायी तस्मिन्, सत्पथस्य आकाशस्य सन्मार्गस्य च दीप्तिं प्रकाशं करोतीति दीप्तिकृत् तस्मिंश्च, चक्राणां चक्रवाकानां भव्यकरे संभोगरूपकुशलसाधके "भावुकं भविकं भव्यं कुशलं" इत्यमरः । चक्रेण सुदर्शनेन च भव्यः शोभनः करो हस्तो यस्य तथाभूते च, वरान् इष्टार्थान् ददाति तस्मिन् भास्वति सूर्ये, तेजस्विनि भगवति वरदे देवे च, दोषानुषङ्गस्य रात्रिसंबन्धस्य, दोषाणां दुरितानां अनुषङ्गस्य संबन्धस्य च वार्ता कथा जातु कदाचिदपि न भविता नैव भविष्यति ॥ २७४ ॥

**सेवे इति** । अहं अनन्तसरो नामात्रत्यं तीर्थं सेवे, करिगिरिं हस्तिशैलं श्रये आश्रये, श्रीपुण्यकोट्या विमानेन समं सह उत्तरवेदिं ब्रह्मकृताश्वमेधीयां, ध्यायामि । अत्र उत्तरवेद्यां महितं पूजितं देवाधिराजं श्रीवरदं भजे, तथा कल्याणानां कोटौ प्रकर्षे "कोटिः स्त्री धनुषोऽग्रेऽश्रौ संख्याभेद-प्रकर्षयोः" इति मेदिनी । अर्थात् श्रीविष्णौ विमाने वा (?) स्थितां, तत्र विष्णौ प्रेमाश्रयेण, विमाने चोपवेशनेन च स्थितिरिति बोध्यम् । कल्याणीं स्वयं कल्याणरूपिणीं कंजनिलयां पद्मालयां लक्ष्मीं, कलयामि शरणं व्रजामि । राघवो रामचन्द्रश्च यादवः श्रीकृष्णश्च आदिमकिटिः आदिवराहश्च तान् । "वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः" इत्यमरः । ईडे स्तौमि, तथा मुकुन्दाश्रितान् श्रीकृष्णभक्तांश्च वन्दे [illegible]

---

ता.' २ 'श्रीपुण्यकोट्याश्रयम्.'

अत्र हि—

स्वावज्ञानसमुन्मिषद्रुषि सरस्वत्यां विरिञ्च्याध्वर-
प्रत्यूहाय नदीप्रवाहविधि[1]ना पर्यापतन्त्यामहो ॥
दूने तु[2] द्रुहिणे गणे च मरुतां दीने मखं विघ्नत[3]:
पातुं सेतुकृदेष[4] सेतुरभवत्पक्षीन्द्रकेतुः स्वयम् ॥ २७६ ॥

किंच—

परं वेगं सरस्वत्या उद्वेगमपि तत्पतेः ॥
एष[5] सेतुर्विधरणोप्यरुणद्युगपत्प्रभुः ॥ २७७ ॥

---

**स्वावज्ञानेति**। स्वस्याः अत्मनः अवज्ञानेन अपमानेन समुन्मिषती उत्पद्यमाना रुट् कोपो यस्याः "कोप-क्रोधामर्ष-रोष-प्रतिघा रुट्-क्रुधौ स्त्रियौ" इत्यमरः। तस्यां सरस्वत्यां विरिञ्च्याध्वरे ब्रह्मकृताश्वमेधयज्ञे प्रत्यूहाय विघ्नं कर्तुं "क्रियार्थोपपदस्य—" इत्यादिना चतुर्थी। "विघ्नोऽन्तरायः प्रत्यूहः" इत्यमरः। प्रवाहविधिना वेगवतीप्रवाहरीत्या, पर्यापतन्त्यां सत्यां, द्रुहिणे ब्रह्मणि तु, दूने यज्ञविघ्नेन दुःखिते सति 'दु गतौ' इत्यस्मात् क्तप्रत्यये "ल्वादिभ्यः" इति सूत्रस्थ-"दुग्वोर्दीर्घश्च" इति वार्तिकेन नत्वं दीर्घश्च। मरुतां देवानां गणे समुदाये च दीने खिन्ने सति, मखं यज्ञं विघ्नतः विघ्नात् पातुं रक्षितुं, सेतुकृत् प्रवाहप्रतिबन्धकृत्, एषः पक्षीन्द्रकेतुः गरुडध्वजो विष्णुः, स्वयमेव सेतुरभवत्। अहो भगवतः प्रभाव इत्यर्थः ॥ २७६ ॥

**परमिति**। एषः भगवान् श्रीवरदनामा प्रभुः विधरणो धारकः, वेदोक्तविधानस्येत्यर्थात्। अत एव सेतुः, परं, एतदुभयान्वयि। सरस्वत्या वाग्देव्याः वेगं प्रवाहं, तस्याः सरस्वत्याः पतेः ब्रह्मणः उद्वेगं दुःखं च, युगपत् एकदैव न्यरुणत् निरुद्धवान्। तुल्ययोगितालंकारः। "नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता" इति तल्लक्षणात्। एवं सति भावदर्पणकृता 'एष सेतुर्विधरण–' इति प्राचीनबहुपुस्तकानुकूलं पाठमनादृत्य 'स एष सेतूद्धरणः' इति एकदेशीयपाठं स्वीकृत्य च 'उद्धरण' इत्यस्य 'भञ्जकः निष्पादकश्च' इत्यर्थद्वयं कृत्वा, 'अत्र सेतोर्भञ्जन–निष्पादनयोः श्लेषभित्तिकयाभेदाध्यवसायाद्विरोधाभासः' इति यदुक्तं, तत्तस्य स्थूलबुद्धित्वं पिशुनयति। सरलपाठसत्त्वे तस्मात्सरलार्थलाभे च सति बुद्धिपुरःसरं श्लेषार्थकरणस्यास्वारस्यात्। अत एव उद्धरणपदस्य 'भञ्जकः' इत्यर्थश्चिन्त्यः अप्रसिद्धत्वात्। इत्यलमप्रस्तुतपल्लवितेन ॥ २७७ ॥

---

१ 'विधया'. २ 'दूने च द्रुहिणे', 'दूने तद्द्रुहिणे'. ३ 'विघ्नितम्'. ४ 'देव'. ५ 'स एष सेतूद्धरणो न्यरुणद्युगपत्'.

अपि च—

आशामीशानबन्धोश्चरणनखरुचां धारया स्मेरयन्ती
कुम्भी[1]डिम्भस्य काष्ठामपि मणिमुकुटन्यु[2]प्तमुक्तामयूखैः ॥
पर्यङ्के शब्दविद्यापरिमलसरले पङ्कजस्पर्धिनेत्रा
व्यक्तिर्वेगापगायां स्वपिति सं[3]मुदिता काऽपि तापिच्छवर्णा॥२७८॥

सप्रत्यभिज्ञम्—

प्राजापत्यमखान्तरायतटिनीपाथोनिरोधोद्यतः
प्राप्तः पावनहेमतामरसिनीतीरं कृपारम्यधीः ॥
क्षेमं कोमलवल्लिकासहचरः पुष्णातु कृष्णाम्बुद-
च्छायः सोऽयमवातरन्महति यो रङ्गे भुजङ्गेशयः ॥२७९॥

---

**आशामिति ।** ईशानस्य शंकरस्य बन्धोः कुबेरस्य आशां उत्तरदिशं, चरणनखरुचां पादनखकान्तीनां धारया परंपरया, कुम्भीडिम्भस्य कुम्भबालकस्य अगस्त्यस्येत्यर्थः । काष्ठां दक्षिणां दिशमपि, "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इति पूर्वत्रात्र चामरः । अगस्त्यो हि गर्वात्प्रवृद्धं विन्ध्याद्रिं नमयित्वा दक्षिणां दिशं गतः स तत्रैव स्थित इत्यादिकथा काशीखण्डतोऽवगन्तव्या । मणिमयमुकुटे न्युप्तानां खचितानां मुक्तानां मयूखैः किरणैश्च स्मेरयन्ती प्रकाशयन्ती, दक्षिणदिशि शिरः उत्तरदिशि पादौ च कृत्वा शयानेत्यर्थः । पङ्कजस्पर्धिनेत्रा कमलतिरस्कारकर्तृ-, नयना, तापिच्छवर्णा तमालवच्छ्यामवर्णा, अत एव कापि अनिर्वचनीयमाहात्म्या, अत्र समुदिता उत्पन्ना व्यक्तिः श्रीरङ्गनायकरूपा, वेगापगायां तस्यास्तीरे इति लक्षणयार्थः । शब्दविद्यायाः व्याकरणमहाभाष्यरूपायाः परिमलेन सुगन्धेन सरले उदारे पर्यङ्के, अर्थात् शेषशयने स्वपिति शेते । व्याकरणमहाभाष्यकृत् पतञ्जलिर्भगवान् शेषावतार इति प्रसिद्धत्वादियमुक्तिः ॥ २७८ ॥

**प्राजापत्येति ।** कृष्णाम्बुदस्य नीलवर्णमेघस्येव छाया कान्तिर्यस्य सः, मेघवच्छ्यामवर्ण इत्यर्थः । "छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः । सः भुजङ्गेशयः शेषशायी, अस्माकमिति शेषः । क्षेमं कुशलं पुष्णातु वर्धयतु । कीदृशः भुजङ्गेशयः । प्रजापतेर्ब्रह्मणः अयं प्राजापत्यः स चासौ मखोऽश्वमेधयज्ञश्च प्राजापत्यमखः तस्य अन्तरायरूपायाः विघ्नरूपायास्तटिन्याः वेगवतीनद्याः, पाथसो जलस्य निरोधार्थं उद्यतः आविर्भूतः । पावना पवित्रा या हेमतामरसिनी सुवर्णकमलयुक्ता काचित्सरसी तस्यास्तीरं प्राप्तः । अत एव कृपया दयया हेतुभूतया रम्या धीर्बुद्धिर्यस्य सः, कोमलवल्लिकायाः एतन्नाम्न्याः पत्न्याः सहचरः यः अयं महति रङ्गे एतन्नामक्षेत्रे, अवातरत् प्रकटीबभूव । स इति संबन्धः ॥ २७९ ॥

---

१ [illegible] २ [illegible]स्त'. ३ 'भगवती'.

पुनरनुध्यायन् सानन्दम्—

शतमखमणिस्तोमश्यामं शयानमहीश्वरे
शशिसखमुखं राजीवाक्षं समुन्नतनासिकम् ॥
महितचरणं धातुः पत्न्या महस्तमसः परम्
हृदि लगतु मे बिम्बोष्ठं तद्यथोक्तकृदाह्वयम्[1] ॥ २८० ॥

किंच—

वेगवतीसेतुतया प्रागवतीर्णादिदेवता विनतान् ॥
द्रागवतीयं दुरिताद्रागवती कलशजलधिकन्यायाम् ॥ २८१ ॥

कृ०—अहो कथमाशुकविः सन्नपि भवानमुं देवमभिनन्देति[2] ? तथाहि ॥ ११० ॥

अधः करोत्यादिमशाब्दिकोरगं कलानिधिं धिक्कुरुते मुखेन यः ॥
कृतान्तरायस्य सरस्वतीजवे स्तवे रुचिस्तस्य कथं भवेत्कवेः ॥ २८२ ॥

---

**शतमखेति** । शतमखमणीनां इन्द्रनीलानां स्तोमः समूह इव श्यामं नीलवर्णं, अहीश्वरे शेषे शयानं स्वपत्, शशिनः सखि मित्रभूतं मुखं यस्य तत्, चन्द्रतुल्यमुखमित्यर्थः । राजीवाक्षं कमलनेत्रं, समुन्नता नासिका यस्य तत्, धातुः प्रजापतेः पत्न्या सरस्वत्या महितौ पूजितौ चरणौ यस्य तत्, बिम्बमिव ओष्ठौ यस्य तत्, यथोक्तकृत् उक्तमनतिक्रम्य कारीति आह्वयः नाम यस्य तत्, यद्वा, अत्र भावदर्पणकृदर्थान्तरमाह— 'यथा पूर्वार्द्धे शकारादित्वेन उत्तरार्धे मकारादित्वेन उक्तं शममित्यर्थः । कुर्वन्तीति शमकृतः शान्तिसुखदायका आह्वया नामानि यस्येति ।' तमसः अज्ञानात् परं ज्ञानरूपमित्यर्थः । तत् महः वैष्णवं तेजः मे हृदि लगतु तिष्ठतु ॥ २८० ॥

**वेगवतीति** । किंच इयं आदिदेवता श्रीरङ्गनायकमूर्तिः, वेगवत्या नद्याः सेतुतया सेतुवन्निरोधरूपेण प्राक् ब्रह्मकृताश्वमेधकाले अवतीर्णा आविर्भूता, कलशजलधिः क्षीरसागरस्तस्य कन्यायां लक्ष्म्यां रागवती प्रेमवती, विनतान् भक्तिनम्रान् दुरितात् पापात् द्राग् झटिति अवति संरक्षति ॥ २८१ ॥

अथ **कृशानु**रुपपादितमेवार्थं द्रढयितुं श्लेषरूपं दूषणमाह—**अहो इति** । अहो इत्याश्चर्ये । भवान् आशुकविः शीघ्रकविः सन्नपि, अनेन तस्य सदसद्विवेकसामर्थ्यं सूचितम् । अमुं श्रीरङ्गनायकं देवं कथं अभिनन्दति ? ॥ ११० ॥

अनभिनन्दनीयत्वमेवोपपादयति—**अध इति** । यः रङ्गनाथः आदिमः प्रथमश्चासौ शाब्दिकः शब्दशास्त्रवेत्ता व्याकरणशास्त्रज्ञ इत्यर्थः । "तदधीते तद्वेद" इत्यधिकारे वसन्तादित्वाट्ठक् । स चासौ उरगः शेषः तं, तेनैव पतञ्जलिरूपेण महाभाष्यकरणात् । अधः करोति तिरस्करोति शयनार्थमधःप्रदेशे करोतीति तु वास्तवो-

---

१ 'यथोक्तकृदन्वयम्'. २ 'अभिनन्दयसि', 'अभिनन्दसि'.

**वि०**—किमेभिः श्लेषैकावलम्बनैर्दोषैरमुं देवमाश्रितेषु जनेषु खल्व-प्रत्यूहः सरस्वतीप्रवाहो विजयते ॥ १११ ॥ पश्य—

कल्पन्ते कामरामास्फुरदधरसुधागर्वसर्वस्वमोषो-
द्युक्तान्युक्तान्यमीषां रसिकजनमुदे धातृयोषा हि येषाम् ॥
श्लाघावेलासु दोलायितनिजमुकुटाकल्पकल्पद्रुसूनो-
ड्डीनालिध्वानतानाकलनपरिमिलच्चारुवीणाभिगाना ॥२८३॥

किंचिदुत्तरतो दृष्टिमाधाय साञ्जलिबन्धम्—

ऽर्थः । तथा मुखेन पक्षे वाचा कलानिधिं चन्द्रं, कलानां निखिलविद्यानां निधिं बृहस्पतिं च धिक्कुरुते धिक्कारं करोतीत्यर्थः । तथा सरस्वत्याः वाण्याः वेगवत्या नद्याश्च जवे प्रसारणे वेगे च कृतः अन्तरायो विघ्नं येन सः, तस्य स्तवे स्तुतौ विषये, कवेः पण्डितस्य रुचिः कथं भवेत्? अपि तु नैव भवेदेवेत्यर्थः ॥ २८२ ॥

**किमिति** । एभिस्तवोक्तैः श्लेषैकावलम्बनैः श्लेषैकाश्रयैः दोषैः किम्? वस्तुतः अमुं श्रीरङ्गेश्वरं देवं आश्रितेषु, भक्त्येति शेषः । जनेषु अप्रत्यूहः निष्प्रतिबन्धः सरस्वतीप्रवाहो वाग्देवताप्रसारः विजयते खलु ॥ १११ ॥

सरस्वतीविजयमेव सविस्तरमाह—**कल्पन्त इति** । अमीषां श्रीरङ्गनाथाश्रितानां उक्तानि भाषणानि कामरामायाः मदनपत्न्या रत्याः स्फुरति शोभने अधरे या सुधा अमृतं तस्य यत् गर्वसर्वस्वं अभिमानरूपं धनं तस्य मोषे अपहरणे उद्युक्तानि तत्पराणि सन्ति । अर्थात् रत्यधरापेक्षयापि अतीव मधुराणीति ज्ञेयम् । रसिकानां जनानां मुदे आनन्दे कल्पन्ते । तदानन्दसंपादकानि भवन्तीत्यर्थः । "क्लृपि संपद्यमाने च" इति चतुर्थी । हि अत एव येषां भक्तानां तदुक्तीनां वा, श्लाघावेलासु प्रशंसाकालेषु धातुर्ब्रह्मणः योषा पत्नी सरस्वती दोलायितेभ्यः दोलावदाचरद्भ्यः शिरःकम्पनेन चलद्भ्य इत्यर्थः । निजमुकुटस्य स्वकीयकिरीटस्य आकल्पेभ्यः भूषणभूतेभ्यः कल्पद्रुसूनेभ्यः कल्पवृक्षपुष्पेभ्यः उड्डीनाः उत्पतन्तः ये अलयो भ्रमरास्तेषां ध्वानवत् निनादवत् गुञ्जारवशब्दवदिति यावत् । यत्तानं गानोत्कर्षसंपादकस्वराणां आरोहावरोहकरणं तस्य आकलनेन तदनुसरणेनेति यावत् । परिमिलत् विशेषतः शोभमानं चारु वीणया अभिगानं यस्याः सा तथाभूता भवति । एतेषामुक्तानि श्रुत्वा भगवती सरस्वत्यपि सशिरःकम्पाभिनन्दनं गायति, तदा च तच्छिरस्थकुसुमोत्थितभ्रमरारावः तस्याः गानस्वरश्च द्वावप्येकरूपौ भवत इत्यर्थः । यद्येतावत्तद्भक्तानां माहात्म्यं, तर्हि प्रत्यक्षं भगवतः श्रीरङ्गनाथस्य किमु वक्तव्यमिति भावः ॥ २८३ ॥

**किंचिदिति** । उत्तरतः उत्तरस्यां दिशि दृष्टिं आधाय दत्त्वा । उत्तरतोऽवलोक्येत्यर्थः ।

जयते'. २ 'परिकनत्'.

क्षेमारम्भनिदानमाप्लवजुषां हेमाभिरामाम्बुज–
स्तोमायातमरन्दलम्भि[1]तपयोभूमा स्वभूमानिता ॥
सह्याद्रिप्रभवासमानविभवा मह्याम[2]सह्यार्तिहृत्
पुह्या[3] योगिवरेण्यपुण्यसरसी द्रुह्यादसह्यांहसे ॥ २८४ ॥

इति विमानं दक्षिणतः प्रस्थाप्य सादरमक्षि निक्षिप्य प्राञ्जलिर्भूत्वा–
॥ ११२ ॥

विश्वाह्लादकरीं करीन्द्रसरसीकह्लारपारम्परी–
भव्यामोदधुरन्धरानिलजडे दिव्यालये जाग्रतीम्[4] ॥
कष्टापद्विनिवर्तिनीं घनतपःक्लिष्टात्मनां योगिना–
मिष्टामष्टभुजां भजा[5]मि विबुधैरा[6]राधितां देवताम् ॥२८५॥

**क्षेमेति** । इयं योगिनां तपस्विनां वरेण्या स्पृहणीया पुण्या च सरसी सरः, पुह्या नाम, असह्यं सोढुमशक्यं च तत् अंहः पापं तस्मै द्रुह्यात् । "क्रुध-द्रुह–" इत्यादिना चतुर्थी । असह्यदुःखोत्पादकं पापं नाशयत्वित्यर्थः । कथंभूता पुह्या । आप्लवं स्नानं जुषन्ति सेवन्ते कुर्वन्तीति यावत् । तेषां क्षेमाणां कल्याणानामारम्भे उत्पादने निदानमादिकारणम् । "निदानं त्वादिकारणम्" इत्यमरः । अत एव स्वभुवा ब्रह्मणा मानिता पूजिता, कुतः । सह्याद्रेः प्रभव उत्पत्तिर्यस्याः सा कावेरी नदी तया समानस्तुल्यः विभवो माहात्म्यं यस्याः सा तथाभूता । अनेन विशेषणत्रयेण तस्याः पापनाशनसामर्थ्यं द्योत्यते । पुनः कीदृशी । हेमवत् सुवर्णवत् अभिरामाणि मनोहराणि यान्यम्बुजानि कमलानि तेषां स्तोमात् समूहात् आयातः उत्पन्नः मरन्दः मकरन्दः तेन लम्भितः संप्राप्तः पयोभूमा उदकातिशयो यस्याः सा । अत एव मह्यां पृथिव्यां असह्या सोढुमशक्या पिपासादिरूपा आर्तिः पीडा तां हरतीति हृत् । सर्वदा जलपूर्णत्वात् पिपासादिनिखिलदुःखनाशिनीत्यर्थः ॥ २८४ ॥

**इतीति** । दक्षिणतो दक्षिणस्यां दिशि प्रस्थाप्य गमयित्वा । अक्षि नेत्रं निक्षिप्य प्रेरयित्वा, अवलोक्येत्यर्थः ॥ ११२ ॥

**विश्वेति** । विबुधैर्देवैः पण्डितैर्वा आसेवितां अष्टभुजां देवतां देवीं लक्ष्मीं भजामि आराधयामि । कीदृशीमष्टभुजाम् । विश्वस्य जगतः आह्लादकरीं आनन्दकरीम् । कष्टानां दुःखरूपाणां आपदां विनिवर्तिनीं नाशयित्रीम् । घनं संततं च तत् तपः तेन क्लिष्टः श्रान्तः आत्मा चित्तं येषां तेषां योगिनां इष्टां स्पृहणीयां, तपःकर्तॄणामिच्छितफलदात्रीमित्यर्थः । तत्र हेतुमाह—करीन्द्रसरसी हस्तिसरो नाम तीर्थं तस्यां या कह्लाराणां रक्तकमलानां पारंपरी पङ्क्तिः तस्याः भव्यस्य मनोहरस्य आमोदस्य सुगन्धस्य धुरंधरेण धूर्वहेण तद्वाहकेनेत्यर्थः । अनिलेन वायुना जडे

१ 'लम्बित', 'तुन्दिल'. २ 'मह्यां मम ह्यार्तिं'. ३ 'पुण्या'. ४ 'जुषीम्'.
५ 'नमामि'. ६ 'आसेविताम्'.

अथ प्रतीच्यां दिशि किंचिदन्तरं विमानमानीय सहर्षम्—

त्रिदशाकलितस्नेहस्फूर्तिमान् शमयंस्तमः ॥
भाति दीपप्रकाशोऽत्र शरणागतबोधकृत् ॥ २८६ ॥

कृ०—दीपप्रकाशसंज्ञा देवेऽस्मिन्नुत्तमस्फुरणे ॥
रात्रिचरप्रतिकूले नदीपजातोल्लसद्रुचौ नार्हा ॥ २८७ ॥

वि०—मन्दमते मैवं भाणीः ॥ ११३ ॥

---

शिशिरे, शीतले इत्यर्थः । "शिशिरो जडः" इत्यमरः । दिव्यालये दिव्यमन्दिरे जाग्रतीं प्रत्यक्षरूपेण सदा भक्तेष्टफलप्रदामित्यर्थः । तामिति संबन्धः ॥ २८५ ॥

**त्रिदशेति** । तृतीया तारुण्यरूपा दशा अस्ति येषां ते त्रिदशाः देवास्तेषु आकलिता उत्पन्ना स्नेहस्य प्रेम्णः स्फूर्तिः आविर्भावः अस्यास्तीति स्फूर्तिमान् । "सदा युवानो देवासः" इति श्रुत्या देवानामेव सदा तरुणत्वं प्रोक्तम् । पक्षे तिसृभिः दशाभिर्वर्तिभिः आकलितेन संबद्धेन स्नेहेन तैलघृतादिना स्फूर्तिः कान्तिरस्यास्तीति च । तमः अज्ञानं अन्धकारं च शमयन् निवारयन् सन्, अत एव शरणं रक्षणार्थं गृहं च "शरणं गृह-रक्षित्रोः" इत्यमरः । आगतानां प्राप्तानां बोधं ज्ञानं स्वप्रकाशेन यथास्थानस्थितवस्त्ववगमं च करोतीति तत्कृत् दीपप्रकाशः एतन्नामा भगवान् दीपस्य प्रकाशश्च अत्र पुरोवर्तिस्थले भाति प्रकाशते ॥ २८६ ॥

**दीपेति** । अस्मिन् त्वया प्रशंसिते उद्गतं उत्पन्नं तमसः अज्ञानस्य अन्धकारस्य च स्फुरणं यस्मात्, पक्षे उत्तमं इतरविलक्षणं स्फुरणं प्रकाशो यस्य तस्मिन् इति चार्थः । "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" "भीषास्माद्वातः पवते भीषोदेति सूर्यः" इत्यादिश्रुति-स्मृतिवचनात् । रात्रौ निशायां चरन्ति परिभ्रमन्ति ते रात्रिचरा राक्षसाश्च "राक्षसः कोणपः क्रव्यात् क्रव्यादोऽस्रप आशरः । रात्रिंचरो रात्रिचरः" इत्यमरः । तेषां प्रतिकूले विरुद्धे, दीपाज्जाता उत्पन्ना उल्लसन्ती प्रकाशमाना च रुचिः कान्तिः न विद्यते यस्य तस्मिन्, पक्षे नदीः पाति रक्षतीति नदीपः समुद्रः तस्माज्जाता उत्पन्ना लक्ष्मीः तस्यां उल्लसन्ती अनुदिनं वर्धमाना रुचिः प्रीतिर्यस्य तस्मिन्निति च । देवे श्रीविष्णुरूपे दीपप्रकाश इति संज्ञा नाम "संज्ञा स्याच्चेतना नाम" इत्यमरः । नार्हा न योग्या । अत्र निन्दायाः श्लेषार्थेन स्तुतौ पर्यवसानाद् व्याजस्तुतिरलंकारः ॥ २८७ ॥

मैवं भाणीः एवं मा वदेत्यर्थः । भणधातोर्लुङि "न माङ्योगे" ॥ ११३ ॥

प्रकटितदशावतारे प्रचुराज्याकलनभावितस्फुरणे ॥
दीपप्रकाशनाम क्षमं विभावर्युदितभीतिहरे ॥ २८८ ॥

## श्रीमद्वेदान्तदेशिकाचार्यवर्णनम्. २२

निरूप्य सानन्दम्—

श्रीरङ्गेश्वरशासनादधिगतश्रुत्यञ्चलाचार्यकम्
दान्तं यं कविवादिदन्तिहरिरित्यार्या वदन्ति क्षितौ ॥
सर्वस्यामपि हन्त तन्त्र[1]सरणौ स्वातन्त्र्यमासेदुषाम्
सुत्रामा स हि वेङ्कटेशकविरा[2]डत्राविरासीत्प्रभुः ॥ २८९ ॥

---

**प्रकटितेति ।** प्रकटितः दशायां वर्तिकायां अवतारः आविर्भावः येन, प्रकटिता दशसंख्याका अवताराः मत्स्य-कूर्मादयो येनेति च तस्मिन् । प्रचुरं बहुलं च तत् आज्यं घृतं च तस्य, पक्षे प्रचुरायाः आजेः राक्षससंग्रामस्य च "संग्रामाभ्यागमाहवाः । समुदायः स्त्रियः संयत्-समित्याजि-समिद्-युधः" इत्यमरः। आकलनेन स्वीकरणेन भावितं प्राप्तं स्फुरणं दीप्तिः प्रसिद्धिश्च यस्य तस्मिन्। विभावर्यां निशायां "निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा । विभावरी" इत्यमरः । उदितां उत्पन्नां भीतिं अन्धकारसंबन्धिनीमित्यर्थः । हरति निवारयतीति तद्धरस्तस्मिन् पक्षे अरिभ्यः शत्रुभ्यः उदितभीतिं हरतीति च तस्मिन् विभौ प्रभौ दीपप्रकाश इति नाम क्षमं योग्यमेव ॥ २८८ ॥

अथ वेदान्तदेशिकवर्णनमाक्षिपति—**निरूप्येत्यादि ।**

**श्रीरङ्गेति ।** श्रीरङ्गेश्वरस्य भगवतः शासनात् । ल्यब्लोपे पञ्चमी । आज्ञां प्राप्येत्यर्थः । अधिगतं स्वीकृतं श्रुतीनां वेदानामञ्चलानां अग्राणां उपनिषदां आचार्यकं व्याख्यातृत्वं येन तं, "मन्त्रव्याख्याकृदाचार्यः" इत्यमरः । अत एव दान्तं जितबाह्यान्तरिन्द्रियं, यं वेङ्कटेशं कवयः पण्डिताः वादिनश्च तद्रूपा ये दन्तिनो गजास्तेषां हरिः सिंह इति क्षितौ पृथिव्यां आर्याः श्रेष्ठा जनाः वदन्ति कथयन्ति । एतदेव सहेतुकमुपपादयति—हि यतः **सर्वस्यामपि**, हन्तेत्याश्चर्ये । तन्त्रसरणौ शास्त्रमार्गे स्वातन्त्र्यं आसेदुषां प्राप्तवतां मध्ये, सदेर्धातोः "भाषायां सद-वस-श्रुवः" इति भूतसामान्ये लिटि क्वसुः । "वसोः संप्रसारणम्" इति भसंज्ञायां संप्रसारणं च । सुत्रामा इन्द्रः सः वेङ्कटेशकविराट् प्रभुः अत्र काञ्च्यां आविरासीत् प्रकटीबभूव ॥ २८९ ॥

---

१ 'तर्क'. २ 'वेङ्कटेशगुरु'.

जनानुद्दिश्य—

भेदाभिदाविषयवादापतद्दुरुपपादार्थसाधकमदो—
त्सादावहाद्भुतमखादापगास्पदविनोदाभिजातभणितिः ॥
पादारविन्दनतखेदापहारचतुरोदारमाधवगुणा—
स्वादाभितुष्ट इह मोदाय वो भवतु वेदान्तदेशिकमणिः॥२९०॥

अपि च—

नानाम्नायपरिश्रमं कलयतां नास्त्येव शास्त्रेषु धीः
सत्योर्प्युभयोस्तयोर्न सुलभा सा हि क्षितौ साहिती ॥
अप्येतासु सतीषु नास्ति विनयो नाचार-भक्ति-क्षमा-
चातुर्यः स च सा च सा च स च ताश्चालम्ब्य खेलन्त्यमुम्॥२९१॥

---

**भेदेति**। किंच भो जनाः, वेदान्तदेशिकमणिः वेदान्ताचार्यश्रेष्ठः स वेङ्कटेशगुरुः इह काञ्च्यां नगर्यां, वो युष्माकं मोदाय आनन्दाय भवतु। कथंभूतः। भेदः जीवात्मनोः पृथक्त्वं च अभिदा तयोरैक्यं च ते विषये प्रतिपाद्ये ययोस्तथाभूतौ यौ वादौ तदर्थमापततां प्राप्तवतां, दुरुपपादस्य प्रतिपादयितुमशक्यस्य अर्थस्य भिन्नलैक्यान्यतररूपस्य साधकानां वादिनां मदस्य गर्वस्य उत्सादावहाः उच्छेदसंपादकाः अत एव अद्भुताः आश्चर्यरूपाश्च मखादा यज्ञभुजो देवास्तेषां आपगा गङ्गा नदी तस्याः स्पदस्य प्रवाहस्येव विनोदो विलासो यासां तादृशश्च। निखिलशास्त्राणां याथार्थ्यप्रतिपादनेन पापहारकत्वाद्गङ्गाप्रवाहविनोदसादृश्यम्। अत एव अभिजाता निर्मलाश्च भणितयो वचनानि यस्य सः तथाभूतः। पुनश्च पादारविन्दे चरणकमले नतानां भक्त्या नम्राणां खेदस्य क्लेशस्य अपहारे निवारणे चतुरस्य अत एव उदारस्य महतः "उदारो दातृ-महतोः" इत्यमरः। माधवस्य विष्णोः गुणानां भक्तवात्सल्यादीनां आस्वादेन अभितुष्टः। वेङ्कटेशकविरिति संबन्धः॥ २९०॥

**नानेति**। अपि च नानाम्नायेषु निखिलवेदेषु "श्रुतिः स्त्री वेद आम्नायः" इत्यमरः। परिश्रमं अध्ययनरूपं कलयतां कुर्वतां, शास्त्रेषु वेदान्तादिषु धीः अर्थज्ञानरूपा बुद्धिः नास्त्येव नैवास्ति। अत्र सर्वत्र प्रायश इति शेषो ग्राह्यः। तयोः उभयोः वेद-शास्त्रबुद्ध्योः सत्योरपि सा हि प्रसिद्धा साहिती यथार्थव्युत्पत्तिः क्षितौ पृथिव्यां न सुलभा। ननु कदाचित् एतासु वेद-शास्त्र-यथार्थव्युत्पत्तिषु सतीष्वपि, विनयो नम्रता नास्ति। तथा आचारः यथाशास्त्राचरणं च भक्तिः भगवति प्रेम च क्षमा सुखदुःखादिद्वन्द्वसहनं च चातुरी कर्तव्याकर्तव्यकौशलं च ताः चतस्रः न सन्त्येव। अमुं ... यं तु आलम्ब्य आश्रित्य सः वेदाभ्यासश्च, सा शास्त्रबुद्धिश्च, सा साहिती

---

...भणितिः'. २ 'खेदापनोद'. ३ 'देशिकगुरुः'.

किंबहुना—

अर्वन्तमास्ये तमुपास्य देवं गर्वं तमोजं कुदृशां प्रशान्तम् ॥
कुर्वन्तमेतं[1] गुरुमन्तरेण गुर्वन्तरं कोऽत्र गुणी वृणीते ॥ २९२ ॥

**कृशानुः**—वयस्य मा स्मैवमवोचः[2] । यदेतत्पक्षावलम्बनतः[3] पक्षान्तरस्वीकार एव वर इति मे प्रतिभाति ॥ ११४ ॥

तथा हि—

यस्मिन्पक्षेऽस्ति मोक्षो गुरुणि लघुनि वा साधनेऽप्यप्रयुक्ते
श्लाघाहेतुः श्रमार्थव्ययकरयजनाद्यग्र्यकर्मप्रहाणम् ॥

---

च, सः विनयश्च, ताः आचार-भक्ति-क्षमा-चातुर्यश्च खेलन्ति क्रीडन्ति । अनेन लोकविलक्षणोऽयमिति व्यज्यते ॥ २९१ ॥

किंच **अर्वन्तमिति** । आस्ये मुखे अर्वन्तं अश्वरूपं "वाजि-वाहार्व-गन्धर्व-हय-सैन्धव-सप्तयः" इत्यमरः । तं देवं हयग्रीवावतारं उपास्य संसेव्य, कुत्सितं यथा तथा पश्यन्ति अर्थात् वेद-शास्त्राणि, ते कुदृशः वेद-शास्त्रादीनां विपरीतार्थकारिण इत्यर्थः । तेषां तमोजं अज्ञानजन्यं गर्वं अभिमानं प्रशान्तं नष्टं कुर्वन्तं, एतादृशं एतं वेदान्ताचार्यं गुरुमन्तरेण विना "अन्तराऽन्तरेण-" इति द्वितीया । गुर्वन्तरं अन्यं गुरुं अत्र लोके, को गुणी पुरुषः वृणीते अङ्गीकरोति? अपि तु कोऽपि नैवेत्यर्थः ॥ २९२ ॥

**वयस्येति** । हे वयस्य, एवं 'एतं गुरुमन्तरेण गुर्वन्तरं न वृणीते' इत्यादिरूपं मा स्म अवोचः मा वद । अत्र माङ्योगे अडागमः प्रामादिकः । "न माङ्योगे" इति तन्निषेधात् । अथवा केवलं माशब्दमङ्गीकृत्य कथंचित् समाधेयम् । यतः एतस्य गुरोः पक्षावलम्बनतः पक्षाश्रयात् द्वैतप्रचुरत्वादित्यर्थः । पक्षान्तरस्य अन्यपक्षस्य शुद्धाद्वैतप्रतिपादकस्येत्यर्थः । स्वीकारः अङ्गीकार एव वर इति मे प्रतिभाति । अत्र भावदर्पणकृता मर्कटकिशोर-मार्जारकिशोरन्यायतुल्यतया व्याख्यातम् । 'यथा-मर्कटकिशोरः प्राकारादिलङ्घनेऽपि दृढमवलम्बमानः मातुः काङ्क्षितं स्तन्यमनुभवति, तथा श्रौत-स्मार्तकर्मद्वारा सेवमानो भक्तः भगवत्प्रसादं लभत इति— मर्कटकिशोरन्यायानुगृहीतः । तस्मात् पक्षान्तरमन्यः पक्षः यथा मार्जारकिशोरं तन्माता मार्जारी स्वयमेव दन्तघातनादेः संरक्ष्य देशाद्देशान्तरं नीत्वा पुष्णाति, तथा सर्वं कर्म विहाय स्वात्मानं भगवते निवेद्य वर्तमानं स्वयमेव भगवान् कृतयोग-क्षेमो रक्षतीति— मार्जारकिशोरन्यायानुगृहीतः वर इति' इति ॥ ११४ ॥

उक्तार्थमेव विशदीकरोति— **यस्मिन्पक्ष इति** । यस्मिन् अन्यस्मिन् शुद्धाद्वैतप्रतिपादके पक्षे, गुरुणि महति कतिपयदिनसाध्ये यज्ञादिरूपे, वाऽथवा लघुनि

---

१ 'मेकं'. २ 'मा स्मैवं वद', 'वादीः'. ३ 'एतत्पक्षात्पक्षान्तरस्वीकारः'.

तं हन्तोपेक्ष्य पक्षं श्रयति जगति कः काम्यवेदोक्तकर्मा-
नुष्ठानावश्यकत्वप्रकटनकठिनं वेदचूडार्यमार्गम् ॥ २९३ ॥

**विश्वावसुः**—निरूपणनिपुणोऽपि भवान् कथमेवं कथयति?॥११५॥

वेदान्तार्थ[1]विशोधितं हित[2]पथं व्याधूय साधूचितम्
चापल्यादनुरुन्धते तदितरं पन्थानमन्धा नराः ॥
इष्टं भक्षय कान्तया च विहरेत्येवं प्रियालापिनम्
रोगार्ताश्चपलाः स्तुवन्ति न तु तं यः पथ्यवादी भिषक्॥२९४॥

---

दर्श-पूर्ण-मासादिरूपे साधने कर्मणि अप्रयुक्ते अनाचरिते सत्यपि, मोक्षः अस्ति। अत एव स पक्षः श्लाघाहेतुः प्रशंसाकारणम्। श्रमः शरीरप्रयासश्च अर्थव्ययः द्रव्यव्ययश्च तौ करोतीति तत्करं तच्च तत् यजनादि आदिशब्देन तपःकृच्छ्रादेः संग्रहः। अग्र्याणां ब्राह्मणानां कर्म तस्य प्रकर्षेण हानं विनाशो यस्मिन् तथाभूतम्। तं पक्षं, हन्तेति खेदे। उपेक्ष्य काम्यानां वेदोक्तानां कर्मणां "स्वर्गकामो यजेत" इत्यादिरूपाणां अनुष्ठानस्य आवश्यकत्वस्य आवश्यकर्तव्यस्य प्रकटनेन कठिनं कर्तुमशक्यं वेदचूडार्यस्य वेदान्ताचार्यस्य मार्गं पक्षं जगति कः श्रयति अङ्गीकरोति? कोऽपि नैवेत्यर्थः। अयं भावः— अयं वेदान्ताचार्यः वेङ्कटाचार्याभिधः स्वयं यज्ञादिकाम्यकर्मणामनुष्ठाता तत एव च यज्ञादिकर्मानुष्ठानोत्तरमेव ज्ञानेन मुक्तिरिति तत्सिद्धान्तः। एतस्मादन्यस्मिन् श्रीमच्छंकराचार्यादिमते तु मोक्षसाधने काम्यादिकर्मणां नावश्यकता, किंतु शम-दमादिसाधनसंपन्नतया विधिवद्गुरूपसत्तिपूर्वकात्मज्ञानेनवै मुक्तिरिति। तस्मात् स एव पक्षो वर इति ॥ २९३ ॥

**निरूपणेति**। निरूपणे सदसद्विवेके निपुणः प्रवीणोऽपि सन् भवान् कथमेवं 'यस्मिन् पक्षे—' इत्यादिरूपं कथयति? ॥ ११५ ॥

**वेदान्तार्थेति**। अन्धाः ज्ञानहीना नराः वेदान्तार्थेन वेदान्ततात्पर्येण विशोधितं शुद्धं, आर्येति पाठे वेदान्तार्येण वेङ्कटगुरुणा विशोधितमित्यर्थः। साधूनामुचितं योग्यं अत एव हितपथं श्रेयस्करं मार्गं व्याधूय त्यक्त्वा तस्मात् इतरमन्यं पन्थानं चापल्यात् विषयोपभोगलौल्याद्धेतोः अनुरुन्धते अनुसरन्ति। अत्र दृष्टान्तमाह– इष्टं—शास्त्रनिषिद्धमपि पलाण्डुसदृशं—पदार्थं भक्षय, कान्तया स्त्रिया सह, यथेच्छमिति शेषः। विहर क्रीड, एवं प्रियालापिनं प्रियभाषिणं वैद्यं चपलाः भाविपरिणामविवेकरहिताः रोगार्ताः रोगपीडिताः स्तुवन्ति प्रशंसन्ति। किंतु यः पथ्यं भक्ष्यादिकं वदति तच्छीलः भिषक् वैद्यः तं तु नैव स्तुवन्तीत्यर्थः ॥ २९४ ॥

---

१ 'वेदान्तार्ये'. २ 'पदं'.

किंच—

आम्नायमौलिगुरुणा करुणाकरेण
नावातरिष्यत यदीह भवाब्धिनावा ॥
अज्ञातभक्ति जगदश्रुतसच्चरित्र-
मज्ञातशास्त्रमभविष्यदवैदिकं च ॥ २९५ ॥

पुनरालोच्य—

अस्य खलु निगममौलिगुरोरशेषविद्यासमुद्रतलस्पर्शित्वादधुनातनविबुधव्यूहसमभिव्याहारो नोचितः ॥ ११६ ॥

किंतु—

निशमयति यः किल दृशा निशामयत्यङ्घ्रिणा च यो विश्वम् ॥
गजे तुरगौ वदने यौ तैः सह वेदान्तदेशिको गण्यः ॥ २९६ ॥

---

किंच **आम्नायेति**। भवाब्धेः संसारसमुद्रस्य नावा तारकतरणिरूपेण अत एव करुणाकरेण दयाकरेण, आम्नायाः वेदास्तेषां मौलयः शिरांसि वेदान्ता इति यावत्। तेषां गुरुणा आचार्येण, तद्व्याख्यात्रा वेदान्ताचार्येणेत्यर्थः। इह लोके यदि न अवातरिष्यत न प्रादुरभविष्यत, तर्हि सर्वं जगत् अज्ञाता भक्तिर्येन तत्, अश्रुतं अनाकर्णितं सतां सज्जनानां चरित्रं येन तत्, अज्ञातं अनवबुद्धं शास्त्रं येन तत्, अवैदिकं वेदविहिताचारशून्यं च अभविष्यत्। क्रियातिपत्तौ ऌङ्। तत्र पूर्वं कर्मणि तरतेः, उत्तरत्र च भवतेः कर्तरीति बोध्यम् (?) ॥ २९५ ॥

**अस्येति**। निगममौलिगुरोः वेदान्ताचार्यस्य अशेषाः निखिला या विद्या वेदशास्त्रादिरूपास्तासां समुद्रस्य तलस्पर्शित्वात् तलपरामर्शशीलत्वात्, आमूलात् समाप्तिपर्यन्तं यथार्थतया विवेचनशीलत्वादित्यर्थः। अधुनातना इदानींतना ये विबुधाः पण्डितास्तेषां व्यूहेन समुदायेन सह समभिव्याहारः गणनम् नोचितः ॥ ११६ ॥

अधुनातनविबुधवैलक्षण्यमेव प्रतिपादयति—**निशमयतीति**। यः दृशा नेत्रेण निशमयति किल शृणोति, भगवान् शेषावतारः पतञ्जलिरित्यर्थः। तथा च यः अङ्घ्रिणा पादेन किरणैरित्यर्थः। जातावेकवचनम्। विश्वं जगत् निशामयति अवलोकयति, भगवान् सूर्य इत्यर्थः। भावदर्पणकारस्तु 'निशामयत्यङ्घ्रिणा—' इत्यादिवाक्येन गौतम इत्याह। तत्तु गौतमस्यैवाक्षपाद इति नामप्रसिद्धेरिति ज्ञेयम्। एतत्तु भगवतः पतञ्जलेः साम्यार्थं व्याख्यानम्। तेन च उभौ (पतञ्जलि-गौतमौ) अपि व्याकरणन्यायशास्त्रयोः प्रवर्तकाविति सूचितम्। यथा यौ वदने मुखे गज-तुरगौ भगवन्तौ गजानन-हयग्रीवावित्यर्थः। तैश्चतुर्भिः (पतञ्जलि-गौतम-गजानन-हयग्रीवैः) सह अयं वेदान्तदेशिको वेदान्ताचार्यः गण्यः गणनीयः ॥ २९६ ॥

---

१ 'गौतमनिगम'. २ 'गजतुरगौ मुखे'.

विचिन्त्य—

गम्भीरशब्देन विशालमोहदशापिशाचग्रहमोचनेन ॥
घण्टा हरेर्वेङ्कटनाथरूपा कल्याणमुल्लासयति श्रुतीनाम् ॥२९७॥

पुनः सचमत्कारम्—

वेदान्ताचार्यशब्दोऽस्मिन्वेदान्तस्थापने[1] क्षमः ॥
इमं विवेकं कुर्वन्तो दान्ताचार्यं च तं विदुः ॥ २९८ ॥

**कृ०**—कथं नाम द्रुहिणगृहिणीचिकुरनिकुरम्बचुम्बिचम्पककुसुमसुकुमारतराः कविकथककण्ठीरवगुरोरपि गिरो दुस्तरप्रस्तरनिष्ठुर[2]बंहिष्ठसासूयहृदयनिर्भेदाय जायन्ते ? ॥ ११७ ॥

**विश्वावसुः**—सखे शृणु तावत् ॥ ११८ ॥

---

किंच **गम्भीरेति** । हरेः श्रीविष्णोः संबन्धिनी वेङ्कटनाथरूपा एतदाख्यश्रीवेदान्ताचार्यरूपेत्यर्थः । घण्टा विशाला महती या मोहस्याज्ञानस्य दशाऽवस्था तद्रूपो यः पिशाचस्तस्य ग्रहं मोचयतीति तथाभूतेन गम्भीरेण महता शब्देन ध्वनिना, अथवा गम्भीरेण दुरवगाहेन शब्देन व्याख्यारूपेणेत्यर्थः । श्रुतीनां कर्णानां उपनिषदां वा कल्याणं मङ्गलं यथार्थं वा उल्लासयति वर्द्धयति ॥ २९७ ॥

अपि च **वेदान्तेति** । अस्मिन् भुवने वेदान्ताचार्य इत्ययं शब्दः वेदान्तानां स्थापने विविधवाक्यानां यथार्थनिर्णयेन व्यवस्थाकरणे इत्यर्थः । क्षमः समर्थः । अस्तीति शेषः । इमं उक्तप्रकारं विवेकं विचारं "मन्त्रव्याख्याकृदाचार्यः" इत्यादिकोशपर्यालोचनया वेदानां व्याख्याकरणरूपमित्यर्थः । किंवा इमं वेदान्ताचार्यशब्दं विगतवेकं वेशब्दरहितं च, अस्मिन् पक्षे "शेषाद्विभाषा" इति कप्प्रत्ययो ज्ञेयः । कुर्वन्तो लोकाः तं वेदान्ताचार्यं दान्तानां जितबाह्यान्तरिन्द्रियाणां आचार्यं गुरुं दान्ताचार्यशब्दमपि विदुः जानन्ति ॥ २९८ ॥

**कथमिति** । द्रुहिणस्य ब्रह्मणः गृहिणी सरस्वती तस्याश्चिकुरनिकुरम्बं केशपाशः तच्चुम्बीनि यानि चम्पककुसुमानि तद्वत् सुकुमारतराः अतिकोमलाः कविकथककण्ठीरवगुरोरपि कविवादिनां महासिंहस्येत्यर्थः । गिरः वाण्यः दुस्तराः कठिना ये प्रस्तराः पाषाणाः इव निष्ठुराणि कठोराणि बंहिष्ठानि बहुलानि, बहुलशब्दादिष्ठनि "प्रियस्थिर–" इत्यादिना बंहादेशः । असूयया गुणेषु सत्स्वपि दोषा-रोपबुद्ध्या सहितानि च यानि हृदयानि मतान्तरवादिचित्तानि तेषां निर्भेदाय खण्डनाय जायन्ते भवन्ति ? । कोमलत्वात् मृणालतन्तुना पाषाणभेदवत् कठिनहृदयभेदनमशक्यमिति भावः ११७ ॥

---

१ 'स्थापके'. २ 'प्रस्तरोदरनिष्ठुर'.

वेदान्तार्यगिरः प्रसूनमृदवो मोदं दधानाः सताम्
प्रौढग्रावकठोरकाण्यपि परं भिन्दन्ति हृन्दि द्विषाम् ॥
नन्दाद्यार्यजनाभिनन्दितमृदुस्पर्शोऽपि पादो हरे-
र्दुर्भेदे शकटासुरे तु शतकोट्याकारमागान्न किम्? ॥२९९॥

पुनः सप्रार्थनमञ्जलिं बद्ध्वा—

दर्पाविष्ट[1]कुदृष्टिदुष्टसमयोत्सादाय बोधाङ्कुरो-
द्भेदाय[2] प्रबले कलावपि जयोत्पादाय वेदाध्वनः ॥
श्रीमल्लक्ष्मणपक्षरक्षकबुधा[3]मोदाय पापाटवी-
च्छेदायार्थिमरुत्तरुर्विजयतां[4] वेदान्तविद्यागुरुः ॥ ३०० ॥

---

अथ समाधत्तुमुपक्रमते **विश्वावसुः—वेदान्तेत्यादिना**। प्रसूनमृदवः पुष्पवत् सुकुमाराः अत एव सतां तन्मतस्थसाधूनां मोदं आनन्दं दधाना उत्पादयन्तः वेदान्तार्यस्य गिरः व्याख्यानरूपा वाण्यः, द्विषां मतान्तरस्थवादिनां हृन्दि हृदयानि "पद्दन्नोमास्–" इत्यादिना हृदयशब्दस्य हृदादेशः। प्रौढाः कठोराः ग्रावाणः पाषाणा इव कठोरकाणि कठिनान्यपि, परमत्यन्तं भिन्दन्ति विदारयन्त्येव। अत्र दृष्टान्तमाह—नन्दो गोकुलाधिपः श्रीहरेः पिता आदिः प्रमुखो येषां सुनन्दादीनां ते ये आर्यजनाः श्रीकृष्णभक्तत्वात् श्रेष्ठजनास्तैरभिनन्दितः मृदुस्पर्शः कोमलस्पर्शो यस्य तादृशोऽपि हरेः श्रीकृष्णस्य पादः दुर्भेदे इतरैर्भेत्तुमशक्ये शकटासुरे, शतकोटेर्वज्रस्य "शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः" इत्यमरः। आकारं न अगात् न प्राप किम्? तद्वदेवेदमिति भावः ॥ २९९ ॥

इदानीमेतत्प्रकरणमुपसंहरन् प्रार्थयते—**दर्पाविष्टेति**। दर्पाविष्टानां गर्विष्ठानां अत एव कुदृष्टीनां कुत्सितज्ञानानां, अत्र दृशिर्ज्ञाने। दुष्टो यः समयः सिद्धान्तः "समयाः शपथाचार-कालसिद्धान्त-संविदः।" इत्यमरः। तस्य उत्सादाय तं विनाशयितुमित्यर्थः। "तुमर्थात्—इत्यादिना चतुर्थी। अग्रेऽप्येवमेव ज्ञेयम्। बोधाङ्कुरस्य उद्भेदाय उत्पादनाय, प्रबलेऽपि कलौ युगे वेदाध्वनः कर्म-ज्ञानरूपवेदमार्गस्य जयोत्पादाय सर्वोत्कर्षमुत्पादयितुमित्यर्थः। श्रीमतो लक्ष्मणस्य रामानुजाचार्यस्य यः पक्षः विशिष्टाद्वैतरूपः तद्रक्षकास्तत्पालका ये बुधाः पण्डितास्तेषां मोदाय आनन्दमुत्पादयितुमित्यर्थः। पापान्येवाटवी अरण्यं तस्याश्छेदाय, तां छेत्तुं चेत्यर्थः। अर्थिनां विशिष्टाद्वैतज्ञानाभिलाषिणां मरुत्तरुः कल्पवृक्षः वेदान्तविद्यागुरुः, विजयतां सर्वोत्कर्षेण वर्तताम् ॥ ३०० ॥

---

१ 'कोपाविष्ट'. २ 'भेदाङ्कुरोद्बोधाय'. ३ 'मह्य'. ४ 'विजयते'.

# अथ कामासिकानगरवासिनृसिंहवर्णनम् २३.

इत्यन्यतो दृष्टिं विन्यस्य प्राञ्जलिः सन्—

श्रीमान्गभीरतरवेगवतीप्रतीर-
भूमावघद्रुहि सुरद्रुरिवावतीर्णः ॥
कामादिवैरिगणमुल्बणमस्मदीयं
कामासिकानरहरिः कवलीकरोतु ॥ ३०१ ॥

इत्यन्यतश्चक्षुर्निक्षिप्य प्राञ्जलिः सन्—

भयार्तजीवातुदयामहिम्ने वैकुण्ठधाम्ने तनवै नमांसि
आम्नाय उक्तः परमेशितेति नाम्नाय उक्तः परमत्र चित्रम्॥३०२॥

युक्तं चैतत् । यतो 'विष्णुः परमः' इति श्रुता श्रुतिः ॥ ११९ ॥

---

अथ कामासिकावासिनृसिंहवर्णनं सूचयन्नाह कविः—**इतीत्यादि** । अन्यतः अन्यस्मिन्स्थले दृष्टिं विन्यस्य दत्त्वा—

**श्रीमानिति** । अघेभ्यः पापेभ्यः द्रुह्यति जिघांसतीति अघध्रुक् तस्यां गभीरतरायाः अतिनिम्नायाः वेगवत्या नाम नद्याः प्रतीरभूमौ तटभुवि सुरद्रुः कल्पतरुरिव अवतीर्णः आविर्भूतः, श्रीमान् लक्ष्मीवान् लक्ष्म्या सहित इत्यर्थः । कामासिकानरहरिः कामासिकानगरनिवासी श्रीनरसिंहः, उल्बणं प्रवृद्धं अस्मदीयं अस्मत्संबन्धिनं कामः आदिः प्रमुखो येषु ते ये वैरिणः क्रोध-लोभादयः शत्रवः तेषां गणं समुदायं कवलीकरोतु ॥ ३०१ ॥

**भयार्तेति** । भयेन संसार-भीत्या आर्तानां पीडितानां जीवातुर्जीवनौषधरूपः दयाया महिमा यस्य तस्मै, वैकुण्ठधाम्ने वैकुण्ठनिवासिने इत्यर्थः । नमांसि नमस्कारान् तनवै करोमि । तनोतेरुभयपदिनः आत्मनेपदे लोडुत्तमैकवचनम् । आम्नाये वेदे यः परमेशिता परमेश्वर इति उक्तः, परं च आम्नाये न उक्तः, इत्यत्रार्थे विरोधाभासरूपे इत्यर्थः । परमत्यन्तं चित्रमाश्चर्यम् । वस्तुतस्तु य आम्नाये परमेशितेति नाम्ना उक्तः कथितस्तस्मै वैकुण्ठधाम्ने इत्यन्वयेन च तत्परिहारः ॥ ३० ॥

**युक्तमिति** । एतत् परमेश्वर इति श्रुतिकथनरूपं युक्तं योग्यमेव । यतो यस्मात् 'विष्णुः परमः' इति श्रुतिः श्रुता प्रत्यक्षं आकर्णिता । अस्माभिरिति शेषः ॥ ११९ ॥

---

ध द्रुहि'. २ 'नामासिना नरहरिः', 'कामालिकानरहरिः कबरीकरोतु'. ५ 'आम्नाययुक्तः'. ६ 'इति श्रुतेः, इति विश्रुतैव

अनपायरमो विष्णुः कस्मादपरमो भवेत् ॥
युक्तं रमापतेरन्ये देवास्त्वपरमा इति ॥ २०३ ॥

किंच—

जाग्रत्येव शिरांसि नित्यवचसां सर्वोन्नतौ शार्ङ्गिण-
स्तत्र व्यास-पराशरादिकृतयो[1] दत्तादरा वस्तुतः ॥
यः पादाम्बु ददाति यस्तदुपसंगृह्णाति धत्तेऽथवा[2]
यश्चैतच्छिरसैव तेषु परमं जानाति को नात्मवान् ॥२०४॥

पुनः सचमत्कारम्—

दुर्वादिनो विष्णुपदारविन्दं दोषापहं नानुसरन्ति[3] मोहात् ॥
तेषां मतं तु स्वयमत्र विष्णुपदारविन्दानुसृतिं विधत्ते ॥२०५॥

---

एतदेव सोपपत्तिकमाह—**अनपायेति**। यतः न विद्यते अपायो वियोगो यस्यास्तथाभूता सततमाश्लिष्टेत्यर्थः। रमा लक्ष्मीर्यस्य सः विष्णुः, अपगता वियुक्ता रमा यस्मात् तथाभूतः अपकृष्टरूपश्च कस्माद्धेतोर्भवेत्? लक्ष्म्याः अनपायित्वं "राघवत्वेऽभवत्सीता विष्णोरेषानपायिनी।" इत्यादिपुराणग्रन्थैः प्रतिपादितम्। तस्मात् रमापतेर्विष्णोरन्ये देवास्तु अपरमा लक्ष्मीरहिताः अपकृष्टाश्च इति युक्तं योग्यमेव ॥ ३०३ ॥

अधुनान्यरीत्या सर्वोत्तमत्वं प्रपञ्चयति—**जाग्रतीति**। नित्यवचसां अविनाशिवचनानां, वेदानामित्यर्थः। शिरांसि उपनिषदः शार्ङ्गिणः विष्णोः सर्वोन्नतौ सर्वोत्तमत्वे विषये जाग्रति सततं विभान्त्येव। तत्र उपनिषत्प्रतिपादित एवार्थे व्यास-पराशरादीनां ऋषीणां, आदिशब्देन वाल्मीकि-वसिष्ठ-मार्कण्डेयादीनां ग्रहणम्। कृतयः पुराणस्मृत्यादिरूपाः, दत्तादराः उपनिषत्प्रतिपादितं तात्पर्यमेव विस्तरेण वर्णयन्त्य इत्यर्थः। नन्वेतद्यद्यपि वेदादिभिः प्रतिपादितं तथाप्यनुभवमन्तरेण अविश्वसनीयमेवेति चेदाह—वस्तुतः तत्त्वतः अत्रार्थे केवलं वेद-शास्त्रादिरूपमेव न प्रमाणं, किंतु प्रत्यक्षमप्यस्तीत्यर्थः। तदेव दर्शयति—यः विष्णुः पादाम्बु पादोत्पन्नं गङ्गाजलमित्यर्थः। ददाति, यश्च ब्रह्मा तत् उपसंगृह्णाति स्वीकरोति, कमण्डलुनेत्यर्थः। अथवाऽथ च यश्च श्रीशंकरः तत् पादाम्बु, शिरसा मस्तकेनैव धत्ते धारयति। तेषु ब्रह्म-विष्णु-शिवेषु मध्ये, परमं श्रेष्ठं आत्मवान् परमात्मज्ञानी को न जानाति? अपि तु सर्व एव जानातीत्यर्थः ॥ ३०४ ॥

**दुर्वादिन इति**। दुर्वादिनः केवलं शिवमेव श्रेष्ठं मन्वानाः दोषापहं पापहरं विष्णोः पदारविन्दं चरणकमलं मोहात् वस्तुतस्त्रयाणामप्येकरूपत्वसत्त्वे स्वमताभि-

---

१ 'मुनयो', 'गुरवो'. २ 'गृह्णाति वा'. 'नानुसरन्तु'.

## अथ श्रीत्रिविक्रमवर्णनम् २४.

इत्यन्यतो दृष्टिं निक्षिप्य—

समन्तरूढद्रुमपुष्पनिष्पतन्[1]मरन्दसंतत्यभिषिक्तमुत्तमम् ॥
रविक्रमाशुत्वनिरोधिगोपुरं त्रिविक्रमस्यायतनं निशाम्यताम्॥३०६॥

सविस्मयमभिध्यायन्—

अव्यादाश्रयतामनश्वरपदप्रासादनिःश्रेणिका
हर्षादूर्ध्वमुदञ्चितः स चरणस्त्रैविक्रमो नः क्रमात् ॥
त्रैलोक्यार्पणतः सितं शुभयशश्छत्रं यदासीद्बले-
र्द्राघिष्ठो हरिनीलदण्ड इव यस्तद्धारणायोद्धृतः ॥ ३०७ ॥

मानान्धाः सन्तः " शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः । " इत्यादितत्त्वाज्ञानाद्धेतोः नानुसरन्ति न भजन्ति । तस्मात्तेषां मतं स्वयं स्वत एव अत्र उक्तेऽर्थे तु विष्णुपदे आकाशे यत् अरविन्दं कमलं कदाप्यसंभवि, तस्यानुसृतिमनुसरणं विधत्ते करोति । यथा तावदाकाशपुष्पं कदाप्यसंभवि तथैतेषां मतं मिथ्यैव भवतीत्यर्थः । ' अत्राप्याकाशे अरविन्दस्य गङ्गाजलरुहस्य आगोपालाङ्गनमाच पण्डितं सर्वसंप्रतिपन्नत्वाद्विष्णोः पदं व्यवसितं निश्चितमिति यावत् । अर्यते गम्यतेऽनेनेत्यरो मार्गः विष्णुनिश्चितसिद्धान्तः तं विन्दन्तीति तद्विन्दाः तेषामनुसृतिं अनुसरणं प्रचारमिति यावत् । इत्यर्थं वदन्ति शैवाः ' इति भावदर्पणकृत् ॥ ३०५ ॥

**समन्तेति ।** समन्ते आसमन्तभागे रूढाः वृद्धाः ये द्रुमा वृक्षास्तेषां पुष्पेभ्यः निष्पतन् निर्गलन् यो मरन्दो मकरन्दः तस्य संततिभिः धाराभिः अभिषिक्तम्, अत एव उत्तमं, रवेः सूर्यस्य क्रमे गमने यदाशुत्वं शीघ्रत्वं तस्य निरोधि प्रतिबन्धि गोपुरं पुरद्वारं यस्य तत् "पुरद्वारं तु गोपुरम्" इत्यमरः । एतादृशं त्रिविक्रमस्य एतदाख्यविष्णोः आयतनं स्थानं निशाम्यतामवलोक्यताम् । हे **कृशानो,** त्वयेति शेषः ॥ ३०६ ॥

तमेव प्रार्थयते—**अव्यादिति ।** आश्रयतां सेवमानानां जनानां नश्यतीति नश्वरं विनाशि न नश्वरमनश्वरं कालत्रयेऽप्यविनाशीत्यर्थः । नशेः " इण्-नश-जि-सर्तिभ्यः—" इति क्वरप् प्रत्ययः । यत् पदं वैकुण्ठस्थानं तदेव प्रासादः तस्य निःश्रेणिका आरोहणसाधनं, तत्प्रापिकेति यावत् । हर्षात् ऊर्ध्वं उदञ्चितः उन्नमितः बलिसत्रे इत्यर्थः । यः त्रयो भू-स्वर्ग-बलिशिरोव्यापनरूपाः विक्रमाः पादक्षेपा यस्य सः त्रिविक्रमः तस्यायं त्रैविक्रमः स चरणः नोऽस्मान् क्रमात् संसारश्रमात् अव्यात् रक्षतु । यत्त्रिविक्रमस्य चरणः, यज्ञसमये इति शेषः । त्रैलोक्यस्य अर्पणतः दानाद्धेतोः

१ 'सम्पतन्'. २ 'महा'.

**कृशानुः**–किमरे मायाविनमेनमक्रमं त्रिविक्रममभिनन्दसि? ॥१२०॥

पश्य—

श्रीमानपि स्वयं दैत्यात्कुर्वाणः कुप्रतिग्रहम् ॥
विन्दन् स महतीं वृद्धिमिष्टां गोत्रभिदे ददौ ॥ ३०८ ॥

विशिष्यायमकपटानां कवीनां न श्लाघनीयः ॥ १२१ ॥

यतः—

नित्यानपायिप्रमदोऽपि नाथो बटूभवन्वञ्चितदातृकोऽसौ ॥
कविव्यथाकृत्खलु भूसुरोऽपि भूदानवत्वं क्षममेव भेजे[2] ॥३०९॥

---

बलेर्विरोचनसुतस्य दैत्यस्य शुभं कल्याणावहं यशः कीर्तिरेव छत्रं आतपत्रं यत् आसीत् उत्पन्नमभूत्, तस्य छत्रस्य धारणाय उद्धृतः ऊर्ध्वं धृतः द्राघिष्ठः दीर्घतरः दीर्घशब्दादिष्ठन्प्रत्यये द्राघादेशः । हरिनीलो इन्द्रनीलमणिस्तन्मयो दण्डः छत्रमध्यवर्तियष्टिरिव स्थितः, स चरण इति संबन्धः ॥ ३०७ ॥

अथ **कृशानुः** कपटाचरणरूपं दोषमुद्घाटयन्नाह—**किमिति** । मायाविनं कपटयुक्तं, मायाशब्दात् "अस्-माया-मेधा–" इत्यादिना विनिप्रत्ययः । त्रिपदभूमियाचनव्याजेन सर्वस्वापहारात् । अत एवाक्रमं अनुचितकृत्यकारिणं, एनं त्रिविक्रमं वामनं किं कुतो हेतोरभिनन्दसि ? ॥ १२० ॥

मायावित्वमेव प्रपञ्चयति– **श्रीमानपीति** । यः स्वयं श्रीमान् संपत्तिमान् लक्ष्मीवानपि सन्, दैत्यात् दितिवंशजात्, बलेः सकाशात्, नतु सजातीयाद्देवादेः सकाशात्, कुप्रतिग्रहं कुत्सितं याचितसुवर्णादिग्रहणं, कोः पृथिव्याः प्रतिग्रहं स्वीकारं च "गोत्रा कुः पृथिवी पृथ्वी" इत्यमरः । कुर्वाणः सन्, ततः इष्टां ईप्सितां महतीं विपुलां वृद्धिं समृद्धिं विन्दन् प्राप्नुवन् सन्नपि, स त्रिविक्रमः गोत्रभिदे इन्द्राय कुलोच्छेदकाय च ददौ समर्पितवान् । नतु तां स्वयमुपबुभुजे । हीनोऽपि जनः स्वसंपादितमर्थं न परस्मै अर्पयतीत्यतोऽयमतीवानुचितकारीति भावः । अत्र निन्दायाः स्तुतौ पर्यवसानाद्व्याजस्तुतिरलंकारः ॥ ३०८ ॥

**विशिष्येति** । अयं त्रिविक्रमः विशिष्य विशेषतः कृत्वा, अकपटानां निर्व्याजानां शुद्धमानसानामिति यावत् । कवीनां कविभिरित्यर्थः । न श्लाघनीयः ॥ १२१ ॥

तदेवोपपादयति— **नित्येति** । नित्यं सततं अनपायिनी अवियुक्ता प्रमदा लक्ष्मीः पत्नी यस्य सः तथाभूतोऽपि सन्, बटुभवन् अबटुर्बटुरिव भवन् छद्मना ब्रह्मचारिवेषधारीत्यर्थः । "कृभ्वस्तियोगे"–इत्यादिना अभूततद्भावे च्विप्रत्ययः । "च्वौ च" इति दीर्घः । स्त्रीपरिग्रहेऽपि ब्रह्मचारिवेषधारणं एकं दूषणं, अपरं कथयति— वञ्चितः दाता दानशीलो बलिर्येन तथाभूतः, तृतीयं दोषमाह– कवीनां पण्डितानां कवेः शुक्राचार्यस्य च "संख्यावान् पण्डितः कविः", "शुक्रो दैत्यगुरुः काव्य

---

१ 'पृथ्वीमिष्टां'. २ 'लेभे'.

**विश्वा०**—अभ्युपगच्छाम एव भवतः प्रौढगुणदोषीकरणपाण्डित्यम् । आस्तामेष श्लेषचमत्कारः, आकर्णय तावदेतत् यदाश्रितरक्षणाय पद्मेक्षणः स्वमहत्त्वाननुरूपमपि रूपमापेदे ॥ १२२ ॥

नित्योन्नतोऽपि निरपायरमाश्रयोऽपि
दातापि हन्त बहुशो महतां पदानाम् ॥
स्वीकृत्य वामनवपुः श्रितमिन्द्रमीशः
पातुं पदत्रितयमत्र बलिं बिभिक्षे ॥ ३१० ॥

पुनः सभक्तिप्रकर्षम् । अत्र हि—

त्रैविक्रमस्त्रिपथगाजनकः स पादः
पायात्पुरस्य मरुतां मरुतां निहन्ता ॥

---

उशना भार्गवः कविः" इत्युभयत्राप्यमरः । अपरं च असौ नाथः वामनः भूसुरो ब्राह्मणोऽपि सन्, भुवि भूमौ दानवलं दैत्यत्वं भुवः पृथिव्या दानं बलिकृतमस्यास्ति तस्य भावः तद्वत्त्वं च भेजे सेवितवान्, इति क्षममेव युक्तमेवेति काकुः । एवं च चत्वारि दूषणानि तस्मिन् सन्तीति न स सत्प्रशंसार्ह इति भावः । अत्रापि निन्दायाः स्तुतावेव पर्यवसानमिति ज्ञेयम् ॥ ३०९ ॥

**अभ्युपगच्छाम इति** । भवतः त्वत्कृतमित्यर्थः । प्रौढानां प्रगल्भानामपि गुणानां दोषीकरणे वस्तुतो दोषत्वाभावेऽपि तदारोपे, एतदपि च्विप्रत्ययान्तम् । पाण्डित्यं चातुर्यं अभ्युपगच्छामः जानीम एव । अयं श्लेषचमत्कारः वस्तुतस्तु नैतद्दूषणमित्यर्थः । आस्ताम् । तत्त्वतस्तु पद्मेक्षणः कमललोचनः अयं आश्रितानां भक्तानां रक्षणाय रक्षणार्थं स्वमहत्त्वस्य अननुरूपं अयोग्यमपि रूपं बटुवामनाकारं आपेदे स्वीकृतवानिति यत्, तदेतदाकर्णय ॥ १२२ ॥

'नित्यानपायिप्रमदः—' इत्यादिनोक्तस्यार्थस्यैव वास्तवत्वं प्रतिपादयति— **नित्योन्नतोऽपीति** । योऽयं त्रिविक्रमः नित्योन्नतः नित्यं महानपि, निरपायः विश्लेषरहितः रमाश्रयः लक्ष्म्याश्रयो यस्य सः तथाभूतोऽपि, महतां बहुशः बहूनां न तु द्वि-त्राणां "बह्वल्पार्थात्—" इत्यादिना विभक्त्यर्थे शस् प्रत्ययः । पदानां वैकुण्ठादिस्थानानां दातापि, अनेकपदमितभूभागानामित्यर्थोऽप्यनुसंधेयः । हन्तेति हर्षे । ईशः ईश्वरोऽपि श्रितं अङ्गीकृतं इन्द्रं पातुं रक्षितुं, वामनवपुः बटुशरीरं स्वीकृत्य गृहीत्वा, बलिं दैत्यं अत्र भूलोके बलियज्ञे वा, पदानां त्रितयं त्रिपदपरिमितां भूमिमित्यर्थः । बिभिक्षे ययाचे । भिक्षतेर्द्विकर्मकत्वात् बलिशब्दादपि कर्मणि द्वितीया ॥३१०॥

**त्रैविक्रमेति** । त्रिपथगायाः गङ्गायाः जनकः उत्पादकः, अत एव मरुतां देवानां पुरस्य स्वर्गस्य[1] मरुतां निर्जलदेशत्वं निहन्ता निवारकः, गङ्गोत्पत्तेः पूर्वं तत्र जला-

---

१ 'एतन्न दृश्यते आदर्शपुस्तके'.

शम्भोः स्फुरन्मुकुटभूषणदानचुञ्चु-
मम्भोनिधेः श्वशुरमाप्तगिरो यमाहुः ॥ ३११ ॥

## अथ श्रीकामाक्षीदेवीवर्णनम् २५.

इति किंचिदन्तरमतिक्रम्य । अत्र हि—

काञ्चीनगरविभूषा कामाक्षी कल्पमञ्जरी भजताम् ॥
रक्षा सुरसेनानां राजति शर्वस्य[1] सर्वस्वम् ॥ ३१२ ॥

निरूप्य सविस्मयानन्दं कामाक्षीमामन्त्र्य—

दन्तश्रीस्तव दृश्यते यदि ततः कुन्दं न निन्दन्ति- यस्य
वक्त्रं यद्यभिलक्ष्यते बुधजनश्चन्द्रं न संद्रक्ष्यते ॥
दृष्टे[2] दृष्टियुगे पुनर्न विनुयाद्बालोऽपि नीलोत्पलम्[3]
सूक्तिश्चेदनुभूयते मधुरता कामाक्षि का माक्षिके ॥ ३१३ ॥

भावादिति भावः । त्रैविक्रमः स पादः चरणः पायात् नः सर्वान् रक्षतु । कथंभूतः सः । यं त्रैविक्रमपादं, आप्तगिरो वेदवाण्यः शंभोः स्फुरत् प्रकाशमानं यन्मुकुटभूषणं तस्य दानेन प्रसिद्धम् । शिवस्य गङ्गाशिरस्त्वादिति भावः । "तेन वित्तश्चुञ्चुप्चणपौ" इति प्रसिद्धार्थे चुञ्चुप् प्रत्ययः । तथा अम्भोनिधेः समुद्रस्य श्वशुरं च, तस्य गङ्गाजानित्वात् । आहुः कथयन्ति । स इति संबन्धः ॥ ३११ ॥

**काञ्चीति** । काञ्चीनामकनगरस्य विभूषा अलंकाररूपा, भजतां सेवमानानां जनानां कल्पमञ्जरी कल्पवृक्षस्य वल्लरिः, सुरसेनानां देवसैन्यानां रक्षा रक्षणकर्त्रीत्यर्थः । शर्वस्य शिवस्य सर्वस्वं सर्वद्रव्यं, एतादृशी कामाक्षी एतन्नामिका देवी राजति शोभते ॥ ३१२ ॥

**दन्तश्रीरिति** । हे कामाक्षि देवि, तव दन्तानां श्रीः शोभा यदि दृश्यते ततः तद्दर्शनात् कुन्दं माध्यकलिकां, के जनाः न निन्दन्ति ? अपि तु सर्वे एव निन्दन्तीत्यर्थः । एवमुत्तरत्राप्यूह्यम् । तथा तव वक्त्रं मुखं यदि अभिलक्ष्यते दृश्यते, तदा बुधजनः ज्ञानी नरः चन्द्रं न संद्रक्ष्यते नैव पश्यति । तथा तव दृष्टियुगे लोचनयुग्मे दृष्टे सति । पुनः बालोऽपि किमुत प्राज्ञः नीलोत्पलं नीलकमलं न विनुयात् न स्तुयात् । तथा सुष्ठु मधुरा उक्तिः वाणी अनुभूयते श्रूयते चेत्, तदा माक्षिके मधुनि मधुरता का ? अपि तु नास्त्येवेत्यर्थः । एवं तव सौन्दर्यस्याग्रे सर्वमपि वस्तुजातं तुच्छमिति भावः । अत्र दन्तश्रीरित्याद्युपमेयैः प्रसिद्धकुन्दाद्युपमानानां तिरस्कारप्रती-

१ 'शर्वस्य शर्वरी सुखदा', 'सर्वस्य सर्वस्वं'. २ 'दृष्टं दृष्टियुगं'. ३ 'नीलोत्पले'.

कृ०—यद्यपि विद्यते कामाक्ष्याः सर्वाभिनन्दनीयं सौन्दर्यं तथापि मुधा तदिति प्रतिभाति ॥ १२३ ॥

तथाहि—

कान्तो विरूपाक्ष इति प्रतीतः कामस्य हन्ता गिरिराजपुत्र्याः ॥
स्तम्बेरमास्यस्तनयोऽपि तस्या लम्बोदरः किंफलमाभिरूप्यम् ॥३१४॥

अनयोः खल्वम्बिका-त्र्यम्बकयोर्दाम्पत्यमननुरूपमिति व्यक्तमेतत् ॥ १२४ ॥

इयं हि सर्वमङ्गला स तु श्मशानमन्दिरो
विभाति हैमवत्यसौ स याति दिक्षु भिक्षुकः ॥

तेः प्रतीपाख्य... । "आक्षेप उपमानस्य प्रतीपमुपमेयता । तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धना" इति तल्लक्षणात् ॥ ३१३ ॥

**यद्यपीति** । यद्यपि कामाक्ष्याः सर्वं त्वया वर्णितं अभिनन्दनीयं प्रशंसनीयं सौन्दर्यं सुन्दरत्वं विद्यते, तथापि तन्मुधा व्यर्थं " व्यर्थके तु वृथा मुधा" इत्यमरः । इति प्रतिभाति ॥ १२३ ॥

मुधात्वमेवाह—**कान्त इति** । गिरिराजस्य हिमालयस्य पुत्र्याः पार्वत्याः कामाक्ष्या इति यावत् । कान्तः पतिः शिवः, विरूपे कुरूपे अक्षिणी, वस्तुतः विरूपाणि विषमाणि त्रीणीति यावत् । अक्षीणि लोचनानि यस्य सः तथाभूतः, कामस्य धर्मादिक्रमेण तृतीयपुरुषार्थस्य, मदनस्य चेति वस्तुतः हन्ता विनाशकः इति प्रतीतः प्रसिद्धः । तथा तनयः पुत्रोऽपि स्तम्बेरमास्यः गजाननः, स्तम्बेरमेत्यत्र "स्तम्बकर्णयो रमि-जपोः" इत्यच्प्रत्ययः "तत्पुरुषे कृति—" इति सप्तम्या अलुक् । "इभः स्तम्बेरमः पद्मी" इत्यमरश्च । लम्बोदरः बृहदुदरश्चेति प्रतीतः । तस्याः कामाक्ष्याः अभिरूपस्य योग्यमाभिरूप्यं सौन्दर्योचितमित्यर्थः । किंफलम् ? किमपि नास्तीति । अथवा तस्याः आभिरूप्यं किंफलं कुत्सितफलमित्यर्थः । विरुद्धसामग्रीप्रतीतेरिति भावः । वस्तुतस्तु शिवपत्नीत्वात् सकलविघ्नविनाशकगणाधिपमातृत्वाच्च तस्याः सौन्दर्यं किं किमप्यनिर्वाच्यं फलं सिद्धिर्यस्य तत्तथाभूतमित्यर्थः । व्याजस्तुतिरलंकारः ॥ ३१४ ॥

**अनयोरिति** । अम्बिका कामाक्षी देवी च त्र्यम्बकः शंकरश्च तयोः दंपत्योः जांयापत्योः भावः दांपत्यं, पति-पत्नीमिथुनमिति भावः । अननुरूपमयोग्यं, अस्तीति शेषः । इत्येतत् व्यक्तं स्पष्टमेव खलु ॥ १२४ ॥

तदेवाह—**इयं हीति** । इयं अम्बिका कामाक्षी देवी हि, सर्वाणि मङ्गलानि शुभानि यस्याः सा तथाभूता, अस्तीति शेषः । स त्र्यम्बकस्तु श्मशानं पितृवनं, शून्य-

१ 'इह'.

इयं तु कुङ्कुमाङ्किता स भस्मराशिरूषित-
स्त्वरालकुन्तला च सा जटाभिरेष भीषणः ॥ ३१५ ॥

**वि०**—वयस्य मैवं वादीः । न खल्वप्रशस्तैरप्यावास-वासःप्र-[1]
भृतिभिः सांसिद्धिकमभिरूपाणामाभिरूप्यमपहीयते[2] ॥ २२५ ॥

निवस्तां वा कृत्तिं निवसतु चिरं वा पितृवने
शिवस्तावद्धत्तामहिगणमथाप्येष सुभगः ॥
परीतं शैवालैरुषितमपि पङ्केषु मलिना-
मलीनां बिभ्राणं किमिह[3] कमनीयं न कमलम् ॥ ३१६ ॥

---

त्वात् श्मशानतुल्यं दहराकाशं च मन्दिरं, उपलब्धिस्थानं च यस्य सः तथोक्तः, असौ कामाक्षी तु हेम्नां सुवर्णालंकाराणां समूहः हैमं, हैमपदं सुवर्णालंकारार्थे लाक्षणिकं, समूहार्थेऽण् । तदस्यास्तीति तद्वती हिमवतोऽपत्यं हैमवतीति च । तादृशी विभाति विराजते । स शिवस्तु दिक्षु भिक्षति याचतीति निजभक्तकल्याणमभिवाञ्छतीति च भिक्षुः स एव भिक्षुकः "सनाशंस—" इत्यादिना उप्रत्यये स्वार्थे कः । तादृशः सन् याति परिभ्रमति । वस्तुतस्तु धनदादिसुहृत्त्वेऽपि नश्वरैश्वर्यवैतृष्ण्येनैव परमात्मलाभ इति द्योतनार्थं भिक्षुवृत्त्या परिभ्रमतीति । तथा इयं कामाक्षी तु कुङ्कुमेन केशर-कस्तूर्यादिसुगन्धद्रव्येण अङ्किता चिह्निता, सुगन्धिकुङ्कुमतिलकयुक्तेत्यर्थः । सः शिवः भस्मराशिना भस्मसमूहेन रूषितः विलिप्तः, तथा सा कामाक्षी अरालाः । कुटिलाः कुन्तलाः केशा यस्याः सा तथाभूता, सौभाग्यसूचककुटिलकेशयुक्तेत्यर्थः । " अरालं वृजिनं जिह्मं— " इति "चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः" इति चामरः । एष शिवश्च जटाभिः कदाप्यसंस्कृतत्वात् परस्परसंसक्तकेशैः, नियमार्थं तैलादिसंस्काररहिततया केवलं जलप्रक्षालनमात्रसंस्कृतकेशैरिति तु परमार्थः । भीषणः भयंकरः । प्रापञ्चिकानां, न तु परमार्थविदामिति तत्त्वार्थः ॥ ३१५ ॥

अथ **विश्वावसुः** प्रकृतिसिद्धविभूतीनां महात्मनां न खलु वासोऽलंकारादि भूषणमिति द्योतयन्नाह—**वयस्येति** । भो वयस्य मैवं वादीः, कुतइति चेदाह— अभिरूपाणां ज्ञानिनां आवासः वसतिस्थानं वासो वस्त्रं च तत्प्रभृतिभिः तत्प्रमुखैः सांसिद्धिकं स्वभावसिद्धं आभिरूप्यं सौन्दर्यं न अपहीयते न विनश्यति । खलु निश्चयेन ॥ १२५ ॥

**निवस्तामिति** । शिवस्तावत् कृत्तिं गजचर्म "अजिनं चर्म कृत्तिः स्त्री" इत्यमरः । निवस्तां परिदधातु परिधानं करोत्वित्यर्थः । वाथवा चिरं बहुकालं पितृवने श्मशाने निवसतु वासं करोतु । वाथवा अहीनां सर्पाणां गणं समूहं कटककुण्डलादिरूपेण धत्तां धारयतु । अथापि तथापि एष शिवः सुभगः शोभनैश्वर्यसंपन्न एव ।

---

१ 'अप्रशस्तैरपि वास-कृत्तिवासःप्रभृतिभिः'. २ 'अवहीयते'. ३ 'तदपि'.

किंच—

रमणीयः स हि पुरुषो रमणी यत्रैव रज्यति विदग्धा ॥
श्लोकः स एव सुभगश्चित्तं सक्तं हि यत्र रसिकस्य ॥ ३१७ ॥

अवधार्यतामत्रैतदतिमात्रं चित्रम् ॥ १२६ ॥

शिवाक्ष्यालोकितः कामो जित इत्येव शुश्रुम ॥
व्यत्यासोऽत्रजितो[२] यस्मात् कामाक्ष्यालोकतः शिवः ॥ ३१८ ॥

पुष्कलं किल पुत्रभाग्यमपि पर्वतराजकन्यायाः ॥ १२७ ॥

---

अत्र दृष्टान्तमाह—कमलं शैवालैः परीतं वेष्टितं, पङ्केषु कर्दमेषु उषितं स्थितमपि, मलिनां कृष्णवर्णत्वेन मलयुक्तानां अलीनां भ्रमराणां बिभ्राणं धारकमपि, अलीनामित्यत्र कर्मणः शेषत्वविवक्षायां षष्ठी। "कर्तृ-कर्मणोः—" इति प्राप्तायाः षष्ठ्याः "न लोक—" इत्यादिना निषेधात्। तत् इहलोके कमनीयं सुन्दरं न किम्? किंतु 'किमिव हि मधुराणां मण्डनं नाकृतीनाम्' इति कालिदासोक्तन्यायेन तदतीव सुन्दरमिति भावः ॥ ३१६ ॥

किंच शिवे पार्वत्याः प्रेमातिशयदर्शनादेव तत्सौन्दर्यमवगन्तव्यमिति कथयति—**रमणीय इति**। स हि स एव पुरुषः रमणीयः सुन्दरः। स कः। यत्रैव यस्मिन् पुरुषे एव विदग्धा चतुरा रमणी स्त्री रज्यति रमते, स इति सम्बन्धः। अत्र दृष्टान्तः—यत्र श्लोके रसिकस्य अलंकारादिसाहित्यसंपन्नस्य, चित्तं सक्तं संलग्नं, स एव श्लोकः पद्यं सुभगः मनोहरः इति ज्ञेयम् ॥ ३१७ ॥

[illegible]**र्यतामिति**। [illegible] शिवाम्बिकाविषये एतदतिमात्रं अतिशयितं चित्रमाश्चर्यं अवधार्यताम् निश्चीयताम् ॥ १[illegible] ॥

**शिवेति**। शिवस्य अक्ष्णा ललाटस्थतृतीयनेत्रेणेत्यर्थः [illegible]लोकितः दृष्टमात्र एव कामो मदनः जितः इत्येव शुश्रुम पुरा श्रृणुमः। अत्र तु व्यत्ययः वैपरीत्यं वर्तते। यस्मात् कामस्य मदनस्य अक्ष्णः आलोकतः शिवः जितः। वस्तुतः कामाक्ष्या देव्याः आलोकतः जितः इत्यर्थः। इदमेव श्लोषार्थजन्यं चित्रमिति भावः ॥ ३१८ ॥

एतावता 'कान्तो विरूपाक्ष—' इत्याद्यर्थदूषणं परिहृतं, इदानीं 'स्तम्बेरमास्यस्तनयः—' इत्यादिनोक्तस्य दूषणस्य परिहारार्थमुत्तरमाह—**पुष्कलमिति**। पर्वतराजस्य हिमालयस्य कन्यायाः भगवत्याः अम्बिकायाः पुत्रभाग्यमपि पुष्कलं [illegible]शेषः ॥ १२७ ॥

---

२ 'जितः काञ्च्यां'.

यतः—

कुशलीभनाथवक्त्रः पुत्रः प्रथमो हिमाद्रितनयायाः ॥
पञ्चास्यात्पितुरधिकः षडाननो नन्दनो द्वितीयोऽस्याः ॥ ३१९ ॥

---

## अथ श्रीमदेकाम्रेश्वरवर्णनम् २६.

इत्यन्यतः किंचित्परिक्रामन् सामोदम्—

शशाङ्कमौलिः सहकारमूले कैलासवासी स इहाविरासीत्[1] ॥
यस्याग्निभूर्दृक् च तनूभवश्च योषाऽपिभूषाऽपि च नागराजी ॥ ३२० ॥

क्रु०—वयस्य किं वर्णयसि विश्वविलक्षणचारित्रं रुद्रम्? लोके हि लोचनशैत्यसंपिपादयिषया यतमानान् जनानेव पश्यामः । अयं तु पशुपतिः स्थाणुरिति स्वाह्वयमन्वर्थयन्निवे[2][3] आशुशुक्षणिमक्षिण निक्षिप्तवान् ॥ १२८ ॥

---

**कुशलीति** । हिमाद्रितनयायाः भगवत्याः पार्वत्याः, भानां नक्षत्राणां नाथश्चन्द्रः सइव वक्त्रं मुखं यस्य, इभनाथस्य गजेन्द्रस्य च मुखं यस्य स इति च, कुशली प्रशस्तकल्याणयुक्तः प्रथमः पुत्रः अस्ति । अस्याः द्वितीयो नन्दनस्तु पञ्चास्यात् पञ्चमुखयुक्तात् पितुः शिवादपि अधिकः एकाननमात्रेणैवेत्यर्थः । षडाननः स्कन्दः अस्ति ॥ ३१९ ॥

अथ तस्मिन्नेव देशे स्थलान्तरवर्णनार्थमुपक्रमते कविः—**इतीत्यादि** । परिक्रामन् गच्छन् । सामोदं सानन्दम्—

**शशाङ्कमौलिरिति** । कैलासवासी कैलासपर्वताधिष्ठाता सः प्रसिद्धः शशाङ्कश्चन्द्रः मौलौ मस्तके यस्य तथाभूतः शिवः, इह काञ्चीनगर्यां सहकारस्य आम्रवृक्षस्य मूले आविरासीत् प्रकटीबभूव । स कीदृशः । यस्य शिवस्य अग्निर्भवत्युत्पद्यते यस्याः सा तथाभूता दृक् दृष्टिः तृतीयनेत्रमित्यर्थः । अग्नेर्भवतीत्यग्निभूश्च तनूभवश्च पुत्रोऽपि वर्तते । स षडानन इत्यर्थः । "पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः" इत्यमरः । तथा भूषा भूषणं चापि, नागानां सर्पाणां राजी पङ्क्तिः, योषा पत्नी चापि नगराजस्य पर्वतराजस्य हिमालयस्य अपत्यं स्त्री कन्या नागराजी, पार्वतीत्यर्थः । वर्तते । स तादृश इति संबन्धः ॥ ३२० ॥

**वयस्येति** । हे वयस्य, विश्वविलक्षणं लोकविरुद्धं नश्वरजडप्रपञ्चासक्तजनविलक्षणमित्यर्थः । चारित्रं आचरणं यस्य सः सततमात्मलीनत्वात् । तं रुद्रं किं वर्ण-

---

१ 'आविरास्ते'.　२ 'च आह्वय'.　३ 'अन्वर्थयन्निह'.

**वि०**—अवधेहि तावदभिधास्यामि रहस्यम् ॥ १२९ ॥

अङ्गानुषङ्गोदितशीतबाधामिन्दोर्द्युसिन्धोश्च समन्वयेन ॥

हर्तुं वहत्यग्निमयीं तृतीयां हरो हसन्तीमिव हन्त दृष्टिम् ॥ ३२१॥

**कृ०**—हन्त तर्हि तुहिनकिरणशकलसुरसरिज्झरीशिशिरशिरसस्त्रिपुरहरस्य कथमभिषेकप्रियता ? ॥ १३० ॥

ततश्च—

गङ्गातरङ्गावलिभिः सुधांशोः सुधाझरैश्चानिशमार्द्रमूर्ध्नः ॥

वृथाभिषेकं कलयन्ति शम्भोस्तृप्ताय तोयस्य ददत्यपः के ॥ ३२२ ॥

---

यसि ? हि यतः लोके लोचनयोः शैत्यसंपिपादयिषया शीतलसंपादनेच्छया यतमानात् यत्नं कुर्वाणान् जनान् पश्यामः अवलोकयाम एव । अयं रुद्रस्तु पशूनां गवादीनां " अहमेव पशूनामधिपतिः " सर्वे देवास्तु पशवो ब्रह्म-विष्णिवन्द्रपूर्वकाः । प्रोक्तस्तेषां पतिर्यस्मादतः पशुपतिः स्मृतः । " इति श्रुति-स्मृत्यादिपर्यालोचनया पशूनां देवानां पतिः स्वामीति च, स्थाणुः शुष्कवृक्षः, " सर्ववैकारिकलये स्थाणुस्तिष्ठति येन सः " इति स्मृतेः प्रलयोत्तरमपि स्थितिमान् इति च, इत्येतद्वयं स्वस्य आह्वयं नाम अन्वर्थयन्निव यथार्थं कुर्वन्निव आशुशुक्षणिं अग्निं " अग्निः—" इत्यतः " शिखावानाशुशुक्षणिः " इत्यमरः । अक्षिण लोचने निक्षिप्तवान् ॥ १२८ ॥

**अवधेहीति** । तावत् साकल्येन रहस्यं गोप्यं अभिधास्यामि कथयामि अवधेहि ॥ १२९ ॥

**अङ्गानुषङ्गेति** । इन्दोश्चन्द्रस्य द्युसिन्धोः गङ्गायाश्च समन्वयेन संबन्धेन अङ्गेषु सर्वावयवेषु अनुषङ्गा प्रसरन्ती उदिता उत्पन्ना या शीतबाधा शीतपीडा तां हर्तुं दूरीकर्तुं अयं शिवः अग्निमयीं अग्निप्रचुरां तृतीयां दृष्टिं हसन्तीं अङ्गारधानीमिव " अङ्गारधानिकाङ्गारशकट्यपि हसन्त्यपि " इत्यमरः । वहति धारयति । हन्तेत्यानन्दे ॥ ३०१ ॥

पुनरपि सपरिहासं दोषान्तरमाह—**हन्तेति** । हन्तेति खेदे । यद्येवं तर्हि तुहिनकिरणश्चन्द्रः तस्य शकलं कलात्मकं खण्डं, सुरसरितः गङ्गायाः झरी प्रवाहस्तेन शिशिरं शीतलं शिरः यस्य तस्य त्रिपुरहरस्य शिवस्य अभिषेकस्य प्रियता कथम् ? ॥ १३० ॥

उक्तामाशङ्कामेव द्रढयति—**गङ्गेति** । गङ्गायास्तरङ्गावलिभिः ऊर्मिपङ्क्तिभिः सुधांशोश्चन्द्रस्य सुधाझरैः अमृतप्रवाहैश्च अनिशं सततं आर्द्रमूर्ध्नः क्लिन्नमस्तकस्य शंभोः तद्भक्ता इति शेषः । अभिषेकं रुद्रसूक्तादिमन्त्रस्नानं वृथा कलयन्ति कुर्वन्ति । जलपानेनेत्यर्थः । " कर्तृ-कर्मणोः कृति " इति षष्ठी । तृप्ताय अप-

---

१ 'गङ्गानुषङ्गोदितशीतबाधाम्'. २ 'तदन्वयेन'. ३ 'सुरसरिद्वरतोयेन'.

**वि०**—अत्रापि युक्तमुत्तरं व्याहरामि ॥ १३१ ॥

ज्वलनाकलनाद्विषस्य पानाद्विषभाजां वहनाच्च तप्तमूर्तेः ॥
अनिशं त्रिदशापगाधरस्याप्यभिषेकप्रियता शिवस्य जाता ॥ ३२३ ॥

**कृ०**—अस्त्विदमथाप्यन्यदपि न युज्यते । किमसौ विहाय विहायसं संततं शङ्करशिरसि गङ्गातरङ्गान्तः प्रतिवसति मृगाङ्कः कृशाङ्गः? ॥ १३२ ॥

**वि०**—शृणु सखे तत्र कारणम् ॥ १३३ ॥

शिवशिरसि शीतभानुः सागरसूनुत्वसूचनाय परम् ॥
अधिवसति तन्महिष्या गङ्गाया जठरमल्पतनुरेषः ॥ ३२४ ॥

**कृ०**—तथापि लुब्ध एष फलप्रेप्सुभिरनादृत्यः ॥ १३४ ॥

---

उदकानि पुनः पातुमित्यर्थः । के ददति प्रयच्छन्ति? अपि तु केऽपि नैव ददतीत्यर्थः ॥ ३२२ ॥

**अत्रापीति** । अत्राभिषेकविषयेऽपि युक्तं समर्पकमेवोत्तरं व्याहरामि कथयामि ॥ १३१ ॥

किं तदित्यपेक्षायामाह—**ज्वलनेति** । ज्वलनस्य ललाटस्थतृतीयनेत्राग्नेः आकलनात् स्वीकारात्, विषस्य कालकूटसंज्ञकस्य पानात् प्राशनात्, विषभाजां सर्पाणां। कटककुण्डलाद्यलंकारत्वेन वहनाद्धारणाच्च हेतोः तप्ता संतप्ता मूर्तिः शरीरं यस्य तस्य शिवस्य अनिशं संततं त्रिदशापगायाः गङ्गायाः धरस्य धारकस्यापि सतः, अभिषेकप्रियता जाता ॥ ३२३ ॥

**अस्त्विति** । इदं अभिषेकसंबन्धि कथनं अस्तु तिष्ठतु । अथापि अन्यत् इदं वक्ष्यमाणमपि न युज्यते । तत्किम् ? असौ मृगाङ्कश्चन्द्रः कृशाङ्गः अल्पशरीरः सन् विहायसमाकाशं विहाय त्यक्त्वा, संततं शंकरशिरसि गङ्गायास्तरङ्गाणामन्तः मध्ये किं कुतो हेतोः प्रतिवसति ? ॥ १३२ ॥

**शिवशिरसीति** । एषः शीतभानुश्चन्द्रः सागरस्य समुद्रस्य सूनुत्वसूचनाय पुत्रत्वज्ञापनायेव, गम्योत्प्रेक्षेयम् । परमत्यन्तं अल्पतनुः कृशशरीरः सन् शिवशिरसि शंकरमस्तके तस्य समुद्रस्य महिष्याः स्त्रियाः गङ्गायाः जठरमुदरं अधिवसति अधितिष्ठति । “अधिशीङ्स्थासाम्–” इत्याधारस्य कर्मसंज्ञा ॥ ३२४ ॥

अन्यदपि दूषणमुद्घाटयति—**तथापीति** । तथापि गङ्गा-चन्द्रादियुक्तत्वे सत्यपि एषः शिवः लुब्धः लोभयुक्तः आदिकिरातश्च, फलप्रेप्सुभिः फलं स्वर्गापवर्गादिरूपमिच्छुभिः अनादृत्यः न आदरणीयः ॥ १३४ ॥

---

१ ‘हरस्य’.  २ ‘अस्त्वेवमथाप्यन्यदप्यनुयुज्यते’.

तथाहि—

[सौवर्णभूधरमपि स्वकरे निधाय
भिक्षां कपालभृदिहाटति कृत्तिवासाः ॥
आस्तामिदं स्वयमसौ परिगृह्य लुब्धो
लक्ष्मीपतिं तमपि मार्गणयांचकार ॥ ३२५ ॥

सूक्ष्मसितांशुकलाभेऽप्यपटो हैमधरपदनिविष्टोऽपि ॥
लुब्धोऽयमयोहस्तस्तण्डुलसत्त्वेऽप्यटत्यहो भिक्षाम् ॥ ३२६ ॥]

अत्यल्पमिदमुच्यते । यच्छङ्करसङ्गाद्गङ्गायामपि जीवनदायिन्यां संक्रान्ता तद्गता लुब्धता ॥ १३५ ॥

पश्य—

मुक्ताश्रिता विष्णुपदोदितापि गाङ्गेयमुत्पाद्य वसुप्रकृष्टम् ॥
प्राप्यापि रत्नाकरनित्यसङ्गं कपर्दिकाशां न जहाति गङ्गा ॥ ३२७ ॥

---

लुब्धत्वमेवोपपादयति—**सौवर्णेति** । असौ शिवः सौवर्णभूधरं मेरुमपि स्वकरे निधाय स्वायत्तीकृत्वा । वस्तुतस्त्रिपुरासुरवधे धनूरूपेणोपादाय इह लोके कृत्तिवासाः चर्मवसनः, कपालभृत् नरकपालधारकश्च सन्, भिक्षां भिक्षार्थमित्यर्थः । अटति परिभ्रमति । इदं स्वयं भिक्षापरिभ्रमणं आस्ताम्, परं च असौ लक्ष्मीपतिं श्रीविष्णुमपि स्वयं परिगृह्य स्वीकृत्य लुब्धः अधिकधनाभिलाषयुक्तः, तमपि विष्णुमपि मार्गणयांचकार मार्गणं याचकं वस्तुतः शरं कृतवान् । मार्गणशब्दात् "तत्करोति—" इति णिच् । प्रक्षिप्तमिदं पद्यमिति प्रतिभाति । बहुषु पुस्तकेष्वनुपलम्भात् ॥ ३२५ ॥

**सूक्ष्मेति** । अयं शिवः लुब्धः आदिकिरातश्च सन्, सूक्ष्मस्य सितस्य शुभ्रस्य च अंशुकस्य वस्त्रस्य लाभे सत्यपि, पक्षे सूक्ष्माः सिताः शुभ्राश्च अंशवः किरणा यस्य स सूक्ष्मसितांशुकश्चन्द्रः "शेषाद्विभाषा" इति कप्प्रत्ययः । तस्य लाभे सत्यपीति च । अपटः वस्त्ररहितः दिगम्बरश्च सन्, हैमधरे सौवर्णधारके पदे स्थाने पक्षे हिममेव हैमं तस्य धारके हिमालये च निविष्टः स्थितोऽपि सन् अयो लोहमयपात्रं शूलं च हस्ते यस्य सः तथाभूतः, तथा तण्डुलानां सत्त्वं अस्तित्वं, तण्डुर्नृत्याचार्यः लक्षणया तत्प्रोक्तं शास्त्रं नृत्यं वा तेन लसतीति तस्य भावस्तत्त्वं च तस्मिन् सत्यपि अहो इत्याश्चर्ये । भिक्षां अटति भिक्षार्थं परिभ्रमति ॥ ३२६ ॥

**अतीति** । किंच इदं वक्ष्यमाणं अत्यल्पं अतिसूक्ष्मं गुह्यमित्यर्थः । उच्यते । यत् शंकरस्य सङ्गात् संबन्धात् जीवनं जलं प्राणनं च ददाति तच्छीलायां, नान्तलान्डीप् । सत्यामपि गङ्गायां तद्गता शिवगता लुब्धता संक्रान्ता मिलिता ॥ १३५ ॥

[illegible]मेवोपपादयति—**मुक्ताश्रितेति** । इयं गङ्गा मुक्तेः अर्थात् संसारात्, [illegible]श्च आश्रितापि, विष्णोर्भगवतः पदात् आकाशाच्च "वियद्विष्णुपदं वा

---

[illegible]पुस्तके, अन्येषु पुस्तकेषु च । केवलं मुद्रितैकस्मिन्नत्रत्य-
[illegible]यदल्प'. ४ 'पदादुदीता'.

अन्यच्च—

सर्वतोमुखसमृद्धिजुषोद्यत्पौण्डरीकघनवासनयाऽपि ॥[1]
यत्तयोप्यवधि जह्नुमखस्तत्सत्रघातिचिरसंगतिदोषात् ॥ ३२८ ॥[2]

पुनर्विमृश्य—

ईशः करस्थीकृतकाञ्चनाद्रिः कुबेरमित्रं रजताचलस्थः ॥[3]
तथापि भिक्षाटनमस्य जातं विधौ शिरःस्थे कुटिले कुतः श्रीः॥३२९॥

---

तु पुंस्याकाश-विहायसी" इत्यमरः । उदिता उत्पन्नापि, प्रकृष्टं उत्तमं गाङ्गेयं स्वर्ण-प्रचुरं वसु धनं, पक्षे वसुषु अष्टवसुषु प्रकृष्टं श्रेष्ठं गाङ्गेयं भीष्मं च "देवभेदेऽनले रश्मौ वसू रत्ने धने वसु" इत्यमरः । "गाङ्गेयं भर्म कर्बुरम्" इति च सुवर्ण-नामसु । उत्पाद्य प्रसूय, रत्नानां मणीनां आकरेण खनिना समुद्रेण च सह, नित्यं सङ्गं प्राप्य लब्ध्वापि, कपर्दिकायां वराटिकाशां, कपर्दिनः शंकरस्य के मूर्ध्नि च "कं वारिणि च मूर्धनि" इत्यमरः । आशामभिलाषं न जहाति न त्यजति । अहो तस्या भक्तिरिति तत्त्वम् ॥ ३२७ ॥

**सर्वत इति** । सर्वतोमुखानां यज्ञविशेषाणां उदकानां च "पुष्करं सर्वतोमु-खम्" इत्युदकनामस्वमरः । समृद्धिजुषा आधिक्ययुक्तयापि तथा उद्यतां प्रफुल्लानां उत्पन्नानां च, पुण्डरीकाणि कमलान्येव पौण्डरीकाणि तेषां पौण्डरीकाणां कमलसमूहानां वा । स्वार्थे समूहे वाण् । यज्ञविशेषाणां च घनवासनया अतिसुगन्धयुक्तया बहुसंस्कारवत्यापि च तया गङ्गयापि, जह्नोर्मुनेः मखः यज्ञः अवधि विनाशितः । हन्तेर्धातोः कर्मणि लुङि वधादेशः चिण् च । इति यत् यत् यज्ञविघातरूपं कर्म, स-त्रघातिनः दक्षयज्ञविनाशकस्य शिवस्य चिरसंगतेः बहुकालसहवासस्यैव दोषात् । अन्यथा यज्ञवासनायुक्तायां तस्यां तदसंभवात् ॥ ३२८ ॥

अपि च **ईश इति** । यद्यपि ईशः शिवः करस्थीकृतः त्रिपुरविनाशसमये चा-परूपेण हस्तस्थः कृतः, हस्ते धृत इत्यर्थः । काञ्चनाद्रिः मेरुपर्वतो येन सः, करस्वी-कृत इत्यपि पाठान्तरम् । तथा कुबेरस्य मित्रं सुहृत्, रजताचले रौप्यमये कैलास-पर्वते तिष्ठतीति तथाभूतः अस्ति । तथापि ईदृशसंपत्तिमत्त्वेऽपि अस्य शिवस्य भिक्षाटनं जातं प्राप्तम् । तस्मात् कुटिले वामे वक्रे च विधौ दैवे । भोगसूचकरेषायामिति यावत् । चन्द्रे च, "विधिर्विधाने दैवेऽपि", "विधुः सुधांशुः शुभ्रांशुः" इत्युभय-त्राप्यमरः । शिरःस्थे सति, कुतः श्रीः संपत्? अपि तु दुर्लभैवेत्यर्थः । वस्तुतस्तु 'नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति' ॥ ३२९ ॥

---

१ 'वनवासनया'. २ 'व्यवधि'. ३ 'करस्वीकृत'.

किं च—

एष विरुद्धधर्मा कृत्तिवासाः कुतः स्तोतव्यः ? ॥ १३६ ॥

शृणु तावत्—

धत्ते महो मूर्ध्नि तदौषधीशमौषर्बुधं भालतलेऽङ्गकेषु ॥
फणीन्द्रमौलिस्थमणिप्रसूतं हरोऽन्धकारित्वमथाप्युपैति ॥ ३३० ॥

अपि च—

तारकारिं वहन्नङ्के मस्तके तारकाधिपम् ॥
अङ्गीकुर्वन्सुदृशमप्यलीकाक्षो विभात्ययम् ॥ ३३१ ॥

**विश्वावसुः**—किमेभिः शब्दश्लेषैकशरणैर्दूषणैरस्य खलु मृत्युंजयस्य विश्वस्तुत्यमसदृशं वदान्यत्वम् ॥ १३७ ॥

---

नैतावदेव, किंतु परस्परविरुद्धधर्मवस्तुपरिग्रहत्वमपि तस्मिन्नाह—**एष इति**। एष शिवः विरुद्धधर्मा विरुद्धाचरणशीलः कृत्तिवासाः चर्मवस्त्रः कुतः स्तोतव्यः? ॥१३६॥

तदेवोपपादयति—**धत्त इति**। हरः मूर्ध्नि मस्तके तत् प्रसिद्धं औषधीशं चन्द्रसंबन्धि महस्तेजो धत्ते धारयति, भालतले कपालस्थलोचने इत्यर्थः। उषर्बुधस्य अग्नेः इदं औषर्बुधं अग्निसंबन्धीत्यर्थः। "बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः।" इत्यग्निनामस्वमरः। तेजो धत्ते, शीतत्वप्राप्त्यर्थं चन्द्रधारणे कृते पुनरुष्णधर्माग्निधारणं विरुद्धमिति भावः। एवमग्रेऽपि यथायथमूह्यम्। तथा अङ्गान्येवाङ्गकानि तेषु सर्वावयवेष्वित्यर्थः। फणीन्द्रस्य शेषस्य मौलिस्थमणेः प्रसूतं उत्पन्नं महः धत्ते। तथापि अन्धकारः ध्वान्तं अस्यास्तीत्यन्धकारी तस्य भावः अन्धकारित्वं, पक्षे अन्धको नाम दैत्यः तस्य अरित्वं शत्रुत्वं च उपैति प्राप्नोति ॥ ३३० ॥

अन्यदपि **तारकारिमिति**। अङ्के उत्सङ्गे "उत्सङ्ग-चिह्नयोरङ्कः" इत्यमरः। तारकारिं तारकासुरस्य शत्रुं स्कन्दं, मस्तके च तारकस्य, तारकानां नक्षत्राणां च अधिपं चन्द्रं च वहन्धारयन्, तथा सुदृशं शोभनां दृष्टिं, सुष्ठु शोभने दृशौ लोचने यस्याः सा तां पार्वतीं च, अङ्गीकुर्वन् स्वीकुर्वन् वामभागेऽर्धाङ्गीकुर्वन्नित्यपि च, अलीके ललाटे अप्रियस्थले च "अलीकमप्रियेऽपि स्याद्गोध्यसत्ये नपुंसकम्।" इति मेदिनी। "ललाटमलिकं गोधिः" इत्यमरश्च। अक्षि नेत्रं यस्य सः अयं शिवः विभाति विरुद्धं प्रकाशते, विशेषेण दीप्यते इति चापि ॥ ३३१ ॥

पुनः समाधत्ते—**किमिति**। एभिः शब्दश्लेषैकशरणैः शब्दश्लेषैकावलम्बैः दूषणैर्दोषैः किम्? किंतु अस्य प्रसिद्धस्य मृत्युंजयस्य शिवस्य वदान्यत्वं दातृत्वं विश्वस्तुत्यं सर्वैरपि स्तोतुं योग्यं, अत एव असदृशं अन्यादृशं अनन्यसाधारणमिति यावत्। खलु निश्चयेन ॥ १३७ ॥

---

३ 'अन्यादृशं'.

दीर्घायुर्मुनिसूनवे स्म ददते दिव्यं तथाऽभीष्टदम्
प्रख्याताय भगीरथाय भगवत्पादामृतं प्राददात् ॥
पापेभ्योऽपि च बाण-पङ्क्तिवदनप्रेष्ठेभ्य इष्टं फलम्
प्रादात्तस्य शिवस्य भाति जगदाह्लादाय वादान्यकम् ॥ ३३२ ॥

कृ०—तदेतद्व्याहतं भाषितम् । यन्महादेवस्य वादान्यकं जगदाह्लादायेति ॥ १३८ ॥

यतः—

दत्त्वा वरं दानवराक्षसेभ्यो विश्वस्य च स्वस्य च यो विषादम् ॥
संपादयामास शशाङ्कमौलिर्दातृत्वमेतस्य तवैव हृद्यम् ॥ ३३३ ॥

वि०—कुटिलधिषण, गुणमपि दोष इति घोषयति भवान् ॥ १३९ ॥

---

तदेवोपपादयति—**दीर्घायुरिति** । यः शंकरः मुनेः मृकण्डोः सूनवे पुत्राय मार्कण्डेयाय दीर्घायुः चिरंजीवित्वं ददते स्म ददौ । 'दद दाने' इत्यस्माद्धातोर्लटि रूपम् । तथा प्रख्याताय स्वचारित्र्यप्रसिद्धाय भगीरथाय एतन्नाम्ने राज्ञे अभीष्टदं इच्छितफलप्रदं दिव्यं भगवतो विष्णोः पादसंबन्धि अमृतं जलं गङ्गारूपं प्राददात् दत्तवान् । तथा बाणः बलिपुत्रः पङ्क्तिवदनः रावणश्च तौ प्रष्ठौ मुख्यौ येषु तेभ्यः पापेभ्यः पापरूपेभ्यो दैत्येभ्योऽपि, इष्टमभीष्टं फलं प्राददात् समर्पितवान् । तस्य शिवस्य वादान्यकं दातृत्वं जगतः आह्लादाय आनन्दाय भाति विराजते ॥ ३३२ ॥

पुनरपि दोषमाह—**तदेतदिति** । तदेतत् त्वयोक्तं भाषितं व्याहतं व्याघातरूपदोषयुक्तं भवति । किं तत् । यत् महादेवस्य वादान्यकं जगतः आह्लादाय इत्युक्तं तत् ॥ १३८ ॥

कथं व्याहतं भवतीत्येतदेवोपपादयति—**दत्त्वेति** । यः शशाङ्कमौलिः शिवः दानवा दैत्याश्च राक्षसाश्च तेभ्यः वरं इच्छितफलप्राप्तिरूपं दत्त्वा, विश्वस्य स्वस्य च विषादं दुःखं संपादयामास । रावणादिसदृशेभ्यो वरदानात् जगतः, भस्मासुरादिसदृशेभ्यश्च स्वस्यापि दुःखोत्पादनात् । तस्मादेतस्य शिवस्य दातृत्वं तवैव हृद्यं मनोहरं, न तु सर्वस्येत्यर्थः ॥ ३३३ ॥

**कुटिलेति** । कुटिला वक्रा धिषणा बुद्धिर्यस्य तत्संबुद्धौ हे कुटिलधिषण, भवान् गुणमपि दोष इति घोषयति उच्चारयति ॥ १३९ ॥

---

१ 'पापिभ्यो'. २ 'प्रेष्ठेभ्यः'. ३ 'आहतं'. ४ 'आह्लादयति'. ५ 'मौलेर्'.

तथाहि—

दैत्येभ्यो न वरान् स दा¹स्यति यदि त्र्यक्षो मुहुस्तर्हि ते
नाशक्ष्यन्भुव²नानि पेष्टुमुदयं नाप्स्यद्दया शार्ङ्गिणः ॥
नोदायिष्यत मानुषादिषु हरिर्नो सेतु-गीतादिकम्
प्रार³प्स्यद्भगवान् भवार्णवममी नालङ्घयिष्यन्नराः ॥ ३३४ ॥

किंच—

पम्⁴पातरङ्गशिशिरानिलडिम्भजात—
कम्पाम्रनिष्पतितपुष्परसाभिषिक्तः ॥
संपादयत्यतुलसंपदमर्थिनोऽनु-
कम्पासुधाम्बुधिरयं पतिरम्बिकायाः ॥ ३३५ ॥

पु⁵नर्निरीक्ष्य सश्लाघम्—

अल्पोऽपि काञ्च्यामावासादासादयति गौरवम् ॥
यत एतत्पुरस्थाणुर्गिरीश इति गीयते ॥ ३३६ ॥

---

**दैत्येभ्य इति**। सः त्रीणि अक्षीणि नेत्राणि यस्य सः शिवः दैत्येभ्यः वरान् यदि न दास्यति, तर्हि ते दैत्याः मुहुर्वारंवारं भुवनानि त्रीन् लोकान् पेष्टुं चूर्णयितुं नाशक्ष्यन् समर्था नाभविष्यन्, ततश्च शार्ङ्गिणो विष्णोः दया उदयमुत्पत्तिं नाप्स्यत् न प्राप्स्यत्। ततोऽपि मानुषादिषु आदिशब्देन मत्स्य-वराहादीनां ग्रहणम्। हरिः श्रीविष्णुः नोदायिष्यत न प्रकटोऽभविष्यत्, ततः भगवान् सेतुः रामावतारे लङ्कागमनसमये समुद्रे रचितः, गीता कृष्णावतारे भक्तमर्जुनं प्रति कथिता भगवद्गीता च ते आदी यस्य तत् सेतुगीतादिकं, नो प्रारप्स्यत् नारचयिष्यत्। भवतु नाम तथा, का वा हानिरित्याशङ्कायामाह—अमी नरा मनुष्याः भवार्णवं संसारसमुद्रं नालङ्घयिष्यन्। अत्र "लिङ्निमित्ते लृङ्—" इत्यादिसूत्रेण शकआप्लृ-उदाङ्पूर्वाय-प्राङ्पूर्वरभ-लघिधातुभ्यः क्रियातिपत्तौ लृङ्। तत्रायतेरात्मनेपदम्। पदातेस्तु लृङेव। क्वचित् तत्र 'वरानदास्यत' इत्यपि पाठान्तरं दृश्यते ॥ ३३४ ॥

**पम्पेति**। पम्पा नाम श्रीमदेकाम्रेश्वरसमीपस्थं सरः तस्य तरङ्गैर्लहरीभिः शिशिराः शीतला ये अनिलस्य वायोः डिम्भाः शिशवः मन्दवायव इत्यर्थः। तैः जातः कम्पो येषां ते ये आम्रा रसालवृक्षाः तेभ्यः निष्पतितः निर्गलितो यः पुष्परसो मकरन्दः तेन अभिषिक्तः, अनुकम्पा दया एव सुधा अमृतं तस्याः अम्बुधिः समुद्रः अपरिमितदयावानित्यर्थः। अयमम्बिकायाः पतिः श्रीमदेकाम्रेश्वरः अर्थिनः याचकजनसमूहस्य अतुलां संपदं संपादयति ॥ ३३५ ॥

**अल्पोऽपीति**। अल्पोऽपि पदार्थः काञ्च्यां नगर्यामावासाद्वसतेर्हेतोः गौरवं मह-

---

१ 'अदास्यत यदि'. २ 'भुवनस्य'. ३ 'प्राभन्स्यत'. ४ 'कम्पा'. ५ 'पुरीं'.

**कृशानुः**—अन्योन्यविरुद्ध[1]स्वभावाभ्यां देवाभ्यामाक्रान्तामेनां नगरीं किं विनौषि[2]? ॥ १४० ॥

देवौ द्वावधिकाञ्चि पश्य लसतः प्राची-प्रतीच्याशयो[3]—
स्तत्रैकः कुरुते विनायकमधश्चित्रं पुरश्चापरः ॥
एको नित्यमनष्टमूर्तिरितरः ख्यातोऽष्टमूर्तिर्जग—
त्येको वारितवान् गजार्तिमचिराद्धत्ते गजार्तिं परः ॥३३७॥

स्वं आसादयति संपादयति । यतो यस्मात् कारणात् एतस्मिन् काञ्चीसंज्ञके पुरे नगरे तिष्ठतीति तत्स्थः स चासावणुश्च एतत्पुरस्थाणुः अणुमात्रः, एतस्मिन् पुरे स्थाणुः शिवः श्रीमदेकाम्रेश्वरसंज्ञकश्च, गिरीशः पर्वताधिपः कैलासाधिपश्च इत्येवंप्रकारेण गीयते स्तूयते ॥ ३३६ ॥

काञ्च्यामपि दोषोद्घाटनार्थमुपक्रामति—**अन्योन्येति** । अन्योन्यविरुद्धः परस्परविरोधी स्वभावः ययोस्ताभ्यां देवाभ्यां विष्णु-शिवाभ्यामाक्रान्तमधिष्ठितामेनां काञ्चीं नगरीं किं कथं विनौषि? 'णु स्तुतौ' इत्यादादिकस्य रूपम् । "उतो-वृद्धिः—" इति वृद्धिः ॥ १४० ॥

अन्योन्यविरुद्धस्वभावत्वमेवोपपादयति—**देवाविति** । द्वौ देवौ वरदराजैकाम्रेश्वरसंज्ञौ विष्णु-शंकरौ अधिकाञ्चि काञ्च्यां नगर्यां, विभक्त्यर्थेऽव्ययीभावः । "अव्ययीभावश्च" इति नपुंसकत्वम् । प्राची पूर्वा च प्रतीची पश्चिमा च ते आशे दिशौ तयोः, प्राच्यां प्रतीच्यां च दिशीत्यर्थः । लसतः शोभेते । तत्र तयोर्द्वयोर्मध्ये एकः वरदराजः वीनां पक्षिणां नायको गरुडस्तं अधः अधोभागे कुरुते करोति, वाहनत्वेनेत्यर्थः । अपरः श्रीमदेकाम्रेश्वरस्तु विनायकं गणपतिं पुरः अग्रभागे कुरुते धत्ते, पुत्रत्वात् । एकः वरदराजः नित्यं अनष्टमूर्तिः अष्टमूर्तिर्न भवति । वस्तुतस्तु नष्टा नाशं प्राप्ता मूर्तिः स्वरूपं यस्य सः तथा न भवतीति, अविनाशिस्वरूप इत्यर्थः । इतरः एकाम्रेश्वरश्च अष्टौ भूरादिपञ्चमहाभूतानि चन्द्र-सूर्य-यज्वानश्चेति त्रयः एवं मूर्तयः यस्य तथाभूतः जगति ख्यातः प्रसिद्धः । तथा एकः गजस्य सरःस्थगजेन्द्रस्य आर्तिं पीडां नक्रकृतां अचिरात् शीघ्रं वारितवान् । परः अन्यस्तु गजस्य गजासुरस्यार्तिं पीडां धत्ते करोति । अत्र भावदर्पणकृता 'गजस्य आर्तिं चर्म धत्ते धारयति' इति यदुक्तं तदविचाररमणीयमेव । आर्तिशब्दस्य चर्मवाचकत्वं क्वापि कोशादौ नोपलभ्यते । एतच्चित्रमाश्चर्यं पश्य । क्वचित् 'रत्या' इति पाठान्तरं दृश्यते । तत्पक्षे अगजायाः हिमालयोत्पन्नायाः पार्वत्याः आर्तिं काममयीं पीडां रत्या सुरतेन वारितवान् इत्यर्थः । एतदेव पाठान्तरमादृत्य भावदर्पणकृता व्याख्यातम् । परं नैतस्मात् 'धत्ते' इत्येव पाठान्तरं युक्तमिति भाति 'वारितवान्' इत्येतदपेक्षया तस्यैव स्वारस्यादित्याकलयन्तु सुधियः ॥ ३३७ ॥

१ 'विरुद्धधर्मस्वभावाभ्यां'. २ 'विस्तौषि'. ३ 'प्राचीप्रतीच्यन्तयोः'. ४ '—

यद्वा—

काञ्चीनाम्नि पुरे सुरेन्द्रमहिते[1] प्राक्पश्चिमोद्देशयो-
श्चित्रं दैवतयोश्चिरं निवसतो रीतिर्विरुद्धा मिथः ॥
एको हि[2] द्विजराजमप्यधरयत्यन्यस्तमुत्तंसय-
त्यङ्घ्रौ हन्त बिभर्ति कश्चिदपरः स्वे मूर्धनि स्वर्धुनीम् ॥ ३३८ ॥

विरुद्धदेवाक्रान्तकाञ्चीनगरसमागमाद्वारणधराधरो[3]ऽप्येवम् ॥ १४१ ॥

तथाहि—

भेत्ता[4] गोप्ता च हरिर्महासवजुषो हिरण्यगर्भस्य ॥
भयकृदिभस्याभयकृन्मूलाञ्चलयोश्चकास्ति हस्तिगिरेः ॥ ३३९ ॥

अयं चापरो दोषः—

दरानुषङ्गं[5] च गदान्वयं च त्यक्तुं जना ये निवसन्ति काञ्च्याम् ॥
दन्तावलाद्रीश्वरमाश्रितास्ते देहक्षये तौ नियतं भजन्ते ॥ ३४० ॥

---

पक्षान्तरेणापि तदेवोपपादयति—**काञ्चीनाम्नीति** । सुरेन्द्रेणेन्द्रेण महिते पूजिते काञ्चीनाम्नि पुरे नगरे, प्राक्पश्चिमोद्देशयोः पूर्वपश्चिमदिशोरित्यर्थः । चिरं बहुकालं निवसतोः वासं कुर्वतोः दैवतयोः वरदराजैकाम्रेश्वरयोः मिथः परस्परं विरुद्धा रीतिः आचारः । हि यस्मात् एकः वरदराजः द्विजराजं पक्षिराजं ब्राह्मणराजं चापि, अधरयति वाहनत्वेनाधरीकुरुते तिरस्करोति च । अन्यः एकाम्रेश्वरस्तु तं द्विजराजं चन्द्रं उत्तंसयति पूजयति शिरोभूषणत्वेन स्वीकरोति च । हन्तेत्याश्चर्ये । कश्चिदेकः स्वर्धुनीं गङ्गां अङ्घ्रौ चरणे बिभर्ति धारयति, अपरः स्वे मूर्धनि मस्तके च स्वर्धुनीं बिभर्ति । एतद्वा चित्रमाश्चर्यं पश्येति पूर्वेणान्वयः ॥ ३३८ ॥

अपि च **विरुद्धेति** । विरुद्धौ यौ देवौ वरदराजैकाम्रेश्वरौ ताभ्यामाक्रान्तमधिष्ठितं यत्काञ्चीनगरं तस्य समागमात् संबन्धाद्धेतोः वारणधराधरः हस्तिशैलोपि एवं विरुद्धाचार एव ॥ १४१ ॥

**भेत्तेति** । अयं हरिः श्रीवरदराजरूपः महांश्चासौ आसवः मद्यं महांश्चासौ सवो यज्ञश्च तं जुषत इति तज्जुषः नित्यं मद्यपायिनोऽश्वमेधादिसदृशमहायज्ञकर्तुश्चेत्यर्थः । हिरण्यं चासौ गर्भश्च तस्य हिरण्यकशिपोरित्यर्थः । हिरण्यगर्भस्य ब्रह्मणश्च भेत्ता विनाशकर्ता गोप्ता रक्षिता च । तथा इभस्य हिरण्यकशिपुरूपस्य गजेन्द्रस्य च भयकृत् भीत्युत्पादकः, अभयकृच्च भयविनाशयिता च हस्तिगिरेः मूलाञ्चलयोः मूले शिखरे चेत्यर्थः । चकास्ति प्रकाशते ॥ ३३९ ॥

अपरमपि दोषं कथयति—**दरानुषङ्गमिति** । ये जनाः दरस्य भयस्य अनुषङ्गं

---

१ 'सुरेश'. २ 'यद्वि'. ३ 'भूधरो'. ४ 'छेत्ता गोप्ता च हरो हरिः सव,' 'भेत्तास्ति'. ५ 'दारानुषङ्गं'.

**वि०**—सखे मैवं संभाषिष्ठाः, यत एकरूपदैवतमिदं नगरमिति समर्थ्यते। शृणु तावत् ॥ १४२ ॥

फणिपतिसरस्फुरन्तीभनायकधरोत्तमाङ्गशोभितनुः ॥
भवहरिसंज्ञा काञ्च्योः पूर्वापरयोर्हि देवता जयति ॥ ३४१ ॥

अन्यच्चास्य नगरस्य भूषणमेव न तु दूषणम् ॥ १४३ ॥

इत्यन्यत्र दृष्टिमादाय सानन्दम्—

अहो खलु ममाद्य पचेलिमं भागधेयम् ॥ १४४ ॥

यतः—

सुरयौवतोपगीतः प्रीतः पञ्चाननो मुनिध्यातः ॥
व्यासकृतौ यः ख्यातः पाण्डवदूतः स दृक्पथं नीतः ॥ ३४२॥

---

संबन्धं, गदस्य रोगस्य अन्वयं स्पर्शं च त्यक्तुं हातुं काञ्च्यां नगर्यां वसन्ति, ते जनाः दन्तावलाद्रीश्वरं हस्तिशैलाधिपतिं वरदराजमित्यर्थः। "दन्ती दन्तावलो हस्ती" इत्यमरः। आश्रिताः सन्तः, देहक्षये देहावसाने जाते सति तौ दराङ्गुषङ्गगदान्वयौ भगवत्सारूप्यात् पाञ्चजन्याभिधशङ्खस्य कौमोदकीत्याख्यगदायाश्च संबन्धमित्यर्थः। नियतं नियमेन निश्चयेनेत्यर्थः। भजन्ते सेवन्ते ॥ ३४० ॥

अथ समाधत्ते—**सख इति**। हे सखे, मैवं संभाषिष्ठाः पूर्वोक्तदोषयुक्तभाषणं मा कुरु। यतो यस्मात्कारणात् एकरूपे अभिन्नस्वरूपे दैवते वरदराज-एकाम्रेश्वररूपे यस्मिन् तथाभूतमिदं काञ्चीसंज्ञकं नगरं इत्येवं समर्थ्यते साध्यते। मयेति शेषः ॥ १४२॥

तमेव प्रकारं दर्शयति—**फणिपतीति**। फणिपतिसरसि तन्निकटवर्तिनि अनन्तसरोवरे स्फुरन्ती प्रकाशमाना अर्थाद्वरदराजरूपा, फणिपतीनां सर्पाधिपानां सरैः हारैः स्फुरन्तीति च एकाम्रेश्वरसंज्ञकशिवरूपेत्यर्थः। इभनायकधरस्य हस्तिशैलस्य उत्तमाङ्गे शिरसि शिखरे इत्यर्थः। भानां नक्षत्राणां नायकश्चन्द्रः तस्य धरेण धारकेणोत्तमाङ्गेन शिरसा च शोभिनी तनुः शरीरं यस्याः सा, भवः हरिश्च इति संज्ञे नामनी, भवं संसारं हरन्ति तथाभूताश्च संज्ञाः वरदराज-राम-कृष्णादिनामानि च यस्याः सा देवता पूर्वा चापरा च तयोः विष्णु-शिवसंज्ञयोरित्यर्थः। काञ्च्योः जयति हि जयत्येव। एवं चेदं नगरमेकरूपदैवतमेवेति भावः ॥ ३४१ ॥

अथ तत्रस्थपार्थसारथिभगवद्वर्णनं सूचयन्नाह—**अन्यच्चेति**। अस्य नगरस्य काञ्चीनगरस्य भूषणमेव ॥ १४३ ॥

**अहो इति**। आश्चर्ये। ममाद्य पचेलिमं फलाभिमुखं "तव्यत्तव्यानीयरः" इति सूत्रस्थेन "केलिमर उपसंख्यानम्" इति वार्तिकेन केलिमर्प्रत्ययः। भाग्यम् दैवम् ॥ १४४ ॥

**सुरेति**। सुरयौवतेन देवस्त्रीसमूहेन। समूहार्थेऽण्। "गणिकादेस्तु

---

१ 'हर'. २ 'स्फुटतरपञ्चासनामुनि'.

कृ०—अनुचितकर्मासौ किमर्थमनुवर्ण्यते ? ॥ १४५ ॥

सकलजगतामीशानोऽपि स्वयं विगतश्रिया—
मिदमनुचितं दूतो जातो यदेष पृथाभुवाम् ॥
किमिह महतां हृद्या खद्योतपोतनिकेतने
चिरमधिपतेर्भासां दासानुदासतया स्थितिः ॥ ३४३ ॥

वि०—पुरोभागिन्,भगवद्गुणेषु दोषमनीषया भवानेव दुष्यति॥१४६॥

श्रूयतामेतत्—

कवित्वस्य गाम्भीर्यमौदार्यमृद्धेः प्रभुत्वस्य शौर्यं गुरुत्वस्य विद्याम् ॥
महावंश्यतायाः सदाचारपूर्तिं महत्त्वस्य सौलभ्यमाकल्पमाहुः ॥३४४॥

---

गाणिक्यं गार्भिणं यौवतं गणे" इत्यमरः । सुरयुवतीनां समूह इति विग्रहः । उपगीतः प्रशंसितः, प्रातः प्रभातकाले मुनिभिः सनकादिभिः ध्यातः अनन्यमनसा चिन्तितः, यश्च व्यासस्य कृतौ महाभारते ख्यातः नायकत्वेन प्रसिद्धः सः पद्माननः कमलमुखः पाण्डवानां दूतः भगवान् श्रीकृष्णः, दृक्पथं दृष्टिपथं नीतः प्रापितः । मया दृष्टः इत्यर्थः ॥ ३४२ ॥

तं दूषयति—**अनुचितेति** । अनुचितानि अयोग्यानि कर्माणि यस्य सः असौ पाण्डवदूतः किमर्थमनुवर्ण्यते स्तूयते । त्वयेति शेषः ॥ १४५ ॥

अनुचितकर्मत्वमेव प्रतिपादयति—**सकलजगतामिति** । यत् यस्मात् कारणात् एष श्रीकृष्णः स्वयं सकलजगतां त्रयाणामपि लोकानामित्यर्थः । ईशानोऽधिपतिरपि सन्, विगता कपटद्यूते विनष्टा श्री राज्याद्यैश्वर्यं येषां तेषां पृथाभुवां कुन्तीपुत्राणां पाण्डवानां दूतः जातः इदमेव अनुचितमयोग्यम् । अत्र दृष्टान्तमाह— भासां कान्तीनामधिपतेः सूर्यस्य खद्योतपोतानां ज्योतिरिङ्गणशिशूनां निकेतने गृहे । "यानपात्रे शिशौ पोतः" इत्यमरः । दासानां सेवकानां अनुदासः तस्य भावो दासानुदासता तया तद्रूपेणेत्यर्थः । स्थितिः सादि चिरं बहुकालपर्यन्तं, इह लोके महतां किं हृद्या मनोहरा भवति ? अपि तु नैवेत्यर्थः ॥ ३४३ ॥

**पुरोभागिन्निति** । हे पुरोभागिन् दोषैकदर्शिन्, भगवतो गुणेषु दोषमनीषया दोषबुद्ध्या भवानेव दुष्यति ॥ १४६ ॥

**कवित्वस्येति** । कवित्वस्य काव्यरचनस्य गाम्भीर्यं अर्थबाहुल्यालंकारादिसंपन्नत्वेन गभीरत्वं आकल्पं भूषणमाहुः । ऋद्धेः संपत्तेः औदार्यं दातृत्वं आकल्पं, प्रभुत्वस्य आधिपत्यस्य शौर्यं शूरत्वं, गुरुत्वस्य आचार्यत्वस्य विद्यां, महावंश्यतायाः सद्वंशोत्पन्नत्वस्य सदाचारेण सत्कर्माचरणेन पूर्तिं परिपूर्णतां, महत्त्वस्य सर्वजनश्रेष्ठत्वस्य सौलभ्यं सुलभत्वं सर्वेषामपि जनानां सहजदर्शनत्वमिति यावत् । सर्वत्र आकल्पमित्यनुसंधेयम् ॥ ३४४ ॥

इत्यपरत्र विमानमानयन् सानन्दम् ।

अत्र हि—

विकचरुचिरपुण्डरीकषण्डद्युतिमदमोचनलोचनप्रभावः ॥
जयति विजयराघवः स देवः शुचितरगृध्रसरोवरोपकण्ठे ॥३४५

किंच—

सम्पातिसोदरसरस्तटसंप्ररूढो
भात्यद्भुतो विजयराघवपारिजातः ॥
शाखाततेरुपरि सद्भिरुदीक्ष्यते यो
यस्याध एव सकलः सुमनःप्रपञ्चः ॥ ३४६ ॥

पुनः सभक्तिप्रकर्षं जनानुद्दिश्य—

भो भो भुक्तिमुक्तिप्रेप्सवः इदं शृण्वन्तु भवन्तः ॥ १४७ ॥

---

अथ विजयराघववर्णनमुपसूचयन्नाह—**विकचेति** । विकचं विकासितं अत एव रुचिरं सुन्दरं यत्पुण्डरीकषण्डं श्वेतकमलवृन्दं "पुण्डरीकं सिताम्भोजम्" इत्यमरः । तस्य द्युतिमदं कान्तिगर्वं मोचयतीति तथाभूतः लोचनयोः प्रभावो यस्य सः, सः त्रिलोकीविश्रुतः विजयराघवो देवः शुचितरस्य अतीव पवित्रस्य गृध्रसरोवरस्य एतदाख्यतीर्थस्य उपकण्ठे अन्तिके "उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्" इत्यमरः। जयति सर्वोत्कर्षेण वर्तते ॥ ३४५ ॥

**सम्पातीति** । सम्पातेः सोदरस्य बन्धोर्जटायुषः संबन्धि सरः गृध्रतीर्थमित्यर्थः। तस्य तटे तीरे संप्ररूढः उत्पन्नः अद्भुतः आश्चर्योत्पादकः विजयराघवः एतत्संज्ञको भगवानेव पारिजातः वृक्षः भाति शोभते । अद्भुतत्वमेव प्रपञ्चयति—लोके हि वृक्षस्योपरितनभागे शाखाः संभवन्ति । यः अयं विजयराघवस्तु सद्भिः सज्जनैः शाखानां वृक्षस्कन्धानां वेदशाखानां आश्वलायनापस्तम्ब-बौधायनादीनां च ततेः उपरि ऊर्ध्वभागे उपनिषत्सु च उदीक्ष्यते अवलोक्यते। तथा लोके वृक्षशाखाग्रे पुष्पाण्युद्भवन्ति । यस्यास्य विजयराघवस्य तु, अध एवाधोभागे एव सकलः संपूर्णः सुमनसां पुष्पाणां प्रपञ्चः विस्तारः उदीक्ष्यते अवलोक्यते । एतेन "ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।" इति भगवद्गीतोक्तार्थः स्मारितः । तत्र अश्वत्थरूपकमत्र च पारिजातरूपकमियानेव भेदः ॥ ३४६ ॥

**भो भो इति** । भो भो इति संबोधने । भुक्तिश्च मुक्तिश्च ते प्रकर्षेण ईप्सन्ति इच्छन्ति ते तथाभूता हे जनाः इदं वक्ष्यमाणं शृण्वन्तु भवन्तः ॥ १४७ ॥

---

१ 'एषः'. २ 'भक्ति-'.

विश्रुताश्रितवात्सल्यं वीरं विजयराघवम् ॥
नमस्कुरुत यो गृध्रं समस्कुरुत दाहतः ॥ ३४७ ॥

अत्र च गृध्रपतिक्षेत्रे विश्वप्रसिद्धा काचिद्वैचित्री ॥ १४८ ॥

तनयार्थनया समागताभिस्तरुणीभिः परिभर्जिताश्च मुद्गाः ॥
दृढमङ्कुरमत्र देवशक्त्या सममासां पुलकाङ्कुरैः फलन्ति ॥ ३४८ ॥

कृ०—निजरूपमहिमाननुरूपस्थितिरसौ विजयराघवः किमीड्यते? १४९

शुकस्तुतो हंसमयूरवाहमुखप्रगीतो गरुडासनोऽसौ ॥
क्षीराब्धितीरावसथोऽपि वासं करोत्यहो गृध्रसरोऽन्तिकेऽस्मिन् ॥३४९॥

---

किं तदित्यपेक्षायामाह—**विश्रुतेति** । यो विजयराघवः गृध्रं जटायुषं दाहतः दहनेन समस्कुरुत संचस्कार । तस्य दाहादिसंस्कारांश्चक्रे इत्यर्थः । "संपरिभ्यां करोतौ भूषणे" इति सुडागमः स च "अडभ्यासव्यवायेऽपि" इत्युक्तत्वात् तद्व्यवधानेऽपि । अत एव विश्रुतं प्रसिद्धं आश्रितेषु भक्तेषु वात्सल्यं प्रेम यस्य सः तं वीरं शौर्यादिगुणयुक्तं विजयराघवं नमस्कुरुत । यूयं सर्वे इति शेषः ॥ ३४७ ॥

**अत्र चेति** । अत्र गृध्रपतिक्षेत्रे जटायुषस्तीर्थे इत्यर्थः । विश्वप्रसिद्धा काचित् चित्ताह्लादकर्त्री वैचित्री आश्चर्यम् ॥ १४८ ॥

वैचित्रीमेवाह—**तनयार्थनयेति** । अत्र विजयराघवक्षेत्रे तनयानां पुत्राणां अर्थनया प्रार्थनया समागताभिः प्राप्ताभिः तरुणीभिः वन्ध्यस्त्रीभिः परिभर्जिताः भक्षणार्थं पाचिताः मुद्गाः देवस्य विजयराघवस्य शक्त्या सामर्थ्येन आसां स्त्रीणां पुलकाङ्कुरैः रोमाञ्चोद्गमैः समं सह, दृढमत्यर्थं यथा तथा अङ्कुरं फलन्ति उत्पादयन्ति । भर्जितधान्यस्य कुत्राप्यङ्कुरासंभवात्तदेवात्राश्चर्यमिति भावः ॥ ३४८ ॥

**निजेति** । निजस्य आत्मनः रूपस्य यो महिमा माहात्म्यं तस्य अननुरूपा अयोग्या स्थितिः रीतिर्यस्य सः असौ विजयराघवः किं कुतो हेतोः ईड्यते स्तूयते? । त्वयेति शेषः ॥ १४९ ॥

कथं वाननुरूपस्थितिरित्याकाङ्क्षायामाह—**शुकस्तुत इति** । यो विजयराघवः शुकेन कीरेण शुकाचार्येण योगिना च स्तुतः, हंसश्च मयूरश्च तौ वाहौ वाहने ययोस्तौ ब्रह्म-षडाननौ मुखं मुख्यौ येषां तैरिन्द्रादिदेवैः प्रगीतः प्रकर्षेण वर्णितः, पुनश्च गरुडासनः क्षीराब्धितीरे क्षीरसागरतीरे आवसथं स्थानं यस्य तथाभूतोपि सन्, असौ विजयराघवः अस्मिन् गृध्रसरसः गृध्रतीर्थस्य अन्तिके तीरे वासं करोति । अहो अतीवायुक्तमेतदित्यर्थः । श्लेषमूलकविरोधाभासोऽत्रालंकारः । भक्तत्वाद्गृध्रेऽपि वात्सल्यप्रतीतेश्चालंकारस्य ध्वनिमात्ररूपत्वम् ॥ ३४९ ॥

---

'स्तीरे'.

**वि०**—तदेतद्दयापयोनिधेरस्य भूषणमेव न तु दूषणम्[1] ॥ १५० ॥
तत्तादृगुत्तमपदे तमसः परस्तादस्तामयैरतुलसूरिभिरर्चितोऽपि[2] ॥
अत्राविरस्ति[3] हरिरेष चिरं नराणां दृष्टिं कृतार्थयितुमेव दृढानुकम्पः ३५०

## अथ क्षीरनदीवर्णनम् २७.

इति दक्षिणतो विमानं प्रस्थापयन् सहर्षम्—
इयं हि—

गङ्गा-सिन्धु-सरस्वती-भवहरातुङ्गा-पतङ्गात्मजा-
रङ्गाभ्याशतरङ्गिणीर्वदघतत्यङ्गारभङ्गावहा[4] ॥
शुग्धाराशमनी मनीषिजनतारब्धावगाहा मुहु—
र्मुग्धानामपि शुद्धबुद्धि[5]जननी दुग्धापगा दृश्यते ॥ ३५१ ॥

**तदेतदिति** । तदेतत्त्वया वर्णितं दयापयोनिधेर्दयासागरस्यास्य विजयराघवस्य भूषणमेव न तु दूषणम् ॥ १५० ॥

**तदिति** । तमसः अज्ञानस्य परस्तात् परस्मिन् "दिक्छब्देभ्यः सप्तमी-पञ्चमी-प्रथमाभ्यः–" इत्यादिसूत्रेण सप्तम्यर्थेऽस्तातिप्रत्ययः । तत्तादृशि तथाविधप्रसिद्धे उत्तमपदे वैकुण्ठे अस्तामयैर्दोषरहितैः अत एव अतुलसूरिभिः अनन्यसदृशैः विद्वद्भिः सनक-नारदप्रभृतिभिः आर्चितः पूजितोऽपि सन्, दृढानुकम्पः सततभक्तप्रेमवान्, एषः हरिर्विजयराघवरूपः, अत्र गृध्रसरसि चिरं बहुकालं आविरस्ति प्रकटो वर्तते इति यत्, तत् नराणां मनुष्याणां दृष्टिं नेत्रं, जातावेकवचनम् । सफलयितुं स्वदर्शनेन सफलीकर्तुमेव ॥ ३५० ॥

अथ क्षीरनदीवर्णनार्थमुपक्रमते—**गङ्गेति** । गङ्गासिन्धुर्गङ्गा नदी अथवा सिन्धुनाम्नी अन्या नदी, सरस्वती, भवहरा संसारनाशिनी तुङ्गा, पतङ्गस्य सूर्यस्य । "पतङ्गौ पक्षि-सूर्यौ च" इत्यमरः । आत्मजा यमुना " कालिन्दी सूर्यतनया यमुना " इति चामरः । रङ्गाभ्याशे रङ्गनाथक्षेत्रसमीपे या तरङ्गिणी नदी कावेरी च ता इव तद्वत् । अघानां पापानां ततिः परम्परैव अङ्गाराः दाहकत्वात् उल्मुकानि "अङ्गारोऽलातमुल्मुकम्" इत्यमरः । तेषां भङ्गावहा नाशसंपादयित्री, तथा शुचां दुःखानां धारायाः पङ्क्तेः शमनी विनाशयित्री मुहुर्वारंवारं मनीषिजनतया विद्वत्समूहेन आरब्धाः उपक्रान्ताः अवगाहाः स्नानानि यस्यां सा तथाभूता, मुग्धानां मूर्खाणामपि "मुग्धः

१ 'एतत् क्वचिन्नास्ति'. २ 'अस्तामयेऽप्य'. ३ 'आविरास'. ४ 'वदघहा गम्भीरभङ्गा'. ५ 'शुद्धि'.

किंच—

मम दुग्धनदी धनदीकृतमज्जन्मानवा नवाम्भोभिः ॥
बुधजातनुता तनुतां तनुतां तनुतापहृद्धनाघानाम् ॥ ३५२ ॥

कृ०—भवत्वेवमथाप्यस्याः क्षीरतरङ्गिण्या विधिना कृता विरसता ॥ १५१ ॥

कालुष्यलेशविधुरा मधुराऽपि पयोनदी ॥
रोचते साधवे युक्ता नो चेल्लवणसिन्धुना ॥ ३५३ ॥

वि०—गुणमपि भणसि दोषतया ॥ १५२ ॥

यतः—

क्वचन समागतसिन्धुनि धुनीजले साधुनि स्नानम् ॥
पङ्कविलोपं कलयति संघटयति श्रियमिति स्मरन्ति बुधाः॥३५४॥

---

सुन्दर-मूढयोः " इति कोशः । शुद्धां निर्मलां बुद्धिं जनयति उत्पादयतीति तज्जननी दुग्धापगा क्षीरनदी दृश्यते ॥ ३५१ ॥

**ममेति** । नवानि च तानि अम्भांसि उदकानि च तैर्धनदीकृताः पूर्वं दरिद्राः सन्तः कुबेरवद्धनाढ्याः कृताः मज्जन्तः स्वस्यां अवगाहमानाः मानवा यया सा, बुधानां जातेन समूहेन नुता स्तुता, तनोः शरीरस्य तापहृत्, संतापहर्त्री, दुग्धनदी क्षीरनदी, मम सबन्धिनां घनाघानां महापापानां तनुतां क्षीणत्वं, तनुतां करोतु, पापानि विनाशयत्वित्यर्थः ॥ ३५२ ॥

**भवत्विति** । एवं त्वदुक्तप्रकारं भवतु अस्तु, अथापि अस्याः क्षीरतरङ्गिण्याः क्षीरनद्याः विधिना दैवेन विरसता रसरहितता अनास्वाद्यतेत्यर्थः । कृता ॥ १५१ ॥

**कालुष्येति** । कालुष्यस्य मालिन्यस्य लेशेन लवेनापि विधुरा रहिता सत्यपि, मधुराऽपि पयोनदी क्षीरनदी, लवणसिन्धुना क्षारसमुद्रेण युक्ता नो चेन्न भवेद्यदि तर्हि साधवे सज्जनाय रोचते लवणसंसृष्टक्षीरपानस्य धर्मशास्त्रनिषिद्धत्वादिति भावः ॥३५३॥

**क्वचनेति** । समागतः संगतः सिन्धुः समुद्रः येन तस्मिन्, अत एव साधुनि पवित्रतया शोभने क्वचन कस्मिन्नपि धुनीजले नद्याः उदके स्नानं पङ्कस्य पापस्य कर्दमस्य च विलोपं नाशं कलयति संपादयति । श्रियं संपत्तिं च संघटयति उत्पादयति । इत्युक्तप्रकारं, बुधाः स्मरन्ति जानन्ति । क्वचित् 'धियं' इति पाठान्तरं, तत्पक्षे उत्तमां बुद्धिमित्यर्थः । अत्र च " समुद्रगानदीस्नानं नराणां शुद्धबुद्धिदम् " इति स्मृतिरप्यनुकूला ॥ ३५४ ॥

---

१ 'कृद्धनाघानां'. २ 'नीरसता'. ३ 'सिन्धुजले'. ४ 'धियं'.

# अथ बाहानदीवर्णनम् २८.

किंचिद्दक्षिणतोऽभिक्रम्य—

मोहादिदोषरहितां तटवासिदेहि-
व्यूहाय कामपि मतिं महतीं दिशन्ती ॥
स्वाहाकरोति दुरितानि शुभप्रवाहा[1]
बाहानदी बुधसमूहकृतावगाहा ॥ ३५५ ॥

अस्याश्चोत्तरतीरे श्रोत्रियोत्तंसनिवासयोग्यः समग्रगुणोऽसावग्रहारः संलक्ष्यते पश्य ॥ १५३ ॥

कर्णानन्दकरस्फुरन्मधुकरव्याहारबाहापगा-
रोधःशाखिमरन्दतुन्दिलपयःकल्याणकुल्यावृतः ॥
आत्रेयान्वयविद्वदध्वरहविर्गन्धानुबन्धार्पित-
क्षेमो भात्यरशाणिपाल इति हि ग्रामोऽभिरामो भुवि॥३५६॥

---

अथ बाहानदीं वर्णयति—**मोहेति** । तटयोस्तीरयोर्वासिनां वसतिं कुर्वतां देहिनां प्राणिनां व्यूहाय समूहाय, मोहादिदोषरहितां, आदिशब्देन लोभादीनां ग्रहणम् । कामप्यनिर्वाच्यां, महतीं स्वर्गापवर्गादिमहाफलप्रदामित्यर्थः । मतिं ज्ञानं दिशन्ती ददती । बुधसमूहकृतावगाहा पण्डितजनवृन्दकृतस्नाना बाहानदी शुभप्रवाहा मङ्गलकरप्रवाहा, दुरितानि पापानि स्वाहाकरोति विनाशयतीत्यर्थः ॥ ३५५ ॥

**अस्या इति** । अस्याः बाहानद्याः उत्तरे तीरे श्रोत्रियोत्तंसानां अग्निहोत्रिश्रेष्ठानां निवासयोग्यः समग्राः संपूर्णा गुणाः कुशसमित्समृद्ध्यादयो यस्मिन् असौ अग्रहारः ब्राह्मणस्वामिको ग्रामः । अस्तीति शेषः ॥ १५३ ॥

**कर्णेति** । कर्णानन्दकराः श्रोत्रयोरानन्दजनकाः स्फुरन्तश्च मधुकराणां व्याहाराः उक्तयो गुञ्जारवरूपा इत्यर्थः । येषु तेषां बाहापगायाः रोधसि तटे ये शाखिनो वृक्षास्तेषां संबन्धिभिः मरन्दैस्तुन्दिलस्य परिपूर्णस्य पयसः जलस्य कल्याणाभिः कुल्याभिः कृत्रिमसरिद्भिः 'कालवा' इति महाराष्ट्रभाषाप्रसिद्धैरित्यर्थः । वृतः वेष्टितः । अत्रेर्मुनेरयं आत्रेयः स चासौ अन्वयः वंशः येषां तेषां विदुषां अध्वरेषु यज्ञेषु हविषां पुरोडाश-वपादीनां गन्धस्य अनुबन्धेन संबन्धेन आर्पितं दत्तं क्षेमं कुशलं यस्य सः । अभिरामः मनोहरः भुवि 'अरशाणिपाल' इति तन्नामकः ग्रामः भाति प्रकाशते । हि प्रसिद्धौ । अयं कवेरग्रहारः केनचिद्राज्ञा विद्याचरणादिसंतुष्टेन समर्पित इति बोध्यम् ॥ ३५६ ॥

---

१ 'शुभप्रवाहैर्'.

किंच—

साध्वग्रे-सरयूपेतः साकेतनगरश्रियम् ॥
अग्रहारो विभार्त्येष रघुनाथाभिरक्षितः ॥ ३५७ ॥

किंचिद्विमानमुन्नमय्य नद्योः पार्श्वद्वयमवलोक्य सश्लाघम्—

चारुगुणैः सन्मणिभिर्जुष्टा बाहानदी-पयस्विन्योः ॥
उपकूलमग्रहारा उदग्रहारा इवावनेर्भान्ति ॥ ३५८ ॥

**कृ०**—अमून् ग्रामान् कथंकारमग्रहारान् प्रचक्षते ॥
सुवृत्तमुक्तारहिता यदेनानाश्रिता जनाः ॥ ३५९ ॥

**विश्वावसुः**—सखे भवता स्तुतिरेवैषां भङ्ग्यन्तरेण कृतेति मृष्यामि तुष्यामि च ॥ १५४ ॥

---

**साध्विति** । साधुषु मध्ये अग्रेसराणां श्रेष्ठानां आत्रेयगोत्राणां यूपैः यज्ञपशुबन्धनस्तम्भैः इतः प्राप्तः, पक्षे साधु अग्रे सरय्वा नाम नद्या उपेतः, रघुनाथेन श्रीरघुनाथदीक्षितेन कवेः पित्रा, श्रीरामेण च अभिरक्षितः एष अग्रहारः साकेतस्य अयोध्यायाः श्रियं शोभां वहति धारयति ॥ ३५७ ॥

**किंचिदिति** । उन्नमय्य ऊर्ध्वं नीत्वा, नद्योः बाहा—क्षीरनद्योः—

**चार्विति** । चारवः गुणाः दया-दाक्षिण्यादयः सूत्राणि च येषां तैः सतां साधूनां मणिभिः श्रेष्ठैः, पक्षे सद्भिरुत्तमैः मणिभी रत्नैश्च जुष्टाः युक्ताः बाहानदी-पयस्विन्योः बाहानदी-क्षीरनद्योः कूलानां तीराणां समीपे इत्युपकूलं, सामीप्येऽव्ययीभावः । " कूलं रोधश्च तीरं च " इत्यमरः । अग्रहाराः, अवनेर्भूमेः उदग्राः उन्नताः हारा इव "उच्च-प्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ वामने ।" इत्यमरः। भान्ति प्रकाशन्ते॥ ३५८॥

**अमूनिति** । अमून् नदीद्वयतीरस्थान् ग्रामान् कथंकारं कथमित्यर्थः । अग्रहारान् प्रचक्षते वदन्ति? बुधा इति शेषः । यद्यस्मादेनान् ग्रामान् आश्रिता जनाः, सुवृत्ताभिः सुन्दरवर्तुलाकृतिभिः मुक्ताभिर्मौक्तिकैः रहिताः, सुवृत्तैः साध्वाचारैः मुक्तैर्विगतसंसारबन्धनैश्च जनैः अरहिताः संगताश्च, "वृत्तोऽधीतेऽप्यतीतेऽपि वर्तुलेऽपि मृते वृते । वृत्तेऽन्यलिङ्गं वा क्लीबे छन्दश्चारित्रवृत्तिषु" इति मेदिनी । सन्तीति शेषः ॥ ३५९ ॥

**सखे इति** । भवता भङ्ग्यन्तरेण अन्यया रीत्या व्याजस्तुतिप्रकारेणेति यावत् । नानां स्तुतिः प्रशंसैव कृता, इति हेतोः मृष्यामि सहे, तुष्यामि संतुष्टश्च ॥

# अथ तुण्डीरमण्डलवर्णनम् २९.

अथ सर्वतस्तुण्डीरमण्डलमवलोकयन् सहर्षातिरेकम्—

वयस्य स्फुटमस्य तुण्डीरमण्डलस्य[1] पश्यतु भवान् पावनत्वं रमणीयत्वं च ॥ १५५ ॥

तीरे तीरे स्फुरति सरितामग्रहारोऽत्र भूया—
नग्र्यो वर्गो धरणिमरुतामग्रहारेऽग्रहारे ॥
वर्गे वर्गे धरणिमरुतां वर्धते साधु यज्ञो
यज्ञे यज्ञे श्रवणसुभगः स्तोत्रशस्त्रानुघोषः[2] ॥ ३६० ॥

किंच—

तुण्डीरमण्डलनिवासिषु दुग्धसिन्धु-
डिण्डीरखण्डनिभकीर्तिषु पण्डितेषु ॥
आप्यायमानमखिलैर्विगीतमेत-[3]
द्रोचेत धूतदुरितं चरितं न कस्मै ॥ ३६१ ॥

---

**अथेति** । तुण्डीरमण्डलमिति देशविशेषनाम, भाषायां 'तोण्डमनाडु' इति टीकान्तरे दृश्यते—

**वयस्येति** । हे वयस्य, अस्य पुरोवर्तिनः तुण्डीरमण्डलस्य रमणीयत्वं सौन्दर्यं पावनत्वं पवित्रत्वं च, स्फुटं स्पष्टं यथा तथा पश्यतु भवान् ॥ १५५ ॥

**तीरे तीर इति** । सरितां बाहानद्यादीनां अत्रास्मिन् तीरे तीरे प्रतितीरं भूयान् बहुशः अग्रहारः स्फुरति प्रकाशते । अग्रहारेऽग्रहारे प्रत्यग्रहारं च अग्र्यः पूज्यः धरणिमरुतां ब्राह्मणानां वर्गः बृन्दं स्फुरति । वर्गे वर्गे च यज्ञः ज्योतिष्टोमादिः साधु यथा तथा वर्धते । यज्ञे यज्ञे च, सर्वत्र वीप्सायां द्विर्भावः । श्रवणयोः कर्णयोः सुभगः मनोज्ञः स्तोत्र-शस्त्राणां मन्त्रविशेषाणां अनुघोषः पाठशब्दश्च वर्धते ॥ ३६० ॥

**तुण्डीरेति** । तुण्डीरमण्डले निवसन्ति ते निवासिनस्तेषु दुग्धसिन्धोः क्षीरसमुद्रस्य डिण्डीरखण्डैः फेनखण्डैः निभा तुल्या, तद्वन्निर्मलेति यावत् । कीर्तिर्येषां तेषु पण्डितेषु आप्यायमानं व्याप्नुवानं, तैः क्रियमाणमिति यावत् । अखिलैः वेद-शास्त्र-पुराणादिग्रन्थैः अविगीतं अनिन्दितं अत एव धूतदुरितं प्रक्षालितदोषं, एतच्चरितं सत्कर्म कस्मै न रोचेत ? सर्वस्मा अपि रोचेतैवेत्यर्थः । "रुच्यर्थानाम्–" इत्यादिना चतुर्थी ॥ ३६१ ॥

---

१ 'मण्डलस्य रामणीयकम्'. २ 'शस्त्रादिघोषः'. ३ 'अवगीत'.

**कृशानुः**—हन्त एतस्मिन् अन्तिमयुगेऽपि अध्वरकर्माचरताममीषां चरितानि कथमिव रोचेरन् कोविदेभ्यः ? ॥ १५६ ॥

न ऋत्विक्संपत्तिर्न च कुशलता यष्टुरनघा
न च द्रव्यं शुद्धं न च हृदयशुद्धिः कलियुगे ॥
प्रसिद्धिं काङ्क्षन्तः परिमित[1]धनं हन्त कृपणा
वृथा पश्वालम्भं विदधति तथापि क्षितिसुराः ॥ ३६२ ॥

**किंच**—

शौचं नाचरितुं यथाविधि कलौ शक्ता द्विजाः किंच ते
ये[2] खल्वाचमनाप्लवादिनियमास्तान् स्मर्तुमप्यक्षमाः ॥
क्वामीषां पुनरग्निहोत्रनियमः क्वेष्टेरनुष्ठान[3]धीः
क्वाग्निष्टोममुखा मखाः सपशुकाः क्वत्याग्निचित्या तु सा॥३६३॥

---

**हन्तेति** । अस्मिन् अन्तिमयुगे चरमयुगे कलियुगे इत्यर्थः । “ अन्तो जघन्यं चरममन्त्य-पाश्चात्य-पश्चिमम् ।” इत्यमरः । अध्वरकर्म यज्ञकर्म आरभतां कुर्वाणानां अमीषां लोकानां चरितानि कोविदेभ्यः बुधेभ्यः कथमिव रोचेरन् ? कलौ यज्ञकर्मणां निषेधादिति भावः ॥ १५६ ॥

कलौ यज्ञकरणानर्हत्वमेवाह—**नेति** । कलियुगे ऋत्विजां मन्त्र-तद्विनियोगादिज्ञानिनां संपत्तिः सुलभत्वं न, तथा यष्टुर्यजमानस्य “ यष्टा च यजमानश्च ” इत्यमरः । अनघा निर्मला, एतत्पूर्वत्राप्यनुसंधेयम् । कुशलता निपुणता न च नास्त्येव, तथा धनं द्रव्यं शुद्धं अगर्हितोपायलब्धं न च, किंच हृदयस्यान्तःकरणस्य शुद्धिः काम-क्रोधादिराहित्यं च न, तथापि कृपणाः द्रव्यव्ययकातराः क्षितिसुरा ब्राह्मणाः, प्रसिद्धिं ‘ अयं यज्ञकर्ता, अयं दीक्षितः, अयं सोमयाजी ’ इत्यादिरूपां प्रख्यातिं काङ्क्षन्तः वाञ्छन्तः सन्तः परिमितं अल्पं धनं यस्मिन् अल्पद्रव्यव्ययसाध्यमित्यर्थः । वृथा सम्यगृत्विगादिसंपत्त्यभावाद्व्यर्थमेव पशोः यज्ञीयमेषादेः आलम्भं वधं विदधति कुर्वन्त्येव ॥ ३६२ ॥

अपि च **शौचमिति** । किंच कलौ युगे ये द्विजाः शौचं मृज्जलादिना शरीरशुद्धिं यथाविधि शास्त्रविधिमनतिक्रम्य आचरितुं न शक्ताः न समर्थाः, ते द्विजाः आचमनं आप्लवः स्नानं च तौ आदी येषां ते ये नियमाः स्वाध्यायादयः खलु प्रसिद्धाः सन्ति, तान् नियमान् स्मर्तुमपि, किमुताचरितुं, अक्षमाः असमर्थाः । एतादृशाममीषां ब्राह्मणानां पुनः अग्निहोत्रनियमः क्व ? इष्टेः दर्श-पूर्णमासादियागरूपायाः अनुष्ठानधीः ...ानं क्व ? तथा पशुभिः सहिताः सपशुकाः पशुवधयुक्ता इति भावः । अग्नि-

---

२ ‘यः खल्वाचमनाप्लवादिनियमस्तं’. ३ ‘अनुष्ठानगीः’.

**विश्वावसुः**—स्थूल[1]मनीष मृषा किमिति भाषसे ? ॥ १५७ ॥

यतः—

शिष्टेभ्यः प्रतिगृह्य[2] वित्तमुचितं संपाद्य विद्याः कलौ
श्रद्धालून् श्रुति-कल्पसूत्रचतुरान् लब्ध्वा शुचीनृत्विजः ॥
प्रीतिं भागवतीं प्रकाममभिसंधायाहरन्तः क्रतून्
धीमन्तो युगमन्तिमं तु कृतयन्त्यन्तर्मुखाः संततम् ॥ ३६४ ॥

किंच—

अयज्ञार्हद्रव्या वयमिति तु यज्ञाद्विरमताम्
न कल्पेत स्वान्नैर्ननु भगवदाराधनमपि ॥
प्रयत्नेन द्रव्यं शुचि किमपि लब्ध्वा भगवतः
कृतं चेत्कैङ्कर्यं किमिति न तदेवाध्वरमयम्[3] ॥ ३६५ ॥

ष्टोमः मुखं आदिर्येषां ते मखाः यज्ञाः क ? तथैव सा प्रसिद्धा अग्नेश्चयनमग्निचित्या अग्निसंचयनादिक्रिया "चित्याग्निचित्ये च" इति निपातनात् चिनोतेः क्यप् तुगागमश्च । क्रत्या कुतः प्राप्ता भवति ? अपि तु एतत्पूर्वोक्तं सर्वमपि दुर्लभमेवै-तेषामिति भावः ॥ ३६३ ॥

**स्थूलेति** । हे स्थूलमनीष मन्दमते, किमिति पूर्वोक्तरूपं मृषा मिथ्या भाषसे ? ॥ १५७ ॥

मिथ्यात्वमेवाह—**शिष्टेभ्य इति** । धीमन्तः ईश्वरतोषककर्मबुद्धियुक्ताः अत एव संततं निरन्तरं अन्तः हृदयस्थपुण्डरीके मुखं मुखमिव चित्तं येषां ते तथाभूताः शिष्टेभ्यः जनेभ्यः उचितं यज्ञाद्यनुष्ठानपर्याप्तं वित्तं द्रव्यं प्रतिगृह्य स्वीकृत्य, कलौ अपि विद्याः वेदशास्त्रादीः संपाद्य, श्रुतयः वेदाः कल्पसूत्राणि आश्वलायनापस्तम्बीयादी-नि च तेषु चतुरान् निपुणान् श्रुत्यादीनां यथार्थज्ञानयुक्तानित्यर्थः । किंच श्रद्धालून् वेद-शास्त्रोक्तकर्मसु विश्वासयुक्तान्, अत एव शुचीन् पवित्रान् ऋत्विजः लब्ध्वा, भा-गवतीं परमेश्वरसंबन्धिनीं प्रीतिं संतोषं अभिसंधाय निश्चित्य, न तु स्वार्थं पारलौकि-कसुखं अभिसंधाय, प्रकामं यथेच्छं क्रतून् आहरन्तः कुर्वन्तः सन्तः, अन्तिमं चरमं युगं कलियुगं कृतयन्ति कृतयुगमिव संपादयन्ति ॥ ३६४ ॥

एतावता कलौ यज्ञकरणस्य युक्तत्वं प्रतिपादितम्, इदानीं अल्पधनत्वादिनोक्तं दूष-णमुद्धारयन्नाह—**अयज्ञार्हेति** । वयं यज्ञस्यार्हं विहितव्यापारागतं कर्मपर्याप्तं च द्रव्यं येषां ते तथा न भवन्तीत्ययज्ञार्हद्रव्याः इति हेतोस्तु यज्ञात् यज्ञानुष्ठानात् विरमतां यज्ञानुष्ठानमकुर्वतामित्यर्थः । "जगुप्सा-विराम-प्रमादार्थानाम्-" इत्यादिवार्तिकेनापादा-नसंज्ञा । 'विरमताम्' इत्यत्र च "व्याङ्परिभ्यो रमः" इतिसूत्रेण विपूर्वकस्य रम-

१ 'लक्ष'. २ 'परिगृह्य'. ३ 'समम्'.

अपि च—

हिंसाकृत्प्रत्यवेयादिति कथयति यो वेद एवैष यागे
पश्वालम्भं विधत्ते यदि क इह मखे वैदिकः संशयीत ? ॥
हिंसात्वाभावमेवाध्वरपशुनिहतेराह रामानुजार्य-
स्तत्पक्षस्थोऽपि यो न प्रसजति यजने कस्तदन्यो गुरुद्विट्॥३६६॥

इदं चावधेयम्—

हिंसान्तरेष्विव मखाश्रितहिंसनेऽपि
जैनेतरो यदि जनो भजते जुगुप्साम् ॥

---

तेः परस्मैपदविधानात् शतृप्रत्ययः । ननु तर्हि स्वैः आत्मीयैः अन्नैः भगवतः आराधनं नैवेद्यार्पणरूपमपि न कल्पेत न क्रियेत। तस्याप्यल्पत्वादिना भगवदाराधनानर्हत्वादिति भावः। प्रयत्नेन अनिन्द्यप्रयासेन शुचि याजनाध्यापनादिव्यापारलब्धत्वात् पवित्रं किमपि यत्किंचित्स्वल्पमपि द्रव्यं लब्ध्वा संपाद्य तेनेति शेषः। भगवतः ईश्वरस्य कैङ्कर्यं पूजननैवेद्यार्पणादिरूपं कृतं चेत् तदेव अध्वरमयं यज्ञप्रचुरं यज्ञरूपमित्यर्थः। किमिति न भवति ? अपि तु भवत्येवेति। एवं च यदि कलौ यज्ञकरणमयुक्तं स्यात्, तर्हि भगवत्पूजनादिकमपि त्वन्मते त्याज्यमेव स्यात् । उभयोरपि यज्ञत्वाविशेषाद्द्रव्यानर्हत्वस्य चापि समत्वादिति भावः॥ ३६५ ॥

किंच **हिंसाकृदिति** । ' हिंसाकृत् प्राणिप्राणवियोगानुकूलव्यापारकर्ता जनः प्रत्यवेयात् दोषीभवेत् ' इति यः वेदः " न हिंस्यात् सर्वभूतानि " इत्यादिरूपः कथयति, एष एव वेदः यागे यज्ञे पशोः आलम्भं वधं " आग्नीषोमीयं पशुमालभेत" इत्यादिनेति भावः । विधत्ते कथयति यदि, तर्हि इह मखे यज्ञविषये कः वेदमधीते वेद वा वैदिकः वेदवेत्ता पुरुष इत्यर्थः। संशयीत संदेही स्यात् ? अपि तु न कोऽपि संशयीतेति । उभयत्र प्रामाण्ये संशयाभावादिति भावः । अपि च रामानुजार्यो रामानुजाचार्यस्तु, अध्वरे यागे या पशोर्निहतिर्वधः तस्याः हिंसात्वस्य अभावमेवाह। तथा च मनुरपि— " यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा। यज्ञस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः।" इत्याह । तस्मात् तस्य रामानुजार्यस्य पक्षे मते तिष्ठतीति तन्मतस्थः, तन्मताभिमानीत्यर्थः। सोऽपि, अपिशब्दोऽस्य विधेः सार्वत्रिकत्वबोधनार्थः। सन् यो जनः यजने यज्ञकर्मणि न प्रसजति नोद्युक्तो भवति, ' षञ्ज सङ्गे ' इत्यस्मात् प्रपूर्वकाद्धातोर्लट्। " दंश-सञ्ज-स्वञ्जाम्-" इति नलोपः । तस्मात्पुरुषादन्यः कः पुरुषः गुरुं द्वेष्टीति तथोक्तः गुरोर्द्वेष्टेत्यर्थः । भवति? अपि तु स एव तथा-
॥ ३६६ ॥

**वति** । यदि जैनात् महावीरजिनस्थापितमतानुयायिनः
...तरेष्विव, यज्ञकर्मबहिर्भूतकेवलस्वशरीरपोषणार्थं
श्रुति-स्मृतिविहितत्वादवश्यप्राप्तं तच्च तर्हि-

नार्यन्तरेष्विव न निन्दति नन्दनानाम्
निष्पादनं किमनघेऽपि निजे कलत्रे ॥ ३६७ ॥

इदमप्यवगन्तव्यम्—

ऋत्विग्विशुद्धिवि[1]रहादतिशङ्कया चे[2]त्
केचित्कलौ जहति नित्यमपि क्रतुं ते ॥
मुञ्चन्ति गुर्वशुचिताविशयेन किं न
चक्राङ्कवैष्णवमनुग्रहणादि सर्वम् ॥ ३६८ ॥

किंच—

सर्वैर्वेदैः स्मृतिगुणयुतैः सेतिहासैः पुराणैः
शिष्टाचारैरपि नियमितानध्वरान्मध्वरातेः ॥
आज्ञासिद्धानहह जहतस्तद्विरुद्धानि कृत्या-
न्यातन्वन्तः कतिचिद[3]परानप्यमी शिक्षयन्ति ॥ ३६९ ॥

---

सनं वधश्च तस्मिन्नपि जुगुप्सां निन्दां भजते चेत्, यज्ञीयपशुहिंसनमपि निन्द्यं मन्यते चेदित्यर्थः । तर्हि नार्यन्तरेष्विव परस्त्रीष्विव नन्दनानां पुत्राणां निष्पादनमुत्पादनं, अनघे पातिव्रत्यादिस्त्रीधर्मसंपन्नत्वान्निर्दोषे निजे स्वकीये कलत्रे भार्यायामपि, पुत्रोत्पादनं किं कस्माद्धेतोर्न निन्दति ? ऋतुकाले स्वस्त्रीसङ्गस्य यज्ञकर्मणि पशुवधस्य चापि शास्त्रेणैव विहितत्वादुभयमपि तुल्यमिति भावः ॥ ३६७ ॥

अपि च **ऋत्विगिति** । ऋत्विजां विशेषेण या शुद्धिः यथार्थानुष्ठानरूपा तस्याः विरहादभावाद्धेतोः अत एव अतिशङ्कया ‘ सम्यक्तया अनुष्ठानं भवेद्वा न भवेत् ’ इति संशयेन केचिज्जनाः कलौ युगे नित्यमपि क्रतुं पञ्चमहायज्ञान्तर्भूतं वैश्वदेवादियज्ञमपि, दर्श-पूर्णमासादिरूपं वा जहति त्यजन्ति चेत्, तर्हि ते जनाः गुरोः आचार्यस्य अशुचितायाः अपवित्रतायाः विशयेन संशयेन चक्राङ्कः चक्रचिह्नं चक्र-शङ्खादि-मुद्राधारणमिति यावत् । वैष्णवमनुः दीक्षाग्रहणकाले उपदेष्टव्यो नारायणाष्टाक्षरमन्त्रः तस्य ग्रहणं च ते आदी यस्य तत् सर्वं पञ्चसंस्कारादिरूपं किं कुतः कारणात् न मुञ्चन्ति । पञ्चसंस्कारास्तु प्रागुक्ताः । एवं च यथा चक्राङ्कादिधारणं त्यक्तुं न युक्तं, तथैव वेदविहितयज्ञाद्यनुष्ठानमपि त्यक्तुं न युक्तमिति भावः ॥ ३६८ ॥

श्रुति-स्मृति-पुराणविहितयज्ञकर्माननुष्ठानमनुचितमिति सखेदमाह— **सर्वैर्वेदैरिति** । सर्वैर्वेदैः, स्मृतिगणयुतैः मनु-याज्ञवल्क्य-पराशरप्रोक्तस्मृतिसमूहसहितैः, सेतिहासैः महाभारतादिपुरावृत्तसहितैः पुराणैः पाद्म-वैष्णवादिभिः, शिष्टाचारैश्चापि नियमितान् अवश्यकर्तव्यत्वेन प्रतिपादितान् मध्वरातेः श्रीविष्णोः आज्ञासिद्धानपि

---

१ ‘विरहादिविशङ्कया’. २ ‘ये’. ३ ‘इतरान्’.

किं बहुना—

यागं ये बत वैष्णवा विजहति छागच्छिदाभीतितः
शिष्यक्लेशनसाध्वसाज्जहतु ते चक्राङ्कनप्रक्रियाम् ॥
पूर्वस्मिन्बहुसंमतिर्भगवतः प्रीतिः फलं नो धना-
न्यल्पीयोऽभिमतिः परत्र फलमप्यर्थाप्तिरित्थं भिदा ॥ ३७० ॥

कृ०—( विहस्य ) तप्ताभ्यां शङ्खचक्राभ्यां तापनं प्राणिनामिदम् ॥
छागालम्भसमत्वेन साधो! किमिति वर्ण्यते? ॥ ३७१ ॥

वि०—गुणदोषतारतम्यानभिज्ञ, शृणु तावदिदम् ॥ १५८ ॥

छागालम्भसहस्रतः क्षितिसुरस्यैकस्य हिंसाधिका
तस्माद् ब्राह्मणतापनं न किमिदं तुल्यं पशोर्हिंसया ॥

---

अध्वरान् यज्ञान्, अहहेति खेदे । जहतः त्यजन्तः, तेषां वेद-शास्त्रादीनां विरुद्धानि स्वसंकल्पसिद्धानीत्यर्थः । कृत्यानि कर्माणि आतन्वन्तः आचरन्तः सन्तः, कतिचित् अमी जनाः अपरानप्यन्यानपि जनान् शिक्षयन्ति । एतदेवायुक्तमिति ज्ञेयम् ॥ ३६९ ॥

किं च **यागमिति**। ये वैष्णवाः छागस्य मेषस्य छिदायाः हिंसायाः भीतितः भयाद्धेतोः यागं यज्ञं विजहति त्यजन्ति । बतेति खेदे । ते वैष्णवाः शिष्याणां क्लेशनं तापोत्पादनं तद्रूपं यत् साध्वसं भयं तस्माद्धेतोः चक्राङ्कनस्य तप्तचक्र-शङ्खादिमुद्रालक्षणस्य प्रक्रियां करणं जहतु त्यजन्तु । किंच यागाङ्कनयोर्मध्येऽङ्कनमेव त्याज्यं स्यादित्याह—पूर्वस्मिन् यज्ञे विषये बहूनां मतान्तरस्थानामपि संमतिरनुमतिः, भगवतो विष्णोः प्रीतिः संतोषः फलं, धनानि विषयादिलालसाजनकानि तु नो न भवन्ति । परत्र चक्राङ्कने तु अल्पीयसी अत्यल्पा एकदेशीयमतस्थानां जनानामित्यर्थः । अभिमतिः, संमतिः फलमपि अर्थानां द्रव्याणां आप्तिः प्राप्तिः, पूर्वप्रतिपादितजार-चोरादिनीचजनेभ्य इत्यर्थः । इत्थमेवंरूपा भिदा भेदः अस्तीत्यर्थः ॥ ३७० ॥

**कृशानुः** सोपहासमाह—**तप्ताभ्यामिति** । हे साधो ! एतत् परिहासद्योतकं संबोधनम् । तप्ताभ्यां शङ्ख-चक्राभ्यां तन्मुद्राभ्यामित्यर्थः । प्राणिनां शिष्यजनानां तापनं संतापोत्पादकं, छागालम्भसमत्वेन पशुहिंसातुल्यत्वेन किमिति कुतो हेतोः वर्ण्यते ? प्राणवियोजनं, किंचित्कालपर्यन्तं शरीरस्यैकस्मिन् भागे तापनं च नैव तुल्यमिति भावः ॥ ३७१ ॥

...ति । हे गुणदोषतारतम्यानभिज्ञ गुण-दोषयोर्न्यूनाधिकभावनिर्णायक- ...इदं वक्ष्यमाणं शृणु ॥ १५८ ॥

...ग आलम्भः हिंसा तेषां सहस्रं तस्मादिति ततः सहस्रपशुहिं-

शास्त्रात्तप्तरथाङ्गधारणमपि श्रेयस्करं चेत्तदा
वेदैरेव सवे पशोर्विशसनाद्धर्मोऽपि किं ? हीयते ॥ ३७२ ॥

इत्यलं श्रुत्ययुतविहितसवनकरणावश्यकतासमर्थनेन करबदरास्तित्वसाधकप्रमाणान्तरपरिकल्पनकल्पेन ॥ १५९ ॥

---

## अथ चञ्जीपुरी ( तंजावूर् ) वर्णनम् २०.

इति दक्षिणतो विमानमानयन् सशिरःकम्पम्—

खञ्जीकृताखिलहृदां रमणीमणीनाम्
मञ्जीरमञ्जुतरशिञ्जितरञ्जितेन ॥
चञ्जीपुरी युवगणेन चकास्ति पूर्णा
संजीवितोग्रपरिवञ्चितपञ्चबाणा ॥ ३७३ ॥

---

सापेक्षयेत्यर्थः । एकस्य क्षितिसुरस्य ब्राह्मणस्य एका हिंसा अधिका । तस्मात् कारणात् ब्राह्मणतापनं तप्तमुद्रयेत्यर्थात् । इदं एकस्य पशोर्हिंसया तुल्यं समं न किम् ? अपि तु अस्त्येवेत्यर्थः । यतः मुद्राधारणकाले 'हा ! हा !' इत्यादिखेदप्रदर्शकशब्दाः श्रूयन्ते । तस्मात् यद्यपि तस्मिन् काले प्रत्यक्षप्राणहानिर्न भवति तथापि तत्तुल्यत्वादेकपशुहिंसातुल्यमेव तदिति भावः । शास्त्रप्राप्तत्वान्मुद्राधारणमावश्यकमिति चेत्तत्राह—तप्तरथाङ्गधारणं संतप्तचक्रादिमुद्राधारणमपि शास्त्रात् नारदपाञ्चरात्राद्यागमात्, प्राप्तमिति शेषः । श्रेयस्कारं कल्याणकरं अस्ति चेत्, तदा वेदैरेव वेदान्तर्गतविधिवाक्यैरेव सवे यज्ञे पशोर्मेषादेः विशसनात् मारणात् धर्मः हीयते अपि किम् ? अपि तु नैवेत्यर्थः ॥ ३७२ ॥

**इतीति** । इत्येवंप्रकारेण श्रुतीनां अयुतेन अनन्तश्रुतिकदम्बकेनेतियावत् । विहितस्य प्रतिपादितस्य सवकरणस्य यज्ञकरणस्य आवश्यकतायाः अवश्यकर्तव्यत्वस्य समर्थनेन प्रतिपादनेन अलं पर्याप्तम् । कीदृशं तत्समर्थनं, करे हस्ते वर्तमानस्य बदरस्य बदरीफलस्य अस्तित्वसाधकस्य सत्ताप्रतिपादकस्य प्रमाणान्तरस्य प्रत्यक्षादन्यस्यानुमानादेः परिकल्पकल्पेन विरचनतुल्येनेति श्रुत्ययुतेत्यादेर्विशेषणं "ईषदसमाप्तौ—" इति कल्पप्प्रत्ययः ॥ १५९ ॥

अथ चञ्जीपुरीं वर्णयति—**खञ्जीकृतेति** । खञ्जीकृतं निरभिमानीकृतं अखिलानां स्त्रीजनानां हृत् मनो याभिस्तासां रमणीमणीनां स्त्रीरत्नानां मञ्जीराणां नूपुराणां मञ्जुतरं अतिमञ्जुलं यत् शिञ्जितं शब्दः तेन रञ्जितः अनुरक्तीकृतः तेन, यूनां तरुणानां गणेन समूहेन पूर्णा, अत एव संजीवितः उग्रेण शिवेन परिवञ्चितः भस्मीकृतः

---

१ 'मिदं'. २ 'वेदादेव मखे पशोर्विशसनं नैतेन किं मीयते,' 'धर्मो न किं हीयते.' ३ 'सदाचरणा,' 'सवनाकर्तव्यता'. ४ 'विमानमानीय'.

किंच—

ऋक्सामयोश्च यजुषां च निवासभूता
पूता द्विजाः स्मृति-पुराण-कलाधुरीणाः ॥
कुर्वन्ति वासमिह कर्कशतर्कशब्द-
तन्त्रत्रयीशिखरशिन्धुतलस्पृशोऽमी ॥ ३७४ ॥

कृ०— ( सहासम् ) नैतद्विभाति नगरं नगरम्यदुर्ग-
प्राकारसाधनदशासु विशां पतीनाम् ॥
युद्धोन्नमद्भटशिरस्तटनिस्सृतासृक्-
स्रोतःसहस्रभरविस्रपलास्थिसान्द्रम् ॥ ३७५ ॥

पञ्चबाणो मदनो यया सा चञ्जीपुरी ' तंजावूर ' इति भाषाप्रसिद्धा नगरी चकास्ति शोभते ॥ ३७३ ॥

किंच वेद-शास्त्रनिपुणा विद्वांसोऽप्यत्र सन्तीत्याह—**ऋक्सामयोश्चेति** । ऋग् ऋग्वेदश्च साम सामवेदश्च तयोः " अचतुर-विचतुर–" इत्यादिनिपातनादच् समासान्तः । यजुषां यजुर्वेदस्येत्यर्थः । इति त्रयाणामपि वेदानामित्यर्थः । निवासभूताः गृहरूपाः संपूर्णवेदानामध्येतार इति यावत् । अत एव पूताः पवित्राः, न तु केवलं वैदिका एव, किंतु स्मृतयः मन्वादयश्च पुराणानि पाद्म-वैष्णवादीनि च कलाश्चतुःषष्टिसंख्याकाः प्रसिद्धाः ताश्च तासु धुरीणाः प्रवीणाः, अपि च कर्कशाः अर्थगाम्भीर्येण कठिनाः ये तर्काः न्यायशास्त्रं शब्दो व्याकरणं तन्त्रं मीमांसा त्रय्याः वेदत्रितयस्य शिखरं वेदान्तशास्त्रं च तान्येव सिन्धवः समुद्राः तेषां तलं स्पृशन्तीति तादृशाः, तेष्वप्यत्यन्तं निपुणा इत्यर्थः । अनेन सर्वज्ञत्वं तेषां सूचितम् । अमी द्विजा ब्राह्मणाः इह चञ्जीपुर्यां वासं कुर्वन्ति ॥ ३७४ ॥

अथ **कृशानुः** सत्यप्येवं बहुवारं युद्धादिप्रसङ्गात् नैतत्पुरं विभातीत्याह— **नैतद्विभातीति** । विशां मनुजानां 'द्वौ विशौ वैश्य-मनुजौ" इत्यमरः । पतीनां राज्ञां नगवत्पर्वतवत् रम्यस्य रमणीयस्य पर्वत इवोन्नतस्येत्यर्थः । अत एव दुर्गस्य गन्तुमशक्यस्य प्राकारस्य सालस्य ' किल्ला ' इति महाराष्ट्रभाषाप्रसिद्धस्य "प्राकारो वरणः सालः " इत्यमरः । साधनदशासु स्वीकारावसरेषु युद्धे समरे उन्नमन्तः जयावेशेन शत्रुषूत्पतन्तः ये भटाः योधास्तेषां शिरस्तटेभ्यः मस्तकप्रान्तेभ्यः निःसृतानि निर्गलितानि असृजां रक्तानां स्रोतःसहस्राणि प्रवाहसहस्राणि तेषां भरेण अतिशयेन विस्राणि आमगन्धीनि " विस्रं स्यादामगन्धि यत्" इत्यमरः । यानि ने मांसानि "पलमुन्मान-मांसयोः" इति रुद्रः । अस्थीनि च तैः सान्द्रं निबिडं र विभाति विशेषेण न शोभते । युद्धव्यग्रचित्तत्वादतिनिन्द्यत्वाच्च ' ३७५ ॥

३ 'पलाब्धि'.

**वि०**—वयस्य गुणान्वयस्य पुनरस्य नगरस्य निन्दाच्छद्मना प्रशंसामेव भवान् कृतवान् ॥ १६० ॥

यतः—

पुरातनानां हि पुरान्तराणां प्रशासितारोऽपि दिशासु भूपाः ॥[1]
पुरं तदेतद्वपुरन्तमाजौ हन्ताभ्युपेत्याप्यलमर्थयन्ति[2] ॥ २७६ ॥

**कृशा०**—निरूपणमभिनीय सास्वरसम्[3]—

हन्त चिरन्तनानामिदानींतनानां च वसुन्धराधुरंधराणामवारणीयोऽसावविवेकः ॥ १६१ ॥

पश्य—

प्राज्ये हन्त धने स्थितेऽपि नृवरो राज्येऽपि सत्यूर्जिते
संभोगानुगुणा विलोचनगुणैरम्भोजदम्भद्रुहः ॥
कल्याणीस्तरुणीरुपेक्ष्य[4] करुणाहीनः ससेनः स्वयम्
हर्तुं शत्रुधरां चिरादभिलषन् मर्तुं रणे जृम्भते ॥ २७७ ॥

---

**वयस्येति** । हे वयस्य मित्र, गुणानां शम-दमादीनां पूर्वश्लोकप्रतिपादितानां शौर्य-तेजआदीनां च अन्वयः संबन्धो यस्मिन् तस्य पुनरस्य नगरस्य चञ्जीपुरस्य निन्दायाः छद्मना निमित्तेन, प्रशंसामेव स्तुतिमेव भवान् कृतवानकरोः ॥ १६० ॥

**पुरातनानामिति** । हि यस्मात्, दिशासु दशदिक्षु, स्थितानामिति शेषः । पुरातनानां पुराणानां, पुराशब्दात् ट्युः तुडागमश्च "पुराणे प्रतन-प्रत्न-पुरातन-चिरंतनाः ।" इत्यमरः । पुरान्तराणां अन्यनगराणां प्रशासितारोऽपि रक्षितारोऽपि सन्तः, सर्वे भूपा राजानः, हन्तेत्यानन्दे । आजौ युद्धे वपुषः शरीरस्य अन्तं नाशं अभ्युपेत्य स्वीकृत्यापि, तत् प्रसिद्धमेतत्पुरं नगरं अलं अत्यर्थं अर्थयन्ति इच्छन्ति । 'युद्धे मरणमपि भवतु, परं च बहुतरसंपद्युक्तेऽस्मिन्नेव पुरेऽस्माभिर्वर्तितव्यं' इति वाञ्छन्तीत्यर्थः ॥ २७६ ॥

**निरूपणमिति** । सास्वरसं अस्वरसेन असंतोषेण सहितं यथा तथा—

**हन्तेति** । चिरंतनानां पुरातनानां इदानींतनानां च, अत्राप्युभयत्र "सायं-चिरं-" इति सूत्रेण ट्युः तुट् च । वसुंधरायाः पृथ्व्याः धुरंधराणां भारभृतां राज्ञां, असौ वक्ष्यमाणः अवारणीयः निवारयितुमशक्यः अविवेकः अविचारः । अस्तीति शेषः १६१

अविवेकमेवोपपादयति—**प्राज्य इति** । हन्तेति खेदे । प्राज्ये बहुले "प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ।" इत्यमरः । धने स्थिते सत्यपि, तथा राज्ये ऊर्जिते धनादिसंपन्ने च सत्यपि, तथैव संभोगस्य सुरतस्य अनुगुणाः अनुरूपाः, सुरतयोग्या

---

१ 'प्रशाधितारो हि'. २ 'अर्थयन्ते'. ३ 'साश्रुरसं', 'ससाध्वसं'. ४ 'कल्याणी रुदती'.

वि०—विरुद्धबुद्धे ! विवेकमेव तावदविवेकमाकलयसि ॥ १६२ ॥

तथाहि—

संपद्वन्यसरिज्झरीसहचरी शम्पासमं प्राभवम्
नार्यः सूर्यकरावलीढरजनीच्छायासुहृद्यौवनाः ॥
देहः स्नेहविहीनदीपसख इत्यालोच्य पृथ्वीश्वराः
प्राणान् जुह्वति नाकमाकलयितुं शुद्धा हि युद्धानले ॥ ३७८ ॥

इत्यर्थः । विलोचनयोर्नेत्रयोर्गुणैः विशालत्व-सुभगत्वादिरूपैः, अम्भोजानां कमलानां दम्भद्रुहः गर्वविनाशयित्रीः, किंच कल्याणीः कल्याणगुणयुक्ताः राज्यसंपत्तिवर्धकसल्ल-क्षणैर्युक्ता इत्यर्थः । एतादृशोऽपि तरुणीः स्त्रीः उपेक्ष्य अनादृत्य, अत एव करुणया दयया हीनः रहितः नृवरः राजा, शत्रोः धरां पृथ्वीं चिरात् चिरकालपर्यन्तं हर्तुं अपहर्तु-मभिलषन् काङ्क्षमाणः सन्, ससेनः सेनया सहितः स्वयं रणे युद्धे मर्तुं प्राणांस्त्यक्तुं समुज्जृम्भते उद्युक्तो भवति । बहुलधन-दारादिसंपन्नं स्वराज्यमुपेक्ष्य परराज्याभिला-षकरणमविवेकमूलमिति भावः ॥ ३७७ ॥

**विरुद्धेति** । विरुद्धा युक्तायुक्तविवेकशून्या वस्तुस्थित्यननुरूपा वा बुद्धिर्यस्य तत्संबुद्धौ हे विरुद्धबुद्धे इति । विवेकमेव क्षत्रियं प्रति त्वदुक्तरीत्या एव विहितत्वादिति भावः । तावत्साकल्येन अविवेकमाकलयसि कथयसि । त्वमिति शेषः ॥ १६२ ॥

**संपदिति** । हि यस्मात् कारणात् शुद्धाः शास्त्रविहिताचरणेन निर्मलान्तःकर-णाः पृथ्वीश्वरा राजानः, संपत् संपत्तिः वने भवा वन्या सा चासौ सरितो नद्याः झरी प्रवाहः वर्षाकालोत्पन्नवन्यक्षुद्रसरित्प्रवाह इत्यर्थः । तस्याः सहचरी सदृशी, तद्व-च्चञ्चलेत्यर्थः । प्रभोः भावः प्राभवं प्रभुत्वं, शम्पया विद्युता "शम्पा शतह्रदा-ह्रादि-न्यैरावत्यः क्षणप्रभा । तडित् सौदामिनी विद्युत्" इत्यमरः । समं तुल्यं, तद्वत् क्षणिकमित्यर्थः । तथा नार्यः स्त्रियः, सूर्यस्य करैः किरणैः अवलीढायाः व्याप्तायाः, तत्प्रसरपर्यन्तस्थायिन्या इत्यर्थः । रजन्याः रात्रेः छायायाः सुहृत् मित्रभूतं सदृशमिति यावत् । यौवनं तारुण्यं यासां तास्तथोक्ताः, सूर्योदयपर्यन्तस्थायिरजनीवत् स्वल्पकाल-पर्यन्तस्थायितारुण्यावस्था इत्यर्थः । अपि च देहः स्नेहविहीनः तैलरहितः यो दी-पस्तस्य सखा, तद्वदकालनश्वर इत्यर्थः । एवं च धन-दारा-शरीरादिकं सर्वमप्यनि-त्यमित्यर्थः । इति एवं प्रकारेणालोच्य ज्ञात्वा, न विद्यते अकं दुःखं यस्मिन्निति नाकः स्वर्गः "नभ्राण्-नपान्-नवेदा-" इत्यादिसूत्रेण निपातनान्नञः प्रकृत्यावस्थानं । तं आक-लयितुं संपादयितुं युद्धानले युद्धाग्नौ प्राणान् जुह्वति त्यजन्ति । अयमेव राज्ञां मु-ख्यो धर्म इति ज्ञेयम् । तदुक्तम्—"द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । योगनिर्भिन्नमूर्धैकोऽपरावृत्तमृतः परः ।" इति । भगवद्गीतायामपि—"यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् । सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ।" इति । एवं च विवेक एवायमिति भावः ॥ ३७८ ॥

१ 'आकलयति भवान्'. २ 'जलद'.

श्रृणु चेमं चमत्कारम् ॥ १६३ ॥

रक्ते भटे रणमुखे रुधिरेण तस्मिन् रक्ता भवत्यमरयोषिदनुव्रतेव ॥
शूरः स चेदतनुसायकखण्डिताङ्गः साऽप्युच्चकैरतनुसायकखण्डितेव ३७९

किंच—

दीप्रोऽतिप्रभमाश्रितक्षितितलं दिव्ये विमाने स्थितो
गाढाश्लिष्टकृपाणपाणि च करग्रस्तामरस्त्रीस्तनः ॥
तत्संदत्तनखक्षतो बहुतरप्रत्यर्थिबाणक्षतम्
युद्धाग्नौ हुतजीवितं निजवपुर्वीरो मुदा वीक्षते ॥ ३८० ॥

## अथ पिनाकिनीगरुडनदीश्रीदेवनायकवर्णनम् ३१.

इत्यन्यत्र विमानं संचारयन् परितो दृष्ट्वा—

पिनाकिनीं पश्य घनाघनाशिनीं जलाच्च लघ्वीं गरुडापगामपि ॥

---

अपि च **रक्त इति** । रणस्य युद्धस्य मुखे प्रारम्भे रुधिरेण रक्तेन "रुधिरेऽसृग्लोहितास्र-रक्त-क्षतज-शोणितम् ।" इत्यमरः । रक्ते वक्तवर्णे सति, तस्मिन् पुरुषे अमरयोषित् स्वर्गाङ्गना स्वर्वेश्येत्यर्थः । अनुव्रतेव पतिव्रतेव रक्ता रक्तवर्णा अनुरागयुक्ता च भवति । किं च सः शूरः पुरुषः अतनुभिर्बहुभिः सायकैः बाणैः खण्डितानि छिन्नान्यङ्गानि यस्य सः तथाभूतश्चेत् भवति, तर्हि सापि स्वर्गाङ्गनापि उच्चकैः अतिशयेन अतनुसायकैः बहुभिर्बाणैः, अतनोः मदनस्य च बाणैः खण्डितेव छिन्नेव भवति ॥ ३७९ ॥

किंच **दीप्र इति** । वीरः अत एव दीप्रः तेजस्वी, दिव्ये विमाने स्थितः कराभ्यां ग्रस्तौ धृतौ अमरस्त्रियाः देवाङ्गनायाः स्तनौ येन सः, तया अमरस्त्रिया दत्तानि नखानां क्षतानि व्रणानि यस्मै सः तथाभूतश्च सन्, पूर्वं आश्रितं क्षितितलं पृथ्वीतलं येन तत्, गाढं यथा तथा आश्लिष्टः कृपाणः खड्गः येन तथाभूतः पाणिर्हस्तो यस्मिन् तत्, बहुतराणां अतिबहूनां प्रत्यर्थिनां शत्रूणां "दस्यु-शात्रव-शत्रवः । अभिघाति-पराराति-प्रत्यर्थि-परिपन्थिनः ।" इत्यमरः । बाणानां क्षतानि यस्मिन् तत्, तदेव युद्धाग्नौ हुतं जीवितं यस्य तत् अत एव अतिप्रभं अतिशयकान्तियुक्तं निजवपुः स्वकीयशरीरं मुदा आनन्देन वीक्षते अवलोकयति ॥ ३८० ॥

इदानीं पिनाकिनी-गरुडनद्योरधिपतिं देवनायकाभिधं भगवन्तं वर्णयति—पि-

---

१ 'खण्डिताङ्गा'. २ 'दीप्रो विप्रभमाश्रितक्षितितलं', 'दीप्तोपि प्रभयाश्रितक्षितितरुं', 'दीप्रोऽप्यप्रभमाश्रितं क्षितितलं'. ३ 'जीवितो', 'जीविते'.

इदंतटे राजति देवनाय कः परोऽत्र सर्गादिवे देवनायकः ॥३८१॥

## अथ श्रीमुष्णक्षेत्रयज्ञवराहवर्णनम् ३२.

इतरत्र विमानं प्रस्पन्दयन् सानन्दम्—

अद्य प्रत्नं पक्त्रिमं सच्चरित्रम् देवः प्रीतः सुप्रभाता निशा मे ॥
श्रीमुष्णं यन्मुष्णदंहःसहस्रं क्षेत्रं प्राप्तं नेत्रयोः पात्रभावम् ॥३८२॥

अत्र हि—

वरा वराहरूपिणी चराचरान्तरस्थिता
सुरासुरानुसेविता धराधरादिदेवता ॥

**नाकिनीमिति** । घनानि बहूनि च यानि अघानि पापानि तेषां नाशिनीं जलात् लघ्वीं अल्पां, स्वल्पजलामिति यावत् । पिनाकिनीं एतन्नामिकां नदीं पश्य अवलोकय । तथा गरुडापगां नाम नदीमपि पश्य । किं वा एतयोरेतावन्माहात्म्यं यद्द्रष्टव्यं इत्याकाङ्क्षायामाह—इदंतट इति । एतयोः पिनाकिनी-गरुडनद्योस्तटे तीरे, सर्गात् प्राकृतप्रपञ्चात् परत्र इव परत एव तस्मादलिप्त इत्यर्थः । अत्र इवेति निश्चये । तत्त्वत एव प्रपञ्चात् परत्र वर्तमाने भगवति उत्प्रेक्षादेरसंभवात् । देवनायकः एतन्नामा कः परमात्मा विष्णुः "को ब्रह्मणि समीरात्म-यम-दक्षेषु भास्करे । मयूरेऽग्नौ च पुंसि" इति मेदिनी । देवनाय क्रीडार्थं राजति शोभते । भगवन्निवासाद्दर्शनीयमिदं स्थलमिति भावः ॥ ३८१ ॥

अथ श्रीमुष्णक्षेत्रस्थयज्ञवराहवर्णनं प्रतिजानीते । इदं च रामानुजीयानां प्रसिद्धस्थानानामेकतमं प्रियं च दक्षिणतः 'अर्काडु' इति तद्भाषाप्रसिद्धे प्रान्ते वर्तते इति पुस्तकान्तरादुपलभ्यते ।

**अद्येति** । अद्य मे मम, एतदग्रेऽपि योज्यम् । प्रत्नं पुरातनं प्राग्जन्मकृतमिति यावत् । सच्चरित्रं सत्कर्माचरणं पक्त्रिमम् फलाभिमुखं जातम् । देवो भगवान् प्रीतः तुष्टः, तथा निशा रात्रिः सुप्रभाता शोभनफलप्रदप्रातःकाला, जातेति शेषः । यद्यस्मात् कारणात् अंहसां पापानां सहस्रं मुष्णत् नाशयितृ । "मुष स्तेये" इति क्र्यादेर्धातोः शत्रन्तस्य रूपमिदम् । श्रीमुष्णं नाम क्षेत्रं मे मम नेत्रयोः पात्रभावं दृष्टिगोचरत्वमित्यर्थः । प्राप्तम् । तस्मादिति संबन्धः ॥ ३८२ ॥

पूर्वत्र 'मुष्णदंहःसहस्रं' इत्युक्तमेव सहेतुकमुपपादयति—**वरेति** । वरा श्रेष्ठा चराचरयोः स्थिर-चञ्चलयोः अन्तरे चित्ते स्थिता, अन्तर्यामिरूपेण ...रा देवा असुरा दैत्याश्च तैरनुसेविता, धरां पृथ्वीं धरति उद्धारयतीति

३ 'नश्चरित्रम्'. ४ 'समस्तं'. ५ 'प्राप्तभावम्'.

सदा सदावलिस्तुता मुदामुदारशेवधि-
हिता हि तार्क्ष्यकेतना नता[1] न तापतां नयेत् ॥ ३८३ ॥

श्रीमत्कवीन्द्रश्चात्र कश्चिदित्थमनुसन्धत्ते ॥ १६४ ॥

सदावदातनिम्नगातटीकुटीरवासिनी
कटिस्फुटीभवत्करा[2] किटीश्वरी पटीयसी ॥
रसारसादिहोदिता रसालसालसंवृते
वनेऽवनेषु दीक्षिता मदीक्षिताधिदेवता[3] ॥ ३८४ ॥

---

धराधरा, रसातलगतायाः पृथ्व्या दंष्ट्राग्रेणोद्धारयित्रीत्यर्थः । अत एव सदा सततं सतां साधूनां आवल्या पङ्क्त्या स्तुता प्रशंसिता, मुदां निरतिशयात्मानन्दानां उदारो महान् शेवधिः समुद्रः तद्रूपेत्यर्थः । हिता निखिलजगद्धितकर्त्री, तार्क्ष्यकेतना गरुडध्वजा एतादृशी आदिदेवता वराहरूपिणी सूकररूपधारिणी, नता नमस्कृता सती, तापतां संसारसंबन्धितापत्रयरूपं न नयेत् न प्रापयेत् । हिरवधारणार्थकः ॥ ३८३ ॥

अत्रार्थे अन्यकवेरपि संमतिं द्योतयन्नाह—**श्रीमदित्यादि** । अनयोक्त्याऽग्रिमपद्यं न प्रस्तुतकवेरिति प्रतिभाति ॥ १६४ ॥

**सदेति** । रसायां भूमौ "भूर्भूमिरचलानन्ता रसा विश्वंभरा स्थिरा ।" इत्यमरः । रसात् प्रीतेर्हेतोः "रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे । बोले रागे गृहे धातौ तिक्तादौ पारदेऽपि च ।" इति हैमः । इह रसाला आम्रवृक्षाश्च सालाः सर्जवृक्षाश्च तैः ("आम्रश्चूतो रसालोऽसौ" "साले तु सर्ज-कार्श्याश्वकर्णकाः सस्यसंवरः ।" इत्युभयत्राप्यमरः । संवृते वेष्टिते वनेऽरण्य उदिता उत्पन्ना सदा अवदाता गौरवर्णा शुद्धा वा "अवदातः सितो गौरः" इत्यमरः । या निम्नगा नदी पिनाकिनी तस्यास्तटी तीरं "कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु" इत्यमरात् तटशब्दस्य त्रिलिङ्गत्वम् । तस्यां यत् कुटीरं अल्पगृहं गुहारूपमित्यर्थः । "कुटी-शमी-शुण्डाभ्यो रः" इति सूत्रेणाल्पार्थे रप्रत्ययः । "वासः कुटी द्वयोः शाला सभासंजवनं त्विदम् ।" इत्यमरः । तस्मिन् वासिनी निवासिनी कट्यां स्फुटीभवन् प्रत्यक्षतया दृश्यमानः करो हस्तो यस्याः सा किटीनां वराहाणां ईश्वरी स्वामिनी आदिवराहरूपिणीत्यर्थः । "वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः ।" इत्यमरः । पटीयसी अघटितघटनाचतुरा, पटुशब्दात् "द्विवचनविभज्य—" इत्यादिना ईयसुनि टिलोपः । अत एव अवनेषु पालनेषु दीक्षिता गृहीतव्रता एतादृशी आदिदेवता मदीक्षिता मया अवलोकिता ॥ ३८४ ॥

---

१ 'नता गतिं'. २ 'कटीतटीस्फुटीभवत्करा किटी पटीयसी'. ३ 'तादिदेवता'.

कृ०—[1]सोऽयं हेयप्रत्यनीकोऽपि शार्ङ्गी कष्टं पृथ्वीकाङ्क्षयाभूद्वराहः ॥
इत्थं सिद्धे ब्रूहि भूलाभलोभात्कं कं वेषं मानुषो नेहे[2] धत्ते?॥३८५॥

वि०—अनभिज्ञो भवान् भगवदवताररहस्यस्य ॥ १६५ ॥

शृणु—

पाठीनीयं कामठं कैटभारिः कैटं रूपं यातु काण्ठीरवं वा ॥
अन्यद्वा यत्सर्वमप्राकृतं तन्नासौ तेष्वप्युज्झति स्वस्वभावम् ॥३८६॥

किं च—

कोलं भुवि कोऽलं जगदालम्बमवैतुम्
स्वामी शुभकामी किल भूमीमसुरार्ताम्[3] ॥

---

**सोऽयमिति** । सः अयं त्वया वर्णितः शार्ङ्गी श्रीविष्णुः, हेयानां राग-द्वेषादिप्राकृतदोषाणां प्रत्यनीको विरुद्धः तद्रहितोऽपीत्यर्थः । पृथ्व्याः काङ्क्षया वाञ्छया वराहः सूकरः अभूत्, इति कष्टं अन्याय्यम् । यतः इत्थं भगवतोपि पृथ्वीलाभहेतुना पशुरूपस्वीकारे सिद्धे सति, इह लोके भूलाभलोभात् पृथ्वीप्राप्तिकाङ्क्षायाः हेतोः, मानुषो मनुष्यः कं कं नीचतरं वेषं न धत्ते स्वीकरोति । को वा आढ्योपि सन् सेवकत्व-याचकत्वासत्याचरणानृतभाषणादि न करिष्यतीत्यर्थः । अपि तु भगवदुदाहरणात् सर्वमपि करिष्यत्येवेत्यर्थः । एतत् सत्यमसत्यं वेति ब्रूहि ॥ ३८५ ॥

**अनभिज्ञ इति** । भवान् भगवत ईश्वरस्यावताराणां रहसि भवं रहस्यं तस्य, गौप्यस्येत्यर्थः । "रहश्चोपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु ।" इत्यमरः । अनभिज्ञः अभिजानातीत्यभिज्ञः तथा न भवतीत्यनभिज्ञः, तन्न जानातीत्यर्थः ॥ १६५ ॥

अनभिज्ञत्वमेवाह—**पाठीनीयमित्यादिना** । कैटभारिः कैटभनामकासुरशत्रुः श्रीविष्णुः, पाठीनस्य सहस्रदंष्ट्राभिधमत्स्यविशेषस्येदं पाठीनीयं 'तस्येदम्' इत्यर्थे छः तस्य च इयादेशः । "सहस्रदंष्ट्रः पाठीन उलूपी शिशुकः समौ ।" इत्यमरः । कमठस्य कूर्मस्येदं कामठं पूर्वोक्तेऽर्थे एवाण् । "कूर्मे कमठ-कच्छपौ" इत्यमरः । वाथवा किटेर्वराहस्येदं कैटं, कण्ठीरवस्य सिंहस्येदं काण्ठीरवं वा रूपं यातु प्राप्नोतु, अन्यत् अश्वादिरूपं वा यातु । तथापि यद्यद्भगवान् रूपं धत्ते, तत्सर्वं अप्राकृतं प्रकृतिसंबन्धरहितं, यद्यस्मात् असौ भगवान् तेषु रूपेषु स्वीकृतेष्वपि स्वस्य स्वभावं सामर्थ्यं न उज्झति न त्यजति । यथा—मत्स्यरूपेण वेदोद्धारणं, कूर्मरूपेण मन्दराचलधारणं, वराहेण धरण्युद्धारणमित्याद्यूह्यम् । नैतत् प्राकृतेन रूपेण कर्तुं शक्यमिति भावः ॥ ३८६ ॥

पुनरपि तमेव वराहं वर्णयति—**कोलमिति** । जगतः आलम्बं आश्रयं कोलं वराहं "कोलः पोत्री किरिः किटिः ।" इत्यमरः । भुवि अवैतुं ज्ञातुं, अवपूर्वकात्

---

१ 'योऽयम्'. २ 'नैव धत्ते'. ३ 'असुरात्ताम्'.

वाराशिगभीराम्भसि काराभवनेऽभि-
ग्रस्तामिह मुस्तामिव यस्तामुदहार्षीत् ॥ ३८७ ॥

सभक्तिप्रकर्षं यज्ञवराहमभिध्यायन् तमामन्त्र्य—

द्राघिष्ठं कुहनावराह ! भगवन्दंष्ट्रात्मकं ते दृढ-[2]
स्तम्भं संप्रति चिन्तयामि जलधिस्नेहौघसंपूरिता[3] ॥
यस्मिन्विन्दति दीपभाजनविधामामोदिनी मेदिनी
चित्रस्तत्र च रत्नसानुरयते निष्कम्पदीपाकृतिम् ॥ ३८८ ॥

---

‘ इण् गतौ ’ इत्यादादिकात् तुमुन् । “ एत्येधत्यूठ्सु—” इति वृद्धिः । कः पुरुषः अलं समर्थः ? । कोपि नैवेत्यर्थः । यतः यः शुभानि भक्तकल्याणानि कामयते वाञ्छति तच्छीलः स्वामी सकलजगदधिपतिः वराहः, असुरेण हिरण्याक्षनामकदैत्येन आर्तां पीडितां भूमिं पृथ्वीं, वाराशेः समुद्रस्य गभीरे निम्ने अम्भसि उदके तद्रूपे इत्यर्थः । काराभवने बन्धनालये “ कारा स्याद्बन्धनालये ” इत्यमरः । स्थितां तां पृथ्वीं अभिग्रस्तां भक्षितां मुस्तामिव वराहभक्ष्यदूर्वासदृशद्रव्यविशेषमिव ‘ नागरमोथा ’ इति महाराष्ट्रभाषाप्रसिद्धमिवेत्यर्थः । इह लोके उदहार्षीत् समुद्दधार । तं कोलमिति संबन्धः । अस्य वृत्तस्य वृत्तरत्नाकरादौ लक्षणं नोपलभ्यते । चित्रवृत्तेष्वस्यान्तर्भावः (?) ॥ ३८७ ॥

एवं संवर्ण्य भक्त्या तमेव चिन्तयति—**द्राघिष्ठमिति** । कुहनया दम्भेन कपटेनेति यावत् “कुहना दम्भचर्यायामीर्ष्यालौ कुहनस्त्रिषु ।” इति मेदिनी । वराहः सूकररूपधरः तत्संबोधने हे कुहनावराह, हे भगवन्, ते दंष्ट्रात्मकं दंष्ट्रारूपं द्राघिष्ठं अतिदीर्घं दृढस्तम्भं अशिथिलस्तम्भं संप्रति इदानीं चिन्तयामि स्मरामि । यस्मिन् स्तम्भे जलधिः समुद्र एव स्नेहौघः तैलपूरः तेन संपूरिता, अत एव आमोदिनी आनन्दवती मेदिनी पृथ्वी दीपभाजनस्य दीपपात्रस्य विधां प्रकारं विन्दति प्राप्नोति । किंच तत्र पात्रे चित्रः चित्रवर्णः रत्नसानुः सुमेरुः “ मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः । ” इत्यमरः । निष्कम्पः चलनरहितः अकृत्रिमत्वाज्जडत्वाच्च वातादिभयाभावादित्यर्थः । स चासौ दीपश्च तस्य आकृतिं आकारं अयते प्राप्नोति । तं स्तम्भमिति संबन्धः ॥ ३८८ ॥

---

१ ‘न्यस्तामिव यस्तामिव मुस्तामिद’. २ ‘तदृढम्’, ‘ते दृढम्’. ३ ‘संपूरितम्’.

# अथ कावेरीवर्णनम् ३३.

इत्यन्यत्राभिक्रामन् मन्दानिलस्पर्शसुखमभिनीय सानन्दम्—

कह्लारोत्पलतल्लजोल्लल[1]नवत्कल्लोलनिर्लोलन-
क्रीडापाटवगाढरूढहिमतासौरभ्यविभ्राजितः ॥
कावेरीसलिलावगाहरसिकः कस्यैष नेड्यो मरुत्
क्लान्तानां पुनरध्वनीनवपुषां यन्निर्धुनीते श्रमम् ॥ ३८९ ॥

कावेरीझ[2]रीं निरीक्ष्य[3] सशिरःकम्पम्—

हन्त रङ्गपुरसङ्गतमत्राहं तरङ्गचलपङ्कजसङ्घम् ॥
सह्यजायतझरं बहु मन्ये स ह्यजायत तमःशमनार्थम् ॥३९०॥

---

अथ कावेरीं वर्णयितुमुपक्रमते—**इतीत्यादि**। अभिक्रामन् अभिगच्छन् "वा-भ्राश-भ्लाश-" इत्यादिना श्यनभावपक्षे शप्। "क्रमः परस्मैपदेषु" इति दीर्घः। अभिनीय प्रकटीकृत्य—

**कह्लारेति**। कह्लाराणि सुगन्धीनि यानि उत्पलानि कमलानि तानि कह्लारोत्पलानि प्रशस्तानि च कह्लारोत्पलानि कह्लारोत्पलतल्लजाः "प्रशंसावचनैश्च" इति समासः। "मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ। प्रशस्तवाचकान्यमूनि" इत्यमरः। तेषां उल्ललनं उन्नयनं विद्यते यस्मिन् तथाभूतं यत् कल्लोलेषु महातरङ्गेषु निर्लोलनं ऊर्ध्वाधोभ्रमणं तद्रूपा या क्रीडा तस्यां यत्पाटवं कुशलत्वं तेन गाढं अतिमात्रं रूढाभ्यां हिमता शीतलता च सौरभ्यं सौगन्ध्यं च ताभ्यां विभ्राजितः विराजितः, एतादृशः कावेर्याः नद्याः सलिले जले योऽवगाहः स्नानं तस्मिन् रसिकः अनुरक्तः एषः मरुत् वायुः, "मरुतौ पवनामरौ" इत्यमरः। कस्य पुरुषस्य ईड्यः स्तुत्यः न भवति? यत् यस्मात् कारणात् क्लान्तानां अतिमार्गक्रमणश्रान्तानां अध्वनीनानां पथिकानां, अध्वन्शब्दात् "अध्वनो यत्खौ" इति अलंगच्छतीत्यस्मिन्नर्थे खः "आत्माध्वानौ खे," इति टिलोपो न। "अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि।" इत्यमरः। वपूंषि शरीराणि तेषां श्रमं क्लमं निर्धुनीते निवारयति। अतः स मरुत् सर्वस्यापि स्तुत्य इति भावः॥ ३८९ ॥

पुनरपि तामेव कावेरीझरीं वर्णयति—**हन्तेति**। हन्तेति हर्षे। अत्र पुरोवर्तिभागे रङ्गपुरेण श्रीरङ्गनाथक्षेत्रेण संगतं मिलितं तरङ्गैर्लहरीभिः चलाश्चञ्चलाः पङ्कजानां कमलानां संघाः समुदाया यस्मिंस्तं एतादृशं, सह्यजायाः सह्याद्रेरुत्पन्नायाः कावेर्याः आयतं दीर्घं झरं प्रवाहं, अहं बहु अतिशयेन मन्ये मानयामि। हि यस्मात् सः

---

१ 'ललनकृत्'. २ 'सरितं'. ३ 'निरूप्य'.

एषा खलु[1] दोषाकुलसकलमनुज[2]कुलसकलकलुषशोषणबद्धकङ्कणा[3] । निजतटनिबिडतमबकुल[4]धवलकुलतिलकामलकाविरलसरलकुन्दचन्दनमन्दारसहकारकेरलकेसर[5]सरलबदरकदम्बकदम्बक[6]गम्भीरजम्बीरजम्बूसंपूर्णपर्णकुसुमपलाशसमृद्धकपित्थलोध्रनीरन्ध्रशिलीन्ध्रपाटलपटलजटिलक्रमुकप्रमुखविशङ्कटविटपिमञ्जरीपुञ्जसञ्जरीजृम्भदुरुतरश्रमशमकरमकरन्दरस-

---

कावेरीप्रवाहः तमसः अज्ञानस्य पापस्य वा शमनार्थं विनाशार्थं अजायत प्रकटीबभूव ॥ ३९० ॥

**एषेति ।** एषा कावेरी नदी खलु दोषैः पापैराकुलानि व्याप्तानि यानि सकलमनुजकुलानि निखिलमनुष्यवृन्दानि तेषां सकलकलुषाणां सकलपातकानां शोषणे नाशने बद्धं कङ्कणं यया सा, तदर्थं कृतनिश्चयेति यावत् । निजतटे स्वकीयतीरे निबिडतमाः अतिसान्द्राः ये बकुला बकुलवृक्षाश्च धवलकुलानि अर्जुनवृक्षसमूहाश्च तिलकाः क्षुरकाश्च "तिलकः क्षुरकः श्रीमान्" इत्यमरः । आमलकाश्च अविरला निबिडाः सरलाः पीतद्रुसंज्ञकवृक्षाश्च "पीतद्रुः सरलः पूतिकाष्ठं" इत्यमरः । कुन्दाश्च चन्दनाश्च मन्दाराः पारिजातकाश्च "मन्दारः पारिजातकः" इत्यमरः । सहकारा आम्रवृक्षाश्च केरलाश्च वृक्षविशेषाः केसराश्च सरलाश्च, क्वचित् सरस इति पाठः । तत्पक्षे बदरविशेषणम् । बदराश्च कदम्बा नीपाश्च "तूलं च नीप-प्रियक-कदम्बास्तु हलिप्रिये ।" इत्यमरः । तेषां वृक्षविशेषाणां कदम्बकं समूहः तथा गम्भीरा ये जम्बीराश्च जम्ब्वः जम्बूवृक्षाश्च, जम्बूशब्दः स्त्रीलिङ्गः । "बार्हतं च फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम् ।" इत्यमरात् । संपूर्णानि समग्राणि निबिडानीति यावत् । पर्णानि कुसुमानि पुष्पाणि च येषु तादृशाः पलाशाः किंशुकाः "पलाशे किंशुकः पर्णो वातपोतोऽथ वेतसे ।" इत्यमरः । समृद्धाः ये कपित्थाः लोध्राश्च तैः नीरन्ध्राः सान्द्राः शिलीन्ध्राः पाटलाश्च तेषां पटलानि समूहाः "समूहे पटलं न ना" इत्यमरः । तैश्च जटिला निबिडाः अन्योन्यसंमिश्रा इत्यर्थः । ये क्रमुकाः पूगवृक्षाश्च "घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु ।" इत्यमरः । ते सर्वे प्रमुखा मुख्याः येषु ते ये विशङ्कटाः विशालाः "विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् ।" इत्यमरः । विटपिनो वृक्षाः तेषां मञ्जरीपुञ्जेभ्यः मञ्जरीसमूहेभ्यः संजरीजृम्भन् अत्यन्तं प्रवहन्, जृम्भतेर्यङ्लुकि द्वित्वे च "रीगृदुपधस्य च" इत्यभ्यासस्य रीगागमः । उरुतरः अतिबहुलः श्रमशमकरः ग्लानिनिवारकः मकरन्दरसः पुष्परससारं तस्य सुप्रसने सुष्ठु पाने तात्पर्यं अत्यन्तासक्तत्वं तेन पर्यटन्तः परितो भ्रमन्तः अदभ्राणां बहूनां विभ्रमाणामालम्बा आश्रयभूताः रोलम्बा भ्रमरास्तेषां निकुरम्बैः समूहैः

---

१ 'किल'. २ 'दोषाकुलमनुज'. ३ 'बद्धकङ्कणकङ्कणा'. ४ 'बकुलबकुल', 'बकुलधरबकुल', 'बकुलधवलबकुलकुल'. ५ 'सहकारकेसरं'. ६ 'सरसकदम्बकदम्बकबदर'.

सुग्रसनतात्पर्यपर्यटददभ्रविभ्रमालम्बरोलम्ब[1]निकुरम्बकरम्भि[2]ततया कलिन्दनन्दिनीप्रतिच्छन्दतामनुविन्दन्ती । निशाकलितविशालसुरतदशाभ[3]वश्रमशालिक्षितीशालि[4]निशान्तकृशाङ्गीजनमज्जनवेलादोलायितपृथुलहारप्रत्युप्तमुक्ताफलरुचिनिचयपरिचयरचितया शुचितया पीताम्बरपदाम्बुरुहसम्भवसरि[5]दम्बुडम्बरं विडम्बयन्ती । संततमन्तर्गतचिरन्तनपुरुषतल्पीभवदनन्तफणा[6]मणिघृणिश्रेणीशोणीभूततया सरस्वतीमनुकुर्वन्ती । पार्श्वद्वय्यामपि नैयमिककर्मानुष्ठानश्रद्धाबद्धासनशुद्धावनीसुरारब्धानवद्य[7]ब्रह्मयज्ञसमयसमधिगतमन्त्रब्राह्मणाम्रेडनपूर्वकमजस्रं सहस्रपत्रमध्यमध्यासीनानां श्रीरङ्गराजनाभिसरोजविराजमाननिखिलनिगमपठनमुखरचतुर्मुखवैख-

"समुदायः समुदयः समवायश्चयो गणः । स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् । समूहे" इत्यमरः । करम्भिततया व्याप्ततया कलिन्दनन्दिनी यमुना तस्याः प्रतिच्छन्दतां तुल्यतां अनुविन्दन्ती प्राप्नुवती । तथा निशायां रात्रौ आकलितं आचरितं यत् विशालं सुरतं बहुव्यवायः तस्य दशायामवस्थायां भवो जातो यः श्रमः तेन शाली युक्तः क्षितीशालीनां राजसमूहानां निशान्तकृशाङ्गीजनः अन्तःपुरस्त्रीसमूहः तस्य मज्जनवेलायां स्नानवेलायां दोलायिताः दोलावदाचरिताः ये पृथुला महान्तो हाराः तेषु प्रत्युप्तानि खचितानि यानि मुक्ताफलानि मौक्तिकानि तेषां रुचिनिचयस्य कान्तिसमूहस्य परिचयेन रचितया निर्मितया शुचितया शुभ्रत्वेन पीताम्बरस्य विष्णोः पदाम्बुरुहात् चरणकमलात् संभव उत्पत्तिर्यस्याः सा तादृशी या सरित् गङ्गानदी तस्याः अम्बुडम्बरं उदकाडम्बरं विडम्बयन्ती अनुकुर्वती । तथा संततं निरन्तरमन्तर्गतः अन्तः स्थितो यश्चिरन्तनपुरुषः श्रीरङ्गनायकाख्यो भगवान् तस्य तल्पीभवन् शयनरूपीभवन् योऽनन्तः शेषः तस्य फणामणीनां घृणिश्रेणीभिः किरणपङ्क्तिभिः " किरणोऽस्र-मयूखांशु-गभस्ति-घृणि- रश्मयः । " इत्यमरः । शोणीभूततया रक्तीभूतत्वेन सरस्वतीं नाम नदीमनुकुर्वन्ती, तथा पार्श्वद्वय्यां तीरद्वयेऽपीत्यर्थः । द्वय्यामित्यत्रायचः स्थानिवद्भावेन तयप्प्रत्ययान्तत्वात् " टिड्ढाणञ्—" इत्यादिना ङीप् । नैयमिकानि नियमसंबन्धीनि यानि कर्माणि तेषामनुष्ठाने या श्रद्धा आस्तिक्यबुद्धिः तया बद्धानि रचितान्यासनानि यैस्ते अत एव शुद्धाः पवित्रा ये अवनीसुरा ब्राह्मणास्तैरारब्धो यो ब्रह्मयज्ञः तत्समये समधिगतानि प्राप्तानि मन्त्रब्राह्मणानि वेदमन्त्रा इत्यर्थः । तेषां आम्रेडनपूर्वकं द्विस्त्रिरुच्चारणपूर्वकं " आम्रेडितं द्विस्त्रिरुक्तम् " इत्यमरः । अजस्रं निरन्तरं सहस्रपत्रमध्यं कमलमध्यमध्यासीनानां श्रीरङ्गराजस्य भगवतः नाभिसरोजे नाभिकमले विराजमानस्य शोभयानस्य निखिलनिगमानां चतुर्णामपि

ब'. २ 'राम्भित'. ३ 'सुरतदशानुभव'. ४ 'क्षितीशनि'. ५ 'सरितं परिज्झरं विडम्बयन्ती'. ६ 'फणामणिश्रेणी'; 'अनव'. ७ 'अनर्घ'.

'.

रीं व्याचक्षमाणानां मदकलमरालयूनां वरटापरिरम्भचुम्बनमुखानङ्गसङ्गरप्रक्षोभसमुत्सृत्वरैरभिरामतामरसपरागैरभिनवचन्दनरसमसृणशरीरेव। सलीलमाकण्ठनिमग्नमूर्तीनां सुगात्रीणां वदनैरदसीये पयसि विहायसाध्यासेन समागतश्चन्द्रमाः सन्निहितश्रीरङ्गधामा स्वसमाननामा विधुर्विरचितानेकावतार इतीर्ष्यया स्वयमपि बहूनि रूपाणि विदधानो विराजत इति भ्रान्त्यां सत्यामनुरागमान्द्यसंपादिकायामितरेतरदृढाश्लेषविशेषोन्मिषत्तोषाभिः कोकदम्पतीपरम्पराभिर्निराकृतायामकुण्ठोत्कण्ठेन युवलोकेन निर्निमेषमवलोक्यमानैरलंकृता सरस्वत्याभिमुख्येन कवेरात्मजेति प्रसिद्धिं सार्थ-

वेदानां पठनेन मुखरा शब्दायमाना या चतुर्मुखवैखरी ब्रह्मवाणी तां व्याचक्षमाणानां स्पष्टीकुर्वतां मदकलानां मदोत्कटानां "मदोत्कटो मदकलः" इत्यमरः। मरालयूनां तरुणहंसानां वरटाभिः हंसयोषिद्भिः सह "हंसस्य योषिद्वरटा" इत्यमरः। परिरम्भः आलिङ्गनं चुम्बनं च मुखं मुख्यं यस्मिंस्तादृशं यदनङ्गसंगरं मदनयुद्धं सुरताचरणमित्यर्थः। तस्य प्रक्षोभेन समुत्सृत्वरैः निःसृतैः, समुत्पूर्वकात्सर्तेः "इण्-नश्-जि-सर्तिभ्यः–" इति क्वरप् प्रत्ययः, पित्त्वात्तुगागमः। अभिरामतामरसपरागैः मनोहरकमलरजोभिः अभिनवचन्दनरसेन मसृणमुपलिप्तं शरीरं यस्याः सेव, तथा सलीलं यथा तथा आकण्ठं कण्ठपर्यन्तं निमग्नाः जलाच्छादिताः मूर्तयो देहा यासां तासां सुगात्रीणां सुन्दरशरीराणां स्त्रीणां वदनैः मुखैः, हेतौ तृतीया। अदसीये अस्याः कावेर्याः संबन्धिनि पयसि जले विहायसाध्यासेन आकाशभ्रान्त्या समागतश्चन्द्रमाः संनिहितं समीपं श्रीरङ्गस्य भगवतः धाम स्थानं यस्य सः तथाभूतः सन्, आत्मना समानं तुल्यं नाम विधुरिति यस्य सः, विधुः विष्णुः "विधुर्विष्णौ चन्द्रमसि" इत्यमरः। विरचिताः धृताः अनेके बहव अवतारा येन तथोक्तः इति एवंरूपया ईर्ष्यया अक्षमया स्वयं चन्द्रमा अपि बहूनि रूपाणि विदधानः धारयन् सन् विराजति शोभते। इत्येवंरूपायां अनुरागस्य प्रेम्णः मान्द्यसंपादिकायां मन्दत्वोत्पादिकायां भ्रान्त्यां सत्यां, ततः इतरेतरदृढाश्लेषे परस्परदृढालिङ्गने विशेषेणातिशयेन उन्मिषन् उत्पद्यमानः तोषः संतोषो यासां ताभिः कोकदम्पतीपरंपराभिः चक्रवाकमिथुनपङ्क्तिभिः निराकृतायां, 'यद्येते सर्वे चन्द्राः स्युस्तर्हि नास्माकं परस्परालिङ्गनं संभवति, परं चेदानीमेतत्संभवति, तस्मान्नेमे चन्द्राः, किंतु स्त्रीणां मुखान्येव' इति निवारितायां सत्यां, अकुण्ठा अप्रतिहता उत्कण्ठा यस्य तेन युवलोकेन तरुणजनेन निर्निमेषं नेत्रमीलनरहितं यथा स्यात्तथा अवलोक्यमानैः स्त्रीमुखैरिति शेषः। अलंकृता, सरस्वत्याः वेदशास्त्रवाण्याः सरस्वति समुद्रे च आभिमुख्येन, सांमुख्येन पण्डितबाहुल्यात्

१ 'आचक्षमाणानां'. २ 'परिचुम्बचुम्बन'. ३ 'विसृत्वरैः. ४ 'मसृणित'. ५ 'वैहायसाध्वना'. ६ 'भ्रान्तावनुराग'. ७ 'अवलोकनैः;' 'अवलोकमानेन'. ८ 'सारस्वत्याभिमुख्येन'.

यन्ती । शान्तनवास्पदतया गाङ्गेयतरङ्गिणीति संज्ञामन्वर्थयन्ती । संमज्जनदुरितहराऽपि नमज्जनदुरितहरा निराकृतपथिकश्रान्तिः स्रवन्तीयं कंदलयति चक्षुषोरमन्दमानन्दम् ॥ १६६ ॥

प्रहसति भवशोषकरी भवेन परितोषिता सुवर्णनदी ॥
दुर्वर्णरुचिरफेनैः सह्यसुता जाह्नवीमसह्यसुताम् ॥ ३९१ ॥

पुनः सश्लाघम्—

स्वर्णवन्तं विदुः कान्तं रामां हेमापगामिमाम् ॥
दाम्पत्यमनयोरेतदनुरूपं विशोभते ॥ ३९२ ॥

---

प्रयत्नमन्तरा संपादनेन, समुद्रे च प्रेमातिशयेन चेत्यर्थः । कवेः पण्डितस्य आत्मजा कवेरस्य सह्याद्रेः आत्मजा कन्येति च प्रसिद्धिं ख्यातिं सार्थयन्ती यथार्थीकुर्वन्ती । शन्तनोरपत्यं शान्तनवो भीष्मः तस्य, शान्तानां शमयुक्तानां नवाः स्तुतयश्च तासां च आस्पदतया स्थानतया योग्यतया च गाङ्गेयतरङ्गिणी भीष्मजननी गङ्गेत्यर्थः । पक्षे गाङ्गेयं सुवर्णं तन्मयी तरङ्गिणीति च "स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् । तपनीयं शातकौम्भं गाङ्गेयं भर्म कर्बुरम् ।" इत्यमरः । संज्ञां नाम अन्वर्थयन्ती अर्थयुक्तां कुर्वन्ती । संमज्जनेन स्नानमात्रेण दुरितहरापि पापहरापि, मज्जनदुरितहरा न भवति इति विरोधः, नमतां नमस्कुर्वतां जनानां दुरितहरा इत्यर्थेन च तत्परिहारः । निराकृता निवारिता पथिकानां पान्थानां श्रान्तिः श्रमो यया सा इयं कावेरी नाम स्रवन्ती नदी चक्षुषोर्नेत्रयोः अमन्दं बहुलं आनन्दं कन्दलयति उत्पादयति ॥१६६॥

पूर्वस्मिन् गद्ये गङ्गासाम्यं प्रतिपादितं कावेर्याः, अधुना गङ्गाया अप्याधिक्यं प्रतिपादयति उत्प्रेक्षया—**प्रहसतीति** । भवस्य संसारस्य शोषकरी नाशकरी भवेन शिवेन संसारेण च परितोषिता, सह्यस्य सह्याद्रेः सुता कन्या तत्रोत्पन्नेत्यर्थः । सुवर्णा शोभनवर्णयुक्ता, सुवर्णा कनकमयी च नदी कावेरी, दुर्वर्णैः कृष्ण-ताम्रादिरागैः, दुर्वर्णमिव रजतमिव च "दुर्वर्णं रजतं रूप्यम्" इत्यमरः । रुचिराः मिश्रिताः सुन्दराश्च फेना तैः असह्यस्य निन्द्यत्वात् सोढुमशक्यस्य "अकारो वासुदेवः स्यात्" इति कोशात् अस्य विष्णोः सह्यां मनोहरत्वात् सहनीयां लालनीयामिति यावत् । सुतां कन्यां जाह्नवीं गङ्गां प्रहसति उपहसत्येवेति गम्योत्प्रेक्षेयम् । श्लेषमूलिका गम्योत्प्रेक्षेयम् ॥ ३९१ ॥

पुनरपि सश्लाघमाह—**स्वर्णवन्तमिति** । इमं कान्तं पतिं स्वर्णं कनकमस्याऽस्तीति तद्वन्तं, तं प्रसिद्धं अर्णवं समुद्रं च विदुः जानन्ति । इमां कावेरीं हेमापगां स्वर्णनदीं रामां कान्तां च विदुः जानन्ति । अत एव एतत् अनयोर्जायापत्योः रूपं योग्यं विशोभते विशेषेण राजते ॥ ३९२ ॥

---

२ 'स्रवन्ती चक्षुषोरमन्दं कन्दलयत्यामोदम्'.

कृ०—साक्षेपम्—

परिशोभिताम्रपार्श्वा मध्य[1]महितरङ्गराजतः स्फुरिता ॥
कथमिव दधाति कीर्तिं कावेरी कनकनिम्नगेत्येषा ॥ ३९३ ॥

**विश्वावसुः**—आपातदूषणमिदं निरूप्य[2]माणमस्या गुण एव स्यात्पश्य तावदे[3]तस्या रामणीयकम् ॥ १६७ ॥

पीताम्बरालंकृतमध्यभागा कह्लारमालाकमनीयवेणी ॥
सह्याद्रिकन्या जनकस्य गेहात् पत्युः समीपं व्रजति प्रसन्ना ॥३९४॥

पुनर्निर्वर्ण्य[4]—

उद्गच्छ[5]दच्छतमगुच्छलसच्छिरस्का-
स्तीरद्वयेऽपि तरवः प्रतिभान्त्यमुष्याः ॥

---

अत्राक्षिपति **कृशानुः—परिशोभीति** । परितः आसमन्तात् शोभिनौ ताम्रमयौ पार्श्वौ यस्याः सा, परितः आसमन्तात् शोभिताः फल-पुष्पसंपन्नत्वेन विराजिताः आम्राः आम्रवृक्षाः ययोस्तथाभूतौ च पार्श्वौ यस्याः सा इति च, मध्ये मध्यभागे महिताभ्यां महद्भ्यां रङ्गं त्रपु " त्रपु पिच्चटम् । रङ्ग-वङ्गे अथ पिचुः " इत्यमरः । राजतं रजतसमूहश्च ताभ्यामिति ततः स्फुरिता, मध्ये महितेन पूज्येन रङ्गराजतः श्रीरङ्गराजेन च, सार्वविभक्तिकस्तसिः । स्फुरिता शोभिता एतादृशी एषा कावेरी नदी कनकनिम्नगा सुवर्णनदी इति कीर्तिं कथमिव दधाति धारयति ? व्यर्थैवेयं कीर्तिरस्या इति भावः ॥ ३९३ ॥

समाधत्ते—**आपातेति** । इदं पूर्वोक्तं निरूप्यमाणं त्वया दीयमानं आपातदूषणं अतात्त्विकं श्लेषमूलकमितियावत्, यद्दूषणमित्यर्थः । तदस्याः कावेर्याः गुण एव स्यात् । तावत्तस्मात् तत्त्वतः एतस्या रामणीयकं रमणीयत्वं पश्य ॥ १६७ ॥

तदेवाह—**पीताम्बरेति** । इयं सह्याद्रिकन्या कावेरी पीतं च तत् अम्बरं वस्त्रं तेन, पीतकौशेयवस्त्रेणेत्यर्थः । पीताम्बरेण विष्णुना च " पीताम्बरोऽच्युतः शार्ङ्गी " इत्यमरः । अस्मिन् पक्षे च बहुव्रीहिः समासः । अलंकृतः मध्यभागो मध्यप्रदेशो नितम्बप्रदेशश्च यस्याः सा, कह्लाराणां रक्तकमलानां मालया पङ्क्त्या च कमनीया सुन्दरा वेणी केशपाशः प्रवाहश्च यस्याः सा तथाभूता " वेणी सेतु-प्रवाहयोः । देवताडे केशबन्धे " इति हैमः । प्रसन्ना प्रसन्नान्तःकरणा स्वच्छजला च सती, जनकस्य पितुः, सह्याद्रेश्च गेहात् गृहात्, प्रदेशाच्च पत्युः भर्तुः, समुद्रस्य च समीपं व्रजति गच्छति ॥ ३९४ ॥

**किंच उद्गच्छदिति** । अमुष्याः कावेर्यास्तीरद्वयेऽपि, स्थिता इति शेषः । उद्ग-

---

१ 'मध्यमितरङ्ग', 'मध्यमतोरङ्ग'. २ 'निरूप्यमाणाया अस्या'. ३ 'एनां परमरमणीयाम्'. ४ 'निरूप्य'. ५ 'उच्चतम'.

एनां तरीतुमिह यत्नजुषः स्वशीर्ष-
बद्धावदातवसनाः पथिका इवामी ॥ ३९५ ॥

## अथ श्रीरङ्गनगरीवर्णनम् ३४.

किंचिदन्तरमुपसृत्य अधस्तादवलोक्य सहर्षम्—

सारङ्गडिम्भनयनानवकेलियोग्यनारङ्गमुख्यतरुपुष्कलनिष्कुटेयम्[1] ॥
श्रीरङ्गदिव्यनगरी प्रथते नयाब्धिपारंगतैर्बुधजनैः परिसेव्यमाना[2] ॥३९६॥

निपुणं विभाव्य सशिरःकम्पम्—

हंसा निष्कुटदीर्घिकावसतयः प्रक्रान्ततर्कोवहा[3]
लीलोद्यानचरः पतञ्जलिगिरा पुंस्कोकिलः खेलति ॥
द्वैताद्वैतकथा यथा विधदति क्रीडामयूरा इह
स्वैरं तान्त्रिककारिकाः परिपठन्त्येता मुहुः सारिकाः ॥३९७॥

च्छन्तः उत्पद्यमानाः अच्छतमाः अतिस्वच्छाः ये गुच्छाः पुष्पपुञ्जाः तैः लसन्ति, शोभमानानि शिरांसि शाखाग्राणि येषां ते लसच्छिरस्काः तरवो वृक्षाः भान्ति शोभन्ते। कथंभूताः। इह अस्यास्तीरे एनां नदीं तरीतुं पारं गन्तुं 'तॄ प्लवन-तरणयोः' इति धातोः "तुमुन्-ण्वुलौ—" इत्यादिना तुमुनि इटि च तस्य "वॄतो वा" इति दीर्घः। यत्नजुषः प्रयत्नं कुर्वाणाः सन्तः अमी वृक्षाः स्वशीर्षे निजमस्तके बद्धानि जलस्पर्शभयेन वेष्टितानि अवदातानि शुभ्राणि वसनानि परिधानवस्त्राणि यैस्तथाभूताः पथिकाः पान्था इव, प्रतिभान्तीति संबन्धः। उत्प्रेक्षालंकारः ॥ ३९५ ॥

**सारङ्गेति**। सारङ्गडिम्भस्य हरिणशिशोरिव नयने नेत्रे यासां तासां हरिणनयनानां स्त्रीणां नवकेलीनां नवीनशृङ्गारक्रीडानां "हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः। द्रव-केलि-परीहासाः क्रीडा लीला च नर्म च।" इत्यमरः। योग्याः नारङ्गा नारङ्गवृक्षा मुख्या येषु ते ये तरवो वृक्षास्तैः पुष्कलाः परिपूर्णाः निष्कुटाः गृहारामा यस्यां सा तथाभूता, तथा नयाः न्यायशास्त्राण्येव, नीतिशास्त्राणि वा अब्धिः समुद्रः तस्य पारंगतैः परतीरप्राप्तैः, संपूर्णनयशास्त्रनिपुणैरित्यर्थः। बुधजनैर्विद्वज्जनैः परिसेव्यमाना इयं पुरो दृश्यमाना श्रीरङ्गसंज्ञा दिव्यनगरी प्रथते प्रकाशते ॥ ३९६ ॥

किंच अत्र क्षेत्रे पक्षिणोऽपि विविधशास्त्रनिपुणा इत्याह—**हंसा इति**। इह श्रीरङ्गनगर्यां निष्कुटेषु गृहोद्यानेषु या दीर्घिका वाप्यस्तासु वसतिर्निवासो येषां ते

१ 'नग'. २ 'परिभूष्यमाणा', 'परिहृष्यमाणा'. ३ 'तर्का अहो', 'तर्कच्छदा'. ४ 'युधा'.

किंच—

प्रातः प्रातः पयसि विमले पावने सह्यपुत्र्याः
स्नायं स्नायं सकलविषयत्यागिनो योगिनोऽमी ॥
वारं वारं भुजगशयनं लोचनाभ्यां पिबन्तः
क्षेमंक्षेमं[1] क्षणवदखिलं कालमत्र क्षिपन्ति ॥ ३९८ ॥

**कृशानुः**—वयस्य विरुद्धमेव भाषसे ॥ १६८ ॥

सारङ्गदृष्टिं कथमुत्सृजद्भ्यः सा रङ्गदृष्टिः स्वदते? मुनिभ्यः ॥
कवेरजासंगतिमुत्सिसृक्षोः कवेरजासङ्गरुचिः कथं स्यात्?॥३९९॥

---

तथोक्ताः प्रक्रान्तान् स्वसमुदाये वक्तुमुपक्रान्तांस्तर्कान् न्यायशास्त्राणि वहन्ति धारयन्तीति तद्वहाः। न्यायशास्त्रनिपुणा इत्यर्थः। हंसाः सन्ति। तथा लीलोद्याने क्रीडोपवने चरतीति तच्चरः पुंस्कोकिलः कोकिलपुरुषः। अत्र 'पुम् कोकिलः' इति स्थिते "पुमः खयि—" इति रुत्वे विसर्गे सत्वे "अनुनासिकात् परः—" इत्युकारस्यानुस्वारे च सिद्धमिदम्। पतञ्जलेः गिरा व्याकरणमहाभाष्यरूपया खेलति क्रीडति। तथा क्रीडामयूराः द्वैतं जीवेश्वरयोर्भेदः अद्वैतं तयोरैक्यं च तयोः कथाः स्वसमुदाये संवादरूपा इत्यर्थः। यथा विदधति कुर्वन्ति, तथैव एताः सारिकाः शुकस्त्रियः तान्त्रिककारिकाः मीमांसाशास्त्रकारिकाः स्वैरं स्वच्छन्दं यथा तथा मुहुर्वारं वारं परिपठन्ति उच्चारयन्ति ॥ ३९७ ॥

अथ तत्रत्यजनानां सदाचारं वर्णयति—**प्रातः प्रातरिति**। अत्र नगर्यां सकलविषयत्यागिनः ऐहिकसकलकामाद्युपभोगत्यागिनः, अत एव योगिनः योगाभ्यासिनः अमी जनाः प्रातः प्रातः प्रतिप्रातःकालं सह्यपुत्र्याः कावेर्याः नद्याः पावने पवित्रे, विमले निर्मले च पयसि उदके, स्नायं स्नायं स्नात्वा स्नात्वा "आभीक्ष्ण्ये—" इत्यादिना पौनःपुन्यार्थे णमुल् द्वित्वं च। वारं वारं निरन्तरं भुजगः शेषः शयनं यस्य तं श्रीरङ्गेशं, लोचनाभ्यां पिबन्तः अवलोकयन्तः सन्तः, क्षेमं क्षेमं निरन्तरकल्याणकारकं अखिलं सकलं कालं क्षणवत् क्षिपन्ति निर्यापयन्ति ॥ ३९८ ॥

अथ दूषयितुमुपक्रमते—**वयस्येत्यादि** ॥ १६८ ॥

विरुद्धत्वमेवाह—**सारङ्गदृष्टिमिति**। सारङ्गस्य हरिणस्येव दृष्टी नयने यस्याः सा तां स्त्रियं, जातावेकवचनम्। उत्सृजद्भ्यः त्यजद्भ्यः मुनिभ्यः योगिभ्यः सारङ्गदृष्टिः स्त्री, सा प्रसिद्धा रङ्गस्य रङ्गनाथस्य दृष्टिःदर्शनं च कथं स्वदते रोचते? तथा कं ब्रह्म वेत्तीति कविः तस्य ब्रह्मविदः "को ब्रह्मणि शरीरे च" इति कोशः। अजायाः मायायाः मायामयसंसारस्येत्यर्थः। संगतिं संबन्धं, कवेरजायाः कावेर्याश्च संगतिं उत्सिसृक्षोः त्यक्तुमिच्छोः कवेः पण्डितस्य अजासङ्गे मायासमागमे, कवेरजासङ्गे कावेरीसंबन्धे च रुचिः प्रीतिः कथं स्यात्? अपि तु नैव भवेदित्यर्थः। अत्र 'सा-

---

१ 'क्षामक्षेमाः', 'क्षामाक्षेमा'. २ 'दृष्टीः'.

**वि०**—सखे भवता भणितानां पदानां व्यासेनैवविरोधःसमाधेयः १६९

इत्यग्रतः पश्यन्नञ्जलिं बद्ध्वा—

श्रीरङ्गे शोभते यस्य श्रीरङ्गे शोभते च यः ॥
नमोऽहं कलये तस्मै न मोहं कलये ततः ॥ ४०० ॥

किंच—

प्रणिपतिकर्मीकुर्मः फणिपतिभोगेशयं रथाङ्गशयम् ॥
कारणमेकं जगतां वारणपतिभीतिवारणं [1]ज्योतिः ॥ ४०१ ॥

**कृशानुः**—किमस्मिन्नपि महाभुजङ्ग[2]शायिनि क्रियन्ते त्वया प्रणामाः?॥

तथाहि—

---

रङ्गदृष्टिं कवेरजासंगतिं ' इति श्लिष्टाभ्यां पदाभ्यां विरोधाभासोऽलंकारः, वास्तवार्थेन च तत्परिहारः । दूषणमपि श्लेषेणैव नतु वास्तवार्थेनेति ज्ञेयम् ॥ ३९९ ॥

**सख इति** । हे सखे, भवता भणितानां उच्चारितानां पदानां शब्दानां विरोधः विरोधाभासः व्यासेनैव, न त्वन्येनेति सूचनार्थमेवशब्दः । समाधेयः समाधातुं शक्यः परिहारार्ह इत्यर्थः ॥ १६९ ॥

अहं तु केवलं भगवन्तं नमस्करोमीति सूचयन्नाह—**श्रीरङ्ग इति** । यस्य भगवतः अङ्गे वक्षःस्थले श्रीर्लक्ष्मीः शोभते, स्वयं च यः श्रीरङ्गे नाम क्षेत्रे च शोभते । तस्मै श्रीरङ्गनाथाय अहं नमः नमस्कारं कलये करोमि । कुतः, ततः नमस्काराचरणात् मोहं प्रपञ्चासक्तिरूपं अविचारं, न कलये न स्वीकरोमि ॥ ४०० ॥

किंच **प्रणिपतीति** । फणिपतेः सर्पराजस्य शेषस्य भोगे शरीरे " अहेः शरीरं भोगः स्यात् " इत्यमरः । शेते इति तथाभूतः तं शेषशायिनमित्यर्थः । " शयवासवासिष्वकालात् " इति सप्तम्या अलुक् । रथाङ्गं चक्रं शये हस्ते यस्य सः तं, चक्रपाणिमित्यर्थः । " पञ्चशाखः शयः पाणिः " इत्यमरः । जगतां एकमद्वितीयं मुख्यमित्यर्थः । कारणं, वारणपतेर्गजेन्द्रस्य भीतिवारणं भयनिवारकं ज्योतिः तेजोरूपं, प्रणिपतेः प्र-नि- इत्येतदुपसर्गपूर्वकस्य पतधातोः अर्थात् प्रणिपातस्य नमस्कारक्रियाया इत्यर्थः । कर्मीकुर्मः, ईप्सिततमरूपं कुर्मः । तं प्रति नमस्कुर्म इत्यर्थः॥४०१॥

पुनरपि दूषयति—**किमिति** । अस्मिन् महांश्चासौ भुजङ्गः विटः महाभुजङ्गः शेषश्च " भुजङ्गो विट-सर्पयोः " इति कोशान्तरम् । तस्मिन् शेते तस्मिन्नपि त्वया प्रणामा नमस्काराः क्रियन्ते किम् ? अहो शेषशायिभगवन्नमस्कारकरणान्महद्भाग्यं तवेति वास्तवोऽर्थः ॥ १७० ॥

---

१ 'धाम'. २ 'किमस्मिन् महाभुजङ्गे'.

श्यामोत्तुङ्गपयोधरोज्ज्वलरुचिस्तन्वन्भुजङ्गान्वयम्
श्रीरङ्गस्थलनित्यवासरसिकः शृङ्गारिणामग्रणीः ॥
प्राकारप्रकरान्तरस्थितिमती या राजपद्मिन्यहो
निःशङ्कं[1] परपूरुषश्चिरमसौ निद्राति तत्सन्निधौ ॥ ४०२ ॥

**विश्वावसुः**—श्लेषावलम्बना दोषा इमे न मे रोषावहाः, प्रत्युत तोषावहा[2] इति नाहमत्रोत्तरयामि ॥ १७१ ॥

---

तदेव सविस्तृतमुपपादयति—**श्यामेति** । श्यामानां षोडशवर्षवयस्कानां तरुणीनां "श्यामा षोडशवार्षिकी" इति तल्लक्षणम् । उत्तुङ्गयोरुच्चयोः पयोधरयोः स्तनयोः उज्वला अतिशयिता रुचिरासक्तिर्यस्य सः, श्यामस्य नीलवर्णस्य उत्तुङ्गस्योन्नतस्य च पयोधरस्य मेघस्येव "स्त्रीस्तनाब्दौ पयोधरौ" इत्यमरः । उज्ज्वला भासमाना रुचिः कान्तिर्यस्य सः इति च तत्त्वार्थः । शृङ्गारः स्त्र्यासक्तिरूपो विद्यते येषां ते शृङ्गारिणस्तेषां अग्रणीः अग्रेसरः । शृङ्गारलक्षणमुक्तं रससुधाकरे–"विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः । नीता सदस्यरस्यत्वं रतिः शृङ्गार उच्यते ।" इति । स्त्रीपुरुषयोरन्योन्यासक्तिरूपेच्छाविशेषो रतिरित्युच्यते । तल्लक्षणमपि तत्रैव– "यूनोरन्योन्यविषयस्थायिनीच्छा रतिः स्मृता ।" इति । अन्यत्रापि– "शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः । पुरुष-प्रमदाभूमिः शृङ्गार इति गीयते ।" इति । भरतोऽप्याह– "ऋतुमाल्यालंकारैः प्रियजनगान्धर्व-प्रणय-सेवाभिः । उपवनगमनविहारैः शृङ्गाररसः समुद्भवति । नयन-वदनप्रसादैः श्रुतिमधुर-वचो-धृति-प्रमोदैश्च । ललितैश्चाङ्गविहारैस्तदभिनयः संप्रयोक्तव्यः ।" इति । अत एव भुजङ्गानां विटानां भुजङ्गस्य शेषस्य च "भुजङ्गो विटसर्पयोः" । अन्वयं संबन्धं, अन्यत्र शयनरूपं च तन्वन् कुर्वन्, श्रीमति रङ्गस्थले रङ्गशालायां नाट्यस्थले इत्यर्थः । नित्यवासे सततनिवासे रसिकः, पक्षे श्रीरङ्गस्थले नाम क्षेत्रे नित्यवासरसिकः तत्र नित्यनिवासीत्यर्थः । असौ परः पत्युरन्यः जार इति यावत् । पूरुषः, पक्षे पर उत्तमः पुरुषश्च या प्राकाराणां पाषाणादिभित्तीनां शैवलादिवेष्टनानां च प्रकरस्य समूहस्य अन्तरे मध्ये स्थितिमती स्थितिशीला राज्ञः चक्रवर्तिभूपतेः पद्मिनी तल्लक्षणोपेता पत्नी, पक्षे राज्ञः चन्द्रस्य पद्मिनी कमलिनी "द्विजराजः शशधरः" इति कोशोक्तद्विजराजशब्दस्य राजेत्येकदेशेन ग्रहणम् । अथवा "सोमो वै राजा ब्राह्मणानाम्" इति श्रुतेश्चन्द्रस्य राजसंज्ञा । चन्द्रोदये विकासशालिनी कमलिनीत्यर्थः । तस्याः संनिधौ समीपे निःशङ्कं निर्भयं यथा तथा चिरं बहुकालपर्यन्तं निद्राति । अहो इत्याश्चर्ये ॥ ४०२ ॥

एवं श्लेषगर्भितं भाषणं श्रुत्वा संतुष्टः सन्नाह **विश्वावसुः—श्लेषावलम्बना इति** । इमे 'श्यामोत्तुङ्ग–' इत्यादिना प्रतिपादिताः दोषाः श्लेषावलम्बनाः अर्थद्व-

---

१ 'निःशङ्कः'. २ 'दोषावहाः'.

पुनर्निरूप्य—

क्षितिभृद्भिर्निजमौलिषु धृतपादो विरहितापकारी च ॥
इन्दुरिव रङ्गबन्धुर्दोषाभावे विलोक्यते किंतु ॥ ४०३ ॥

यद्वा—

न विधौ शुभरङ्गलक्षिताङ्गे समुदाप्यायनकारिणीह दृष्टे ॥
कलयामि कुरङ्गलक्षिताङ्गं कुमुदाप्यायनकारिणं विधुं तम् ॥४०४॥

पुनः संचिन्त्य सविस्मयम्—

रङ्गेशसेवको युक्तं नार्तरीतिं भजेदिति ॥
चित्रमेतदसङ्गीति व्यपदेशं यदश्नुते ॥ ४०५ ॥

---

यावहशब्दाश्रयाः, अत एव मे मम रोषं क्रोधं आवहन्ति संपादयन्ति तथाभूताः रोषोत्पादका इति यावत्। न भवन्ति । प्रत्युत तर्हि तोषावहाः संतोषजनका एव सन्तीति नाहमत्र त्वदुक्तदूषणेषु उत्तरयामि, प्रत्युत्तरं न ददामि ॥ १७१ ॥

**क्षितिभृद्भिरिति** । क्षितिभृद्भिः राजभिः पर्वतैश्च निजमौलिषु स्वकीयमस्तकेषु शिखरेषु च धृतौ पादौ चरणौ यस्य सः, पक्षे धृताः पादाः किरणाः यस्य सः इति च, अविः पर्वतः मेरुस्वरूपः, सूर्यो वा " अवयः शैल-मेषाऽर्काः " इत्यमरः । अथवा विः पक्षी गरुडः भगवद्विभूतिरूपः " मेरुः शिखरिणामहम् " " आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् । " " वैनतेयोऽस्मि पक्षिणाम् । " इति भगवद्गीतायां भगवतैवोक्तत्वात् । अहितानां शत्रूणां अपकारी नाशकर्ता, पक्षे विरहिणां प्रियजनवियोगयुक्तानां तापकारी संतापजनकश्च रङ्गबन्धुः श्रीरङ्गनाथः इन्दुरिव चन्द्र इव, किंतु दोषाणां कामक्रोधादीनां अभावे सति, दोषाभावे निशाभावे च विलोक्यते दृश्यते ॥ ४०३ ॥

किंच **नेति** । शुभे कल्याणगुणयुक्ते रङ्गे क्षेत्रे लक्षितं अङ्गं मूर्तिर्यस्य तस्मिन्, सुष्ठु शोभना अत्यन्तकल्याणावहा या मुत् आनन्दः तया आप्यायनकारिणि सुखकारिणि इह क्षेत्रे, विधौ चन्द्रे विष्णौ च " विधुर्विष्णौ चन्द्रमसि " इत्यमरः। दृष्टे सति, पुनः कुत्सितेन निन्दितेन रङ्गेण लक्षितं अङ्गं यस्य सः तं कुरङ्गेण मृगेण च लक्षितं चिह्नितं अङ्गं शरीरं यस्य सः तं च, कुत्सितया मुदा आनन्देन, कुमुदानां चन्द्रविकासिकमलानां च आप्यायनकारिणं विकासकारिणं च तं प्रसिद्धं विधुं चन्द्रं न कलयामि न पश्यामि ॥ ४०४ ॥

**रङ्गेशेति** । रङ्गेशस्य श्रीरङ्गनाथस्य उत्तमरङ्गस्य च सेवको भक्तः आश्रितश्च आर्तस्य दुःखिनः रीतिं प्रकारं न भजेत् न सेवेत । नार्तां नृत्यसंबन्धिनीं रीतिं च भजेदिति च युक्तं योग्यमेव । किं तु रङ्गेशसेवकः असङ्गी स्त्र्यादिभोगासक्तिरहितः इति व्यपदेशं अश्नुते प्राप्नोति इति यत्, एतदेव चित्रमाश्चर्यम् ॥ ४०५ ॥

---

१ 'सुहृदाप्यायन'. ३ 'विचिन्त्य'.

अन्यदद्भुतमुद्भूतमत्र श्रीरङ्गधामनि ॥
यच्चन्द्राभिख्ययाप्येषा शोभते पुष्करिण्यहो ॥ ४०६ ॥

समन्तादवलोक्य सश्लाघम्—

रङ्गक्षेत्रमिदं रमेशितुरभिव्यक्तिस्थलेष्वादिमम्
तीर्थं सैव मरुद्वृधा भगवती यां तोष्टवीति श्रुतिः ॥
सर्वात्मा नगरस्य चास्य जगतां निर्वाहको नायको
वासश्चेदिह लभ्यते जगति को वैकुण्ठमुत्कण्ठते ? ॥४०७॥

कृ०—सार्धाङ्गीकारम्—

सोऽयं यद्यपि हृद्य एव विषयः सायन्तनेन्दीवर-
श्यामाङ्गेन सनायकः कृततमोभङ्गेन रङ्गेन्दुना ॥
भ्रान्ताः किंतु चरन्ति हन्त पिशुनाः शान्तात्मनां तापदाः
श्रीमन्तो यदुदञ्चनाद्बत न खल्वत्रासमत्रासते ॥ ४०८ ॥

---

किंच **अन्यदिति**। अत्र श्रीरङ्गस्य भगवतः धामनि स्थाने क्षेत्रे अन्यत् उक्तादितरत् अद्भुतमाश्चर्यं उद्भूतमुत्पन्नम्। किं तत् यत् एषा पुष्करिणी कमलिनी चन्द्रस्य अभिख्यया नाम्ना, कान्त्या चन्द्रिकया चापि शोभते। तत् अद्भुतमिति संबन्धः ॥४०६॥

**रङ्गक्षेत्रमिति**। इदं रङ्गक्षेत्रं रमेशितुर्लक्ष्मीपतेर्विष्णोः अभिव्यक्तिस्थलेषु प्रकटीभावस्थानेषु मध्ये आदिमं प्रथमं, वर्तत इति शेषः। किंच यां नदीं श्रुतिः वेदः "इमं मे गङ्गे यमुने-" इत्यादिरूपा इत्यर्थः। तोष्टवीति पुनःपुनर्भृशं वा स्तौति, 'ष्टुञ् स्तुतौ' इत्यस्माद्धातोर्यङ्लुकि लटि रूपम्। सैव भगवती मरुद्वृधा कावेरी नदी अत्र तीर्थं विरजाभिधं प्रसिद्धम्। अस्य च नगरस्य नायकोऽधिपतिस्तु जगतां सर्वेषां लोकानां निर्वाहको रक्षिता, सर्वेषां प्राणिनां आत्मा अन्तर्यामी, भगवान् विष्णुरित्यर्थः। अस्ति। तस्मात् इह क्षेत्रे वासः सततं वसतिः लभ्यते प्राप्यते चेत् जगति कः पुरुषः वैकुण्ठं लोकं, गन्तुमिति शेषः। उत्कण्ठते ? अपि तु न कोऽपीत्यर्थः ॥ ४०७ ॥

**सोऽयमिति**। सायं भवानि सायंतनानि यानि इन्दीवराणि नीलकमलानि तेषामिव श्यामं अङ्गं मध्यभागश्च यस्य तेन, कृतः तमसोऽज्ञानस्य अन्धकारस्य च भङ्गो येन तेन, रङ्गे क्षेत्रे इन्दुरिव चन्द्र इव तेन रङ्गनाथेन, पक्षे रङ्गयुक्तेन रागयुक्तेन इन्दुना चन्द्रेण च सनायकः सनाथः नायकेन शृङ्गारिणा च सहितः सः प्रसिद्धः अयं विषयो देशः यद्यपि हृद्य एव मनोहर एव वर्तते, किंतु तथापि भ्रान्ताः परधनलुब्धत्वेन अनवस्थितचित्ताः अत एव शान्तः आत्मा चित्तं येषां तेषां तापदाः संतापजनकाः पिशुनाः खलाः "पिशुनौ खल-सूचकौ" इत्यमरः। एतादृशश्चोरा इत्यर्थः। चरन्ति परिभ्रमन्ति। हन्तेति खेदे। येषां दुष्टानामुदञ्चनात् सर्वतः संचाराद्धेतोः

किं बहुना—

नित्यं काञ्चनसिन्धुमध्यरुचिरो निष्कम्पसंपन्निधि-
र्निस्तुल्यामपि काञ्चनश्रियमुरोमध्ये दधानः स्वयम् ॥
बिभ्यत्किं पिशुनेभ्य एष बहुलप्राकारसंवेष्टिते
शेते धाम्नि रङ्गनायक इति स्वाख्यामिह ख्यापयन् ॥४०९॥

**वि०**—सखे न जातु श्रीमतां हानिः, प्रत्युत तद्द्वेष्टॄणां पिशुनानामेव भवन्त्यनर्थाः ॥ १७२ ॥

परवित्तजिहीर्षया प्रवृत्तः पिशुनस्तु स्वयमेव नाशमेति ॥
सुलभः शलभस्य किं न दाहः पृथुदीपग्रसनाय जृम्भितस्य ॥ ४१० ॥

अलमन्यप्रसङ्गेन, तमेवं च रङ्गेशं श्रीरङ्गधामानमनुसंदधामि ॥१७३॥

---

अत्र क्षेत्रे श्रीमन्तः संपत्तिमन्तो जनाः अत्रासं भयरहितं यथा तथा न खलु आसते तिष्ठन्ति, न वसन्तीत्यर्थः । बतेति खेदे ॥ ४०८ ॥

किंच **नित्यमिति** । नित्यं संततं काञ्चनसिन्धोः सुवर्णसमुदायस्य कावेर्या नद्याश्च मध्ये रुचिरः सुन्दरः, तत्र वसान इत्यर्थः । अत एव निष्कम्पायाश्चलनरहितायाः शाश्वताया इत्यर्थः । संपदः संपत्तेः निधिः, तत एव च निस्तुल्यां निरुपमां काञ्चनस्य सुवर्णस्य सुवर्णालंकारस्येत्यर्थः । श्रियं, पक्षे कांचन अनिर्वाच्यगुणयुक्तामित्यर्थः । श्रियं लक्ष्मीं च उरसो वक्षस्थलस्य मध्ये मध्यभागे दधानः धारयन् सन्नपि स्वयं एष भगवान् पिशुनेभ्यः खलेभ्यः बिभ्यत् किं भयं प्राप्नुवन्निवेत्युत्प्रेक्षा । बहुलाः अनेके ये प्राकाराः शिलादिनिर्मिताः प्रासादभित्तयः तैः संवेष्टिते परितो वृते धामनि स्थाने रङ्गस्य एतत्क्षेत्रस्य वङ्गस्य च नायकः पतिः इति स्वस्य आख्यां नाम, चोरभयात् स्वर्णनायक इति नाम निह्नुवन्नित्यर्थः । इह प्रदेशे ख्यापयन् प्रकथयन् प्रसिद्धीकुर्वन्निति यावत् । शेते निलीय तिष्ठति निद्रातीति च ॥ ४०९ ॥

**सख इति** । जातु कदाचिदपि श्रीमतां संपत्तिमतां लक्ष्मीवतां च पिशुनेभ्य इति शेषः । न हानिः, प्रत्युत किं तु तान् लक्ष्मीवतः द्विषन्ति ते तद्द्वेष्टारस्तेषां पिशुनानामेव अनर्थाः शिक्षादिरूपाः भवन्ति ॥ १७२ ॥

एतदेव सविस्तरमाह—**परवित्तेति** । यस्तु पिशुनः परेषामन्येषां वित्तस्य द्रव्यस्य जिहीर्षया हर्तुमिच्छया प्रवृत्तः उद्यतः, सः स्वयमेव नाशं एति प्राप्नोति । एतदेव सदृष्टान्तमाह—पृथोर्महतः दीपस्य ग्रसनाय भक्षणाय जृम्भितस्य उद्यतस्य शलभस्य कीटविशेषस्य दाहो दहनं भस्मीभाव इत्यर्थः । सुलभः न किम् ? किंतु स

त किमपीति भावः ॥ ४१० ॥

नास्त्विति सूचयन्नाह—**अलमिति** । अन्यस्य

---

२ 'परमेशं'.

सविस्मयम्—

सपर्यां विरुद्धादपि प्राप्तुमीष्टे
समर्थो जगत्यां यतो रामचन्द्रात् ॥
अरं-गाधिराजोदितप्रौढभक्ते-
रपि प्राप पूजां स रङ्गाधिराजः ॥ ४११ ॥

अथवा नात्र विरोध इति समर्थयते ॥ १७४ ॥

कुवस्तुहानात् सद्वस्तुसंग्रही राघवः क्षमम् ॥
हन्ता कुरङ्गराजस्य रङ्गराजमपूजयत् ॥ ४१२ ॥

पुनः सभक्तिप्रकर्षं भगवन्तमुद्दिश्य—

श्रुतसुरनुतिघोषे शत्रुषु स्फीतरोषे
निहतविनतदोषे नित्यदास्याभिलाषे ॥
ललितवपुषि शेषे लब्धसंपूर्णतोषे
परमपुरुष ! शेषे पर्वचन्द्राविशेषे ॥ ४१३ ॥

---

भगवत्कथेतरस्य प्रसङ्गेन अवसरेण अलं पर्याप्तं, स न कार्य इत्यर्थः । किंतु तं प्रसिद्धमेव च श्रीरङ्गे क्षेत्रे धाम स्थानं यस्य तं रङ्गेशं भगवन्तं अनुसंदधामि वर्णयामि ॥१७३॥

**सपर्यामिति ।** जगत्यां पृथिव्यां समर्थः संपत्तिमान्, कर्तुमकर्तुमित्यादिसामर्थ्ययुक्तश्च विरुद्धात् शत्रोरपि विपरीताचारादपीति च, सपर्यां पूजां, "पूजा नमस्यापचितिः सपर्या" इत्यमरः । प्राप्तुं लब्धुं ईष्टे समर्थो भवति । यतो यस्मात् स प्रसिद्धः रङ्गाधिराजः भगवान् अरङ्गाधिराजे रङ्गनाथभगवदितरस्मिन्, पक्षे 'अरं' इति छेदः । अरमतिशयितं गाधिराजे विश्वामित्रे च उदिता उत्पन्ना प्रौढा प्रगल्भा भक्तिर्यस्य तस्मात् रामचन्द्रादपि पूजां प्राप स्वीकृतवान् । तस्मात् इति संबन्धः । श्रीरङ्गनाथो रघुकुलदैवतमिति हि पुराणप्रसिद्धिः ॥ ४११ ॥

किंच **कुवस्त्विति ।** राघवः कुवस्तूनां कुत्सितवस्तूनां हानात् त्यागात् सतां उत्तमानां प्रशस्तानां वा "सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्" इत्यमरः । वस्तूनां संग्रही स्वीकारकर्ता एतत् क्षमं युक्तम् । यतः कुत्सितस्य निन्द्यस्य रङ्गराजस्य, कुरङ्गराजस्य मायामृगस्य च मारीचस्येत्यर्थः । हन्ता मारयिता राघवः इमं रङ्गराजं रङ्गनाथं अपूजयत् पूजितवान् ॥ ४१२ ॥

**श्रुतेति ।** श्रुतः आकर्णितः सुराणां देवानां नुतिघोषः स्तुतिघोषो येन तस्मिन्, शत्रुषु वैरिषु स्फीतः प्रवृद्धः रोषः क्रोधो यस्य तस्मिन्, निहताः विनाशिताः विनतानां नम्राणां दोषाः पापानि येन तस्मिन्, नित्यं दास्ये भगवद्दासकर्मणि अभिलाष

---

१ 'अलं गाधि'. २ 'हन्ता'. ३ 'श्रित'.

भगवन् रङ्गनायक ! [1]भवदीये सदसि भाषितुमपि वयं बिभीमः॥१७५॥

तथाहि—

कर्तृ व्याकरणस्य वाममितरद्यस्य प्रवक्त्रीक्षणम्
भाष्यं व्याकरणस्य साधु विदधे शय्या यदीया पुनः ॥
यद्वाहो द्विजशेखरः श्रुतिमयो यस्य स्नुषा भारती
गोष्ठ्यां त्रस्यति तस्य ते कविजनो रङ्गेश ! कर्तुं [3]स्तुतिम्॥४१४॥

पुनरञ्जलिं बद्ध्वा सम्प्रार्थनम्—

वरगुणगणसीमा वारिदश्यामधामा
सततममररामासंघसंगीतनामा ॥
परिहृतभवदामा भासिताकल्पहेमा
मम कलयतु भूमा मङ्गलं रङ्गधामा ॥ ४१५ ॥

---

इच्छा यस्य तस्मिन्, लब्धः प्राप्तः संपूर्णस्तोषः संतोषो येन भगवद्दृढभक्त्येत्यर्थः । तस्मिन्, ललितं मृदु सुन्दरं वा वपुः शरीरं यस्य तस्मिन्, पर्वणि पौर्णमास्यां यश्चन्द्रः तस्मादविशेषे विशेषरहिते तत्सदृशे इत्यर्थः । एतादृशे शेषे अनन्ते, हे परमपुरुष भगवन् रङ्गनाथ ! शेषे शयनं करोषि ॥ ४१३ ॥

**भगवन्निति** । हे भगवन् रङ्गनायक ! भवदीये त्वत्संबन्धिनि सदसि सभायां भाषितुं वक्तुमपि वयं बिभीमः भयं प्राप्नुमः ॥ १७५ ॥

भयकारणमेवोपपादयति–**कर्त्रीति** । यस्य भगवतः वामं सव्यं ईक्षणं नेत्रं चन्द्ररूपमित्यर्थः । व्याकरणस्य चान्द्रव्याकरणस्य कर्तृ उत्पादकं, तथा इतरत् वामात् भिन्नं दक्षिणनेत्रं सूर्यरूपं सौरव्याकरणशास्त्रस्य प्रवक्तृ प्रणेतृ, पुनश्च यस्य रङ्गनाथभगवतः इयं यदीया भगवत्संबन्धिनीत्यर्थः । शय्या शेषरूपा व्याकरणस्य पाणिनीयव्याकरणशास्त्रस्य भाष्यं महाभाष्यरूपं व्याख्यानं साधु यथा तथा विदधे चकार, तथा यस्य भगवतो वाहो वाहनं श्रुतिमयो वेदरूपः द्विजानां ब्राह्मणानां पक्षिणां च श्रेष्ठः गरुडः, यस्य भगवतः स्नुषा पुत्रपत्नी भारती सरस्वती, तस्मात् हे रङ्गेश रङ्गनाथ भगवन् ! तस्य एतादृशगुणविशिष्टस्य ते तव गोष्ठ्यां सभायां कविजनः काव्यकर्तृसमुदायः स्तुतिं स्तवं कर्तुं त्रस्यति बिभेति ॥ ४१४ ॥

पूर्वोक्तगुणविशिष्टा देवता मम कल्याणं विदधातु इति मनसि निधाय प्रार्थयते –**वरगुणेति** । वराणां श्रेष्ठानां गुणगणानां गुणसमुदायानां सीमा मर्यादा, वारिदस्य मेघस्येव श्यामं नीलवर्णं धामं देहो यस्य सः, "गृह-देह-त्विट्-प्रभावा धामानि" इत्यमरः । सततं निरन्तरं अमररामाणां देवस्त्रीणां सङ्घेन समुदायेन संगीतं उत्तम-

---

१ 'रङ्गचन्द्र ! भवदीयसंमुखे'. २ 'वक्तृ'. ३ 'नुतिं'.

अन्यतो वीक्ष्य सश्लाघम्[1]—

स्वामिनीं स्तौमि[2] नीलाब्जमदमोचनलोचनाम् ॥
अङ्गनां रङ्गनाथस्य[3] दीप्तिं मूर्तिमतीमिव ॥ ४१६ ॥

देवीमुद्दिश्य—

मोहोन्मूलनमूलिका भवजुषां मोक्षाध्वनिःश्रेणिका
चेतःशुद्धिविधानसिद्धगुलिका[4] चिन्तातमश्चन्द्रिका ॥
विद्याविभ्रमसारिका[5]सि कमले ! विष्णोरुरोमालिका
मातस्त्वं मम पारिजातलतिका मोदाम्बुधेर्वीचिका ॥४१७॥

कृ०—कान्त्येव हन्त वृत्त्याऽपि कमलामपि[6] चञ्चलाम् ॥
अशिष्टेष्वेव रज्यन्तीमभिष्टौति कथं बुधः ॥ ४१८ ॥

---

प्रकारेण गानेन वर्णितं नाम यस्य सः, परिहृतं निवारितं भवस्य संसारसंबन्धि दाम बन्धनपाशो येन सः, समस्तसंसारबन्धनोच्छेदक इत्यर्थः । भासितं प्रकाशितं आकल्पानां भूषणानां हेम सुवर्णं यस्य सः, रङ्गे रङ्गक्षेत्रे धाम स्थानं यस्य सः भूमा महात्मा भगवान् रङ्गनाथः, मम मत्संबन्धि मङ्गलं कल्याणं कलयतु करोतु ॥ ४१५ ॥

एवं भगवन्तं रङ्गनाथं स्तुत्वा तत्पत्नीं भगवतीं महालक्ष्मीं स्तौति—**स्वामिनीमिति** । नीलाब्जस्य नीलकमलस्य मदमोचने सौन्दर्यगर्वनिवारणे लोचने नेत्रे यस्याः सा तां, मूर्तिमतीं प्रत्यक्षशरीरधारिणीं दीप्तिं कान्तिमिव स्थितां स्वामिनीं सर्वजनानामीश्वरीं, रङ्गनाथस्य भगवतः अङ्गनां पत्नीं लक्ष्मीं स्तौमि वक्ष्यमाणप्रकारेण स्तुतिं करोमि ॥ ४१६ ॥

**मोहोन्मूलनेति** । भो मातः सकललोकजननि ! कमले महालक्ष्मि ! त्वं भवजुषां संसारिणां मोहस्याज्ञानस्य उन्मूलने निर्मूलने मूलिका मूली, अत एव मोक्षाध्वनः मोक्षमार्गस्य निःश्रेणिका अधिरोहिणी, चेतसः अन्तःकरणस्य शुद्धिविधाने पवित्रीकरणे सिद्धगुलिका सिद्धगुटिका, चिन्तारूपस्य तमसः अन्धकारस्य चन्द्रिका चन्द्रकान्तिः, विद्याविभ्रमस्य विद्याक्रीडायाः सारिका, विष्णोर्भगवतः उरोमालिका वक्षःस्थलमाला, मम पारिजातलतिका कल्पवल्ली, अत एव मोदाम्बुधेरानन्दसमुद्रस्य वीचिका लहरी च असि । एतदेव क्रियापदं पूर्वविशेषणेष्वपि योज्यम् ॥ ४१७ ॥

एवं लक्ष्मीवर्णनमाकर्ण्य चपलत्वरूपं दोषं तस्यामुद्भाव्य **कृशानुः प्राह–कान्त्येवेति** । हन्तेति खेदे । कान्त्या प्रभयेव वृत्त्या स्थित्या स्वभावेन चापि चञ्चलां चपलां विद्युतं चापि, किंच अशिष्टेष्वेव असभ्येष्वेव रज्यन्तीं रममाणां कमलां लक्ष्मीमपि बुधः पण्डितः कथमभिष्टौति प्रशंसति ? अपि तु नैव स्तौतीत्यर्थः । "उपसर्गात् सुनोति—" इत्यादिना षत्वम् ॥ ४१८ ॥

---

१ 'सप्रश्रयम्'. २ 'नौमि'. ३ 'रङ्गधाम्नोऽस्य'. ४ 'गुटिका'. ५ 'शालिका'. ६ 'कमलामति'.

तथाहि—

प्राक्पर्यङ्कमधिष्ठितोपि मृदुलं पालाशशय्यामपि
प्रायः प्रार्थयते कदन्नमिव यः क्षीरौदनं भुक्तवान् ॥
प्राश्नात्येष कदुष्णिकाममृतवत् प्रागाप्तपीताम्बरः
कन्थां याचति भृत्यति क्षितिपतिर्लक्ष्मीकटाक्षात्यये ॥ ४१९ ॥

अन्यच्चावधेयम्—

दातुर्द्वारि य एष वारणमगात्तद्वार्यहो वारणम्
पश्याम्यद्य चिरादशेत भुवि यो भूस्तस्य शेते भुजे ॥
नाहारानपि लेभिरे यदबला हारानमूस्तत्प्रिया
विन्दन्ते कमलादृगूर्मिभिरहो निम्ने भवत्युन्नतिः ॥ ४२० ॥

---

लक्ष्म्याश्चञ्चलत्वमेव तावत्सविस्तृतमाह—**प्रागिति**। यः क्षितिपतिः पृथ्वीपती राजा, प्राक् लक्ष्म्याः कृपाकटाक्षसमये मृदुलं मृदुतरं पर्यङ्कं अधिष्ठितः आरूढोऽपि सन्, लक्ष्म्याः कटाक्षस्य नेत्रापाङ्गदर्शनस्य अत्यये नाशे सति लक्ष्मीप्रसादाभावे इत्यर्थः। एतदेवाग्रेष्वपि वाक्येषु योज्यम्। पलाशानां पर्णानामियं पालाशी तां पर्णनिर्मितामित्यर्थः। शय्यामपि प्रायः प्रार्थयते वाञ्छति। तथा यः प्राक् क्षीरौदनं दुग्धयुक्तं भोजनं भुक्तवान् बुभोज, सः एषः कदुष्णिकां कुत्सितां यवागूं अमृतवत् प्रकर्षेण अश्नाति भुनक्ति। तथा यः प्राक् आप्तं परिहितं पीतं कौशेयं अम्बरं वस्त्रं येन सः तथाभूतः आसीत्, स एव कन्थां बहुवस्त्रखण्डरचितां याचति, अत एव भृत्यति दासवदाचरति च ॥ ४१९ ॥

किंच **दातुरिति**। यः एषः याचकः दातुः उदारधनिकस्य द्वारि द्वारदेशे वारणं निवारणं अन्तर्गमननिषेधं अगात् प्राप्तवान्, तस्य याचकस्य द्वारि वारणं निवारणं, गजं वा पश्यामि अवलोकयामि। अहो इत्याश्चर्ये। तथा यः चिरात् बहुकालपर्यन्तं भुवि केवलभूमावेव अशेत शयनं करोति स्म, तस्यैव भुजे बाहौ अद्य भूः पृथ्वी शेते। भुजबलात् भुवं लब्धवानित्यर्थः। तथा यस्य दरिद्रस्य अबलाः स्त्रियः आहारान् भोजनान्यपि न लेभिरे न प्राप्तवत्यः, तस्य दरिद्रस्य प्रियाः अमूः स्त्रियः हारान् मुक्ताफलमणिरचितान् विन्दन्ते प्राप्नुवन्ति। तस्मात् कमलाया लक्ष्म्याः दृशः दृष्टय एव ऊर्मयः तरङ्गास्तैर्हेतुभिः निम्ने नीचेऽपि उन्नतिः उच्चता संपत्त्यादिनेति भावः। भवति ॥ ४२० ॥

---

१ 'मणिमयं'. २ 'दृष्टवान्'. ३ 'प्रागात्त'. ४ 'कन्थां याचति च क्षितेरधिपतिर्लक्ष्मी'. ५ 'भृत्यवत्'. ६ 'निम्नो भवत्युन्नतः'.

इदं च पुनर्बोद्धव्यम्– ( श्रियमुद्दिश्य– )

हन्तुर्बन्धुजनान् धनार्थमनघान् गन्तुः परस्त्रीशतम्
रन्तुर्जन्तुविहिंसकैः सह जनैः संतुष्यतो वञ्चनैः ॥
वक्तुस्तीक्ष्णमयुक्तमेव वचनं पक्तुर्मितं चौदनम्
नित्यं नृत्यसि मन्दिरेषु कमले ! कत्यं[1] तवैतन्मतम् ?॥४२१॥

अन्यच्च—

येषामन्यकलत्रदर्शनकलां[2]व्युत्पत्तिशून्ये दृशौ
मूढं हृच्च परार्थ[3]चिन्तनविधौ मिथ्यानभिज्ञं मुखम् ॥
अप्रज्ञातपशून्बुभुक्षितशिशूनभ्रोदकैस्ताम्यत-
स्तेषां लक्ष्मि गृहान् दृशा[4] च भयभीतेवेह नावेक्षसे ॥ ४२२ ॥

---

अपि च **हन्तुरिति** । हे कमले लक्ष्मि ! धनार्थं द्रव्यार्थं अनघान् निरपराधान् बन्धुजनान् हन्तुः, परस्त्रीणां शतं, अनेकपरस्त्रीरित्यर्थः । गन्तुः उपभोगार्थं गच्छतः, जन्तुविहिंसकैः प्राणिवधकर्तृभिः जनैः सह रन्तुः विहारशीलस्य, वञ्चनैः परप्रतारणैः संतुष्यतः, किंच अयुक्तं सभ्यजनानामयोग्यं तीक्ष्णं कठोरं च वचनं भाषणं वक्तुः, मितं स्वोदरपूर्तिमात्रमेव ओदनमन्नं च पक्तुः, "आत्मार्थं पाचयेन्नान्नं" इत्यादिशास्त्रात् आत्मपर्याप्तिमात्रान्नपचनमयुक्तमिति भावः । एतादृशजनस्य मन्दिरेषु गृहेषु नित्यं नृत्यसि । एतत् तव मतं कत्यं कुत उत्पन्नम् ? नान्यतः कुतोऽपि तु त्वत्त एवोत्पन्नमित्यर्थः ॥ ४२१ ॥

अथ ये तावत् सदाचरणतत्परास्तेषां गृहे नैव तिष्ठसीति वदन् लक्ष्मीं दूषयति– **येषामिति** । येषां निर्मलमानसानां जनानां दृशौ लोचने अन्यकलत्राणामन्यस्त्रीणां दर्शनरूपा या कला तस्याः व्युत्पत्तिर्ज्ञानं तेन शून्ये रहिते, कदापि परस्त्रीदर्शनवर्जिते इत्यर्थः । तथा येषां, इदमेव सर्वत्राग्रिमवाक्येषु योज्यम्, हृत् हृदयं च परार्थचिन्तनविधौ अन्यद्रव्यग्रहणविचारकरणे मूढं, सर्वदा सत्कार्यपरतया परद्रव्यापहाराद्यसत्कर्मविचारशून्यमित्यर्थः । क्वचित् 'परार्तिचिन्तनविधौ' इति पाठः । तत्पक्षे परपीडाकरणविचाररहितमित्यर्थः । तथा मुखं मिथ्यानभिज्ञं असत्यभाषणरहितं, सर्वदा सत्यभाषणपरमेवेत्यर्थः । तेषां जनानां अप्रज्ञाताः कदाप्यदृष्टाः पशवो गोमहिष्यादयो येषु तान्, बुभुक्षिताः क्षुधिताः शिशवो बालाः येषु तान्, अभ्रोदकैः वर्षाकालिकमेघजलैः ताम्यतः सम्यक् जलवारणाभावात् दुःखप्रदांश्च गृहान् प्रति हे लक्ष्मि ! इह भयभीतेव दृशा न अवेक्षसे नैव पश्यसि । सदाचारसद्विद्यादिसंपन्नान् जनान् सततं दारिद्र्यावस्थायामेव वर्तयसीत्यर्थः ॥ ४२२ ॥

---

१ 'कृत्यं'. २ 'कथा'. ३ 'परार्ति'. ४ 'दृशा भवसरिन्नावेह'.

**विश्वा०**—सखे ! मानसखेदजननी तवेयं वाणी । यतो दुःशीलेषु दृश्यमानाः साधुजनानुपयुक्ताः संपदाभासाः, प्रत्युत मृत्युतरणकारणभुवनजननीकृपाकटाक्षवैधुर्यनिबन्धना एव । उक्तं हि गुणहानेरुदधिदुहितृवैमुख्यनिबन्धनत्वमुचितज्ञेन केनचिद्विदुषा ॥ १७६ ॥

‘ सद्यो वैगुण्यमायान्ति शीलाद्याः सकला गुणाः ॥
पराङ्मुखी जगद्धात्रि! यस्य त्वं विष्णुवल्लभे ! ॥ ४२३ ॥’ इति ।

---

**सख इति** । हे सखे मित्र ! मानसस्य मनसः खेदजननी तव इयं ‘कान्त्येव हन्त—’इत्यारभ्य ‘—नावेक्षसे ’ इत्यन्ता वाणी । यतो यस्मात् कारणात् दुःशीलेषु दुष्टस्वभावाचारेषु जनेषु दृश्यमानाः संपदः द्रव्यादिसमृद्धेः आभासाः, न तु सत्याः, चिरकालस्थायित्वाभावात् । अत एव साधुजनानां अनुपयुक्ताः, प्रत्युत विचारे कृते तु मृत्योः जन्म-मरणादिपरंपरायुक्तस्य संसारस्य तरणे पारगमने कारणरूपा ये भुवनजनन्या लक्ष्म्याः कृपाकटाक्षाः तेषां वैधुर्यं शून्यत्वं निबन्धनं प्रयोजकं येषां तथाभूता एव । सदाचार-सद्विद्यादिसंपन्नसज्जनानां जन्ममरणादिराहित्य-चिरसुखस्थायित्वादिदर्शनात्, तद्विरुद्धाचाराणां च धनादिसंपन्नत्वेऽपि पुनः पुनर्जन्म-मरण-दुर्गतिप्रापणादिश्रवणाच्च । उक्तार्थे विद्वत्संमतिमाह—**उक्तं हीति** । गुणानां दया-दाक्षिण्यादीनां हानेः उदधिदुहितुः क्षीरसागरकन्यकायाः लक्ष्म्याः वैमुख्यं पराङ्मुखत्वमेव निबन्धनं प्रयोजकं यस्य तस्य भावस्तत्त्वं केनचित् उचितं लक्ष्मीकटाक्षस्य भवसागरमोचनमेव सत्यं फलमिति योग्यं जानातीति तज्ज्ञस्तेन विदुषा पण्डितेन । उक्तं हि कथितमेव । क्वचित् ‘नमुचिद्विषा’ इति पाठः । तत्पक्षे इन्द्रेणेत्यर्थः । इममेव पाठमनुसृत्याग्रिमपद्ये ‘ इयं हि ( ‘सद्यो वैगुण्यमायान्ति’ इत्यादिरूपा ) इन्द्रायैरावतारूढाय राजोपहारकारणीभूता केनचित् स्वस्मै समर्पिता पुष्पमाला सहजमन्युना दुर्वाससा मध्येमार्गमेव दत्ता । शक्रश्च तां गृहीत्वा गजेन्द्रगण्डस्थलोपरि निक्षिप्तवान् । स चैरावतस्तां पुष्करेण गृहीत्वाछिन्नामकरोत् । तद्दृष्ट्वा परमकोपनो मुनिराट् इन्द्राय ‘त्वत्पालितेषु भुवनेषु लक्ष्मीर्न वत्स्यति’ इति शापमदात् । ततश्च सर्वत्र लक्ष्मीप्रादुर्भावाभावे यज्ञादिसंपत्त्यभावे च देवानां हविर्भागाद्यप्राप्त्या चिन्ताविष्टतया ब्रह्मादिकृतस्तवनसंतुष्टाया लक्ष्म्याः सर्वलोकहितावहे प्रादुर्भावे शक्रकृतलक्ष्मीप्रशंसारूपा प्रासङ्गिकी उक्तिः विष्णुपुराणे दृश्यते ।’ इति टिप्पणी मुद्रितपुस्तके दृश्यते ॥ १७६ ॥

तामेवोक्तिं दर्शयति—**सद्य इति** । हे विष्णुवल्लभे विष्णुप्रिये, जगद्धात्रि जगन्मातः! त्वं यस्य पुरुषस्य पराङ्मुखी भवसि, तस्य शीलं सद्वृत्तं आद्यं मुख्यं येषां ते गुणाः सदाचरणपरोपकारादयः सकला अपि सद्यः सपद्येव विगुणानां दोषाणां भावः वैगुण्यं दोषरूपत्वं आयान्ति प्राप्नुवन्ति ॥ ४२३ ॥

ततश्च—

संपत्तिः किंपचानानां संप्राप्ता कापथेन या ॥
नरकानुभवोदर्का न सा लक्ष्म्याः कृपाफलम्[1] ॥ ४२४ ॥

तथाहि—

धन्यंमन्यतया तृणीकृतबुधा धर्मेषु दुर्मेधसः
सेर्ष्यास्तामसपुण्यलेशविलसत्संपल्लवाः पल्लवाः ॥
पश्य[2]ासूनपहाय पञ्चषदिनान्याकल्पमल्पा[3] इमे
भोक्ष्यन्ते बत यातना बहुविधाः कार्तान्तगर्तान्तरे ॥४२५॥

यच्च भणितं भवता तत्रभवतः शिष्टान् लक्ष्मीर्न वीक्षते[4] इति तदज्ञानोपबृंहितमेव[5] । यतः साधुजनेभ्यो मुक्त्यैश्वर्यपर्यन्तनिरन्तरभगव-

---

**संपत्तिरिति** । किंपचानानां कृपणानां "कदर्ये कृपण-क्षुद्र-किंपचान-मितंपचाः ।" इत्यमरः । संपत्तिः या कापथेन कुत्सितमार्गेण प्राप्ता, सा नरकानुभवः उदर्कः उत्तरं फलं यस्याः सा तथाभूता । अत एव सा लक्ष्म्याः कृपाफलं न भवति । नहि खलु लोकमातुः कृपारसार्द्रचित्ताया लक्ष्म्याः प्रसादेन दुर्गत्युदर्काणि फलानि भवन्तीति भावः ॥ ४२४ ॥

नरकानुभवोदर्कत्वमेव प्रपञ्चयति—**धन्यंमन्यतयेति** । आत्मानं धन्यं मन्यन्ते ते धन्यंमन्यास्तेषां भावो धन्यंमन्यता तया हेतुना तृणीकृतास्तृणवत्तुच्छीकृता बुधाः पण्डिता यैस्ते तथाभूताः अत एव दुर्मेधसो दुष्टबुद्धयः, धर्मेषु सेर्ष्याः धर्मनिबन्धनान्यसहमाना इत्यर्थः । पल्लवाः परदारासक्ताः जाराः "पल्लवः किसले बले । विटपे विस्तरेऽलक्तरागे श्रृङ्गार-षिङ्गयोः ।" इति कोशः(?) । अल्पाः क्षुद्राः पञ्चषदिनानि पञ्चषदिनपर्यन्तमित्यर्थः । "बहुव्रीहौ संख्येये-" इत्यादिना डचि टिलोपः । तामसः तमोगुणप्रभवः यः पुण्यस्य लेशः अंशः तेन विलसन् संपदः धनादिसंपत्तेः लवो लेशो येषां ते तथोक्ताः इमे जनाः अन्ते असून् प्राणानपहाय त्यक्त्वा आकल्पं कल्पपर्यन्तं बहुविधाः यातनाः तीव्रनरकवेदनाः कृतान्तस्य यमस्य अयं कार्तान्तः स चासौ गर्तः नरकरूपः तस्य अन्तरे मध्ये भोक्ष्यन्ते; पश्य । बतेति खेदे ॥ ४२५ ॥

एतावता 'दातुर्द्वारि य एष—' इत्यादिना 'हन्तुर्बन्धुजनान्–' इत्यादिना चोक्तं दूषणं परिहृत्य 'येषामन्यकलत्रदर्शन—' इत्यादिनोक्तं दूषणं परिहर्तुमाह—**यच्चेति** । यच्च तत्रभवतः पूज्यान् शिष्टान् जनान् प्रति लक्ष्मीर्न वीक्षते नावलो-

---

१ 'लक्ष्मीकृपा'.   २ 'पञ्च'.   ३ 'पञ्चषदिनैराकल्पकल्पा'.   ४ 'विन्दते'.
५ 'अज्ञानोपज्ञमवज्ञातुमेवार्हम्'.

द्भक्तिसंपदं प्रदत्ते दूरापास्तमारामयविकारा वाराशिदुहितुरुदारकटाक्षसाधुसुधाधारा ॥ १७७ ॥

संभोगारम्भजृम्भन्मदकितवपरीरम्भसम्पीड्यमान-
प्रौढस्त्रीरत्नहारप्रशिथिलगुणवद्भङ्गुराः सम्पदोघाः ॥
साधूनां मा स्म भूवन्सुरपुरनिरसीकारदक्षं हि लोके
भोक्ष्यन्ते मोक्षमन्ते स्थिरनिरवधिकानन्दधारात्मकं ते ॥४२६॥

किंच—

लक्ष्मीकटाक्षपूरः स जयति यदुपचयतारतम्येन ॥
नरसुरपशुप्रजानां पतयः स्युर्हन्त जन्तवः केऽपि ॥ ४२७ ॥

---

कयति इति भणितं 'येषामन्यकलत्र—' इत्यादिना प्रतिपादितं तदज्ञानेन तत्त्वतोऽवबोधाभावेन उपबृंहितमुपवृद्धमेव । यतो हेतोः वाराशिदुहितुः समुद्रकन्याया लक्ष्म्याः दूरं अपास्तस्त्यक्तः मारः काम एव आमयो रोगस्तस्य विकारो यया सा उदारा मोक्षपर्यन्तानन्तसुखप्रदत्वान्महान्तो ये कटाक्षास्तद्रूपा या साध्वी उत्तमा सुधाधारा अमृतसंपातः मुक्त्यैश्वर्यं मोक्षरूपा भूतिः पर्यन्ते अवसाने यस्यास्तादृशीं निरन्तरां अविच्छिन्नां भगवति विष्णौ भक्तिसंपदं प्रदत्ते प्रददाति ॥ १७७ ॥

'दूरापास्तमारामयविकारा' इति यल्लक्ष्मीकटाक्षाणामुदारत्वमुक्तं तदेव सहेतुकमुपपादयति— **संभोगेति ।** संभोगस्य सुरतसुखस्य आरम्भे जम्भन्तः उद्यन्तः मदयुक्ताश्च ये कितवा धूर्तास्तेषां परीरम्भेणाश्लेषेण संपीड्यमानाः प्रौढस्त्रीणां तरुणस्त्रीणां रत्नहाराणां प्रशिथिला अतिशयशिथिला ये गुणाः सूत्राणि तद्वत् भङ्गुरा विनाशिनः, क्षणमात्रनश्वरा इत्यर्थः । संपदां ओघाः समूहाः साधूनां सततपरोपकारतत्पराणां सज्जनानां मा स्म भूवन् मा भवन्तु, एतादृशनश्वरसंपदां नैव तेषामपेक्षेति भावः । हि यस्मात् कारणात् लोके ते साधवः सुरपुरस्य स्वर्गस्य निरसीकारे नीरसीकरणे तुच्छीकरणे इत्यर्थः । दक्षं समर्थं, तस्याप्यनित्यत्वात् । तदुक्तं भगवतैव—"त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते । ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् ॥ ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।" इति । श्रुतिरपि— "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति । किं तर्हि स्थिरसुखं यत्साधुभिरुपभुज्यते इत्याकाङ्क्षायामाह—स्थिरा कालत्रयेऽप्यनश्वरा अत एव निरवधिका निःसीमा च अनुत्तमेत्यर्थः । आनन्दस्य धारेव आत्मा स्वरूपं यस्य तं मोक्षं मुक्तिं अन्ते देहावसाने भोक्ष्यन्ते ॥ ४२६ ॥

**लक्ष्मीति ।** सः पूर्वोक्तरीत्या प्रसिद्धः लक्ष्म्याः भगवत्याः कटाक्षाणां पूरः अति-

---

ापास्ततमोमयविकारा वाराशिदुहितुरुदाराः कटाक्षाः साधुसुधाधाराः'.

'दक्षो'.

**कु०**—कमलाकटाक्षातिशयो विभवोपचयहेतुरिति नोपपद्यते । यतस्तदल्पीयस्त्वमेव सम्पदुत्कर्षसम्पादकम् ॥ १७८ ॥

तथाहि—

गजशिबिकातुरगाः स्युर्नरस्य तन्व्या दृशा हरेस्तन्व्याः ॥
तद्भूम्नि भवति वाहो नीरद उक्षा च हन्त पक्षी च ॥ ४२८ ॥

**वि०**—विहस्य—

ईदृशीमुत्कर्षपिशुनामरविन्दालयाया निन्दामभिनन्दामि ॥१७९॥

किं दर्पदायकधनोपचयप्रमत्तैः कन्दर्पसायकहतैः[1] क्षितिपैरिहेति ॥
सन्तः पुरन्दरनुतं त्वरविन्दनाभेरन्तःपुरं तदवनावनुचिन्तयन्ति ॥४२९॥

---

शयः जयति सर्वोत्कर्षेण वर्तते । कथंभूतः सः । यस्य कटाक्षपूरस्य उपचयो वृद्धिः तस्य तारतम्येन न्यूनाधिकभावेन हेतुना केऽपि पूर्वं हीनदशापन्ना अपि जन्तवः प्राणिनः नराणां मनुष्याणां, सुराणां देवानां, नरसुराणां ब्राह्मणानां वा पशूनां सर्वजीवानां गोमहिष्यादीनां च, प्रजानां च पतयः पालकाः स्वामिनश्च, हन्तेत्यानन्दे । नृपति-इन्द्र-रुद्र-ब्रह्माणो वा स्युः ॥ ४२७ ॥

**कमलेति** । कमलाकटाक्षाणां लक्ष्मीकटाक्षाणामतिशयो विभवस्यैश्वर्यस्य उपचयहेतुर्वृद्धिकारणमिति नोपपद्यते नैव युज्यते । यतः कारणात् तेषां लक्ष्मीकटाक्षाणामल्पीयस्त्वमेव अत्यल्पत्वमेव संपदः संपत्तेः उत्कर्षसंपादकं भवति ॥ १७८ ॥

तदेवोपपादयति— **गजशिबिकेति** । हरेः विष्णोस्तन्व्याः कान्तायाः लक्ष्म्याः तन्व्या अल्पयैव दृशा कटाक्षरूपया नरस्य गजा हस्तिनश्च शिबिका आन्दोलिकाश्च तुरगा अश्वाश्च ते स्युः भवन्ति । तेषां लक्ष्मीकटाक्षाणां भूम्नि अतिशये सति क्रमेण नीरदो मेघः वाहो वाहनं भवति । एतदेव पदद्वयमग्रेऽपि योज्यम् । अनेन चेन्द्रस्वरूपमुक्तम् । उक्षा वृषभश्च, अनेन शिवस्वरूपं, पक्षी गरुडश्च, एतेन विष्णुस्वरूपं चोक्तम् । एतद्यथोत्तरमाधिक्ये ज्ञेयम् । हन्तेत्यानन्दे ॥ ४२८ ॥

**ईदृशीमिति** । ईदृशीं शब्दमात्रविरोधदर्शिनीं वस्तुतस्तत्त्वार्थप्रतिपादिनीं अत एवोत्कर्षस्यातिशयस्य पिशुनां सूचकां अरविन्दालयायाः पद्मालयायाः लक्ष्म्याः निन्दामप्यभिनन्दामि आनन्दयामि ॥ १७९ ॥

यतः सज्जनाः क्षणभङ्गुरत्वं लौकिकराज्याद्यैश्वर्यस्यालोच्य मोक्षमार्गमेवानुसरन्तीत्याह—**किमिति** । दर्पदायकः गर्वसंपादको यो धनस्य द्रव्यस्योपचयो वृद्धिः तेन प्रमत्तैः सदसद्विवेकशून्यैः केवलं कन्दर्पस्य मदनस्य सायकैः बाणैः करणैः हतैः, सततं कामासक्तैरित्यर्थः । क्षितिपै राजभिः इह लोके किं कर्तव्यमस्ति ? इत्यालोच्य सन्तः पुरंदरेणेन्द्रेणापि नुतं स्तुतं अरविन्दं कमलं नाभौ यस्य तस्य विष्णोः तत्

---

[1] 'हृतैः'.

पुनरनुध्याय साञ्जलिबन्धम्[1]—

मातस्ते मधुसूदनप्रणयिनि ! प्रातः सरोजच्छटा-
मुष्टीमुष्टिविचक्षणे शुभगुणे दृष्टी नमस्कुर्महे ॥
अष्टाभिः किल दृष्टिभिश्च तिसृभि[2]र्जुष्टाः सहस्रेण वा
देवा द्वादशभिश्च यद्विषयतामेवार्थयन्ते क्षणम् ॥ ४३० ॥

इत्यन्यतो वीक्ष्य सामोदम्—

उग्ररिपुनिग्रहप[3]विग्रहदिवौकश्चक्रवृतशक्रमदविक्रमनिहन्ता ॥
मोदरसमादरसमेत इह पूर्णः[4] प्रक्षिपतु[5] पक्षिपतिरक्षियुगले मे ॥ ४३१ ॥

कृ०—किं वर्णयसि सुपर्णममुमतिक्रान्तमर्यादम् ? ॥ १८० ॥

---

शाश्वतसुखप्रदत्वेन प्रसिद्धं, तुरवधारणार्थकः । अन्तःपुरं स्त्रीं लक्ष्मीं, अवनौ पृथिव्यां अनुचिन्तयन्ति ध्यायन्ति ॥ ४२९ ॥

**मातरिति** । हे मधुसूदनस्य विष्णोः प्रणयिनि, मातः लक्ष्मि ! ते तव प्रातः प्रातःकाले सरोजानां कमलानां छटा समूहः तया मुष्टीमुष्टि मुष्टिभ्यां मुष्टिभ्यां प्रहृत्य प्रवृत्तं युद्धं तस्मिन् " इच् कर्मव्यतिहारे " इति समासान्त इच्प्रत्ययः । विचक्षणे कुशले, कमलशोभामपि तुच्छीकुर्वन्त्यावित्यर्थः । शुभगुणे कल्याणगुणयुक्ते दृष्टी नमस्कुर्महे । किंवा दृष्टयोरेतावन्माहात्म्यं यत्ते नमस्करोषि इति चेदाह—ययोर्दृष्ट्योः विषयतां गोचरतां, अष्टाभिरष्टसंख्याकाभिः दृष्टिभिः, अनेन चतुर्मुखब्रह्मावबोधः, तिसृभिश्च दृष्टिभिः, अनेन त्र्यम्बकस्य शिवस्य ग्रहणं, सहस्रेण दृष्टिभिः सहस्रसंख्याकलोचनैरित्यर्थः । अनेनेन्द्रः, द्वादशभिर्दृष्टिभिश्च अनेन षडाननश्चोक्तः, जुष्टा युक्ता देवाः क्षणं क्षणमात्रमपि अर्थयन्ते याचन्त एव ॥ ४३० ॥

**उग्रेति** । उग्राणामपि रिपूणां शत्रूणां निग्रहः पराभवो यस्मात् तादृशः यः पविर्वज्रं तस्य ग्रहः स्वीकारो यस्यास्ति तादृशो दिवौकसां देवानां चक्रेण समूहेन वृतो यः शक्र इन्द्रस्तस्य मदस्य गर्वस्य विक्रमस्य पराक्रमस्य च, मदकरो गर्वोत्पादको यो विक्रम इति वा तस्य निहन्ता विनाशयिता । अमृताहरणसमये इत्यर्थः । अत एव पूर्णः सकलगुणैः परिपूर्णः आदरेण प्रेम्णा समेतः युक्तः पक्षिपतिर्गरुडः इह मे अक्षियुगले नेत्रयुग्मे मोदरसमानन्दरसं प्रक्षिपतु योजयतु । इन्दुवदना वृत्तम् " इन्दुवदना भ-ज-स-नै सगुरुयुग्मैः " इति वृत्तरत्नाकरे तल्लक्षणात् ॥ ४३१ ॥

**किमिति** । अतिक्रान्ता उल्लङ्घिता मर्यादा स्थितिर्येन तममुं सुपर्णं गरुडं किं कुतः कारणात् वर्णयसि ? ॥ १८० ॥

---

१ 'देवीमुद्दिश्य'. इ० अ० २ 'चतसृभि'. ३ 'दविग्रह'. ४ 'पूर्ण'. ५ 'प्रक्षिपति'.

तथाहि—

अधिगतनिगमाङ्गोऽपि द्विजराजोऽप्यच्युतं दधानोऽपि ॥
निजगार ? कथंकारं निःशङ्कं भिल्लपल्लिकां गरुडः ॥ ४३२ ॥

**वि०**— पक्षिराजस्य भिल्लपल्लीनि[1]गरणेन साधुजनानुग्रहासाधुजननिग्रहसामर्थ्यं सदसद्विवेचनचातुर्यं च व्य[2]ञ्जितमेतत्कथं भूषणमेव दू[3]षयसि ? ॥ १८१ ॥

शृणु—

गरुडो गि[4]लन् कमपि किल्बिषाविलं खलभिल्लजा[5]लमुषितं तदन्तरे ॥
निरजीगलन्निजगलादिलासुरं भवतः प्रपन्नमिव पन्नगेशयः ॥ ४३३ ॥

हन्त शकुन्तपुरन्दरस्यास्य स्वच्छन्दविहारावसरेष्वप्यभङ्गुरमेव स्वामिकैङ्कर्यम् ॥ १८२ ॥

---

अतिक्रान्तमर्यादत्वमेवाह— **अधिगतेति** । अधिगतानि ज्ञातानि निगमा वेदाश्च अङ्गानि शिक्षा-व्याकरणादीनि च येन, अधिगतानि प्राप्तानि निगममयान्यङ्गानि हस्तपादाद्यवयवा येनेति वा, तथाभूतोऽपि द्विजानां ब्राह्मणानां पक्षिणां च राजा श्रेष्ठः अधिपतिश्चापि, अच्युतं विष्णुं दधानोऽपि धारयन् सन्नपि गरुडः भिल्लपल्लिकां भिल्लगोधिकां, हिरण्यपुराभिधं शबरग्रामं चेति भावदर्पणकारः । निःशङ्कं भयरहितं यथा तथा कथंकारं कथं निजगार भक्षितवान् । एतदेवातिक्रान्तमर्यादत्वमित्यर्थः ॥ ४३२ ॥

**पक्षिराजस्येति** । भिल्लपल्ल्याः निगरणेन भक्षणेन साधुजनेषु अनुग्रहः कृपा च असाधुजनेषु दुष्टजनेषु च निग्रहः शिक्षा च तयोः सामर्थ्यं, तत एव च सदसतोः सत्यासत्ययोः विवेचने चातुर्यं नैपुण्यं च पक्षिराजस्य गरुडस्य व्यञ्जितं प्रकटीभूतं, एतच्च भूषणमेव तत् त्वं कथं दूषयसि ? ॥ १८१ ॥

**गरुड इति** । गरुडः कमपि किल्बिषैः पापैः आविलं मलिनं दूषितमित्यर्थः । खलभिल्लानां दुष्टशबराणां जालं समूहं गिलन् भक्षयन् सन्, तस्य भिल्लसमूहस्य अन्तरे मध्ये उषितं स्थितं निजगलात् स्वकण्ठात् इलासुरं भूसुरं ब्राह्मणमित्यर्थः । भवतः संसारात् प्रपन्नं शरणागतं भक्तं पन्नगे शेषे शेतेऽसौ पन्नगेशयः विष्णुरिव निरजीगलत् बहिर्निःसारितवान् । अनेन तस्य दुष्टेष्वेव निग्रहो द्योतितः ॥ ४३३ ॥

**हन्तेति** । शकुन्तानां पक्षिणां पुरंदरस्य इन्द्रस्य पक्षिश्रेष्ठस्येत्यर्थः । "शकुन्त-पक्षि-शकुनि-" इत्यमरः । अस्य गरुडस्य स्वच्छन्दाः स्वतन्त्रा ये विहाराः क्रीडाः तेषां अवसरेषु समयेष्वपि स्वामिनो भगवतो विष्णोः कैङ्कर्यं दास्यं अभङ्गुरमेव विच्छेदरहितमेव । वर्तत इति शेषः ॥ १८२ ॥

---

१ 'निगरणे'. २ 'विजृम्भितं'. ३ 'दूषयति भवान्'. ४ 'गिरन्'. ५ 'भिल्लजात'.

यतः—

स्वज्येष्ठप्रेर्यहर्याश्रितरथघृणिमन्मण्डलस्थाच्युताप्यम्
सन्मार्गं पक्षवातोद्धतधरणिरजश्छन्नमेतज्जवेन ॥
कल्लोलैरुल्लसद्भिः[1] प्रचलजलनिधेः क्षालयन्घूर्णदर्णः-
प्रेङ्खड्डिण्डीरखण्डच्छलकुसुमकुलैर्मण्डयत्यण्डजेन्द्रः ॥४३४॥

पुनरभिध्यायन्—

यद्वीक्षा धैर्यरक्षां किल पुलकभृतां धावतां[2] दैवतानाम्
सेवासंमर्दकाले गिरिशफणिगणाद्बिभ्यतामभ्यतानीत् ॥
सोऽयं गाङ्गेयपृथ्वीधरवरशिखरच्छायदायादकाय[3]-
श्छिन्दन्वृन्दं रिपूणां कलयतु कुशलं छान्दसो नः शकुन्तः॥४३५॥

---

**स्वज्येष्ठेति**। अण्डजेन्द्रः पक्षीन्द्रः गरुडः पक्षयोः पत्रयोर्वातेन उद्धतं ऊर्ध्वं गतं यद्धरण्याः पृथ्व्याः रजस्तेन छन्नं आच्छादितं स्वस्य ज्येष्ठेन ज्येष्ठभ्रात्रा अरुणेन प्रेर्याः प्रेरणीयाः ये हरयोऽश्वाः "यमाऽनिलेन्द्र-चन्द्रार्कविष्णु-सिंहांशु-वाजिषु। शुकाहि-कपि-भेकेषु हरिर्ना कपिले त्रिषु।" इत्यमरः। तैराश्रितो रथो यस्य स चासौ घृणिमान् किरणवान् सूर्यश्च तस्य मण्डले तिष्ठतीति तत्स्थः यः अच्युतो विष्णुः तेन आप्यं प्राप्यं अत एव सन्मार्गमुत्तमाध्वानमाकाशं च एतस्य पक्षवातस्य जवेन वेगेन प्रचलः प्रकर्षेण चञ्चलः यः जलनिधिः समुद्रः तस्य उल्लसद्भिः उद्धूयमानैः कल्लोलैः महातरङ्गैः क्षालयन् सन्, घूर्णतः क्षुभ्यतः अर्णसः समुद्रोदकात् प्रेङ्खन्ति निर्गच्छन्ति यानि डिण्डीरस्य फेनस्य खण्डानि शकलानि तेषां छलं व्याजो येषां तथाभूतानि यानि कुसुमकुलानि पुष्पवृन्दानि तैः मण्डयति भूषयति च ॥४३४॥

**यद्वीक्षेति**। सेवायां भगवत्पूजायां यः संमर्दः युगपदेकत्र बहुजनानां समागमः तत्काले गिरिशस्य शंकरस्य फणिगणात् सर्पसमुदायात् बिभ्यतां अत एव पुलकभृतां भयाद्रोमाञ्चयुक्तानां अत एव च धावतां पलायमानानां दैवतानां देवानां यस्य गरुडस्य वीक्षा दर्शनं धैर्येण रक्षां रक्षणं अभ्यतानीत् विस्तारयामास चकारेति यावत्। किल निश्चयेन। गाङ्गेयपृथ्वीधरस्य सुवर्णपर्वतस्य मेरोः वरशिखराणां उत्तमशृङ्गाणां छाया इति वरशिखरच्छायं "छाया बाहुल्ये" इति नपुंसकत्वम्। तस्य दायादः भागहरः कायः शरीरं यस्य सः, मेरुशिखरवत् स्वर्णकान्तिरित्यर्थः। सः अयं छान्दसः वेदप्रतिपाद्यः शकुन्तः पक्षी गरुडः नोऽस्माकं रिपूणां शत्रूणां वृन्दं समूहं छिन्दन् विनाशयन् सन् कुशलं कल्याणं कलयतु करोतु ॥४३५॥

---

१ 'रुल्लल‌द्भिः'. २ 'याचताम्'. ३ 'च्छायसच्छायकायो भिन्दन्'.

पुनः सविस्मयम्—

नगरूपमुपैति युक्तमङ्गीकृतशाखोऽपि सुपर्ण उन्नतोऽपि ॥

विनतैकविधेय[1] एष चित्रं स्थिरमामोदमगान्मधोर्विपक्षात् ॥४३६॥

अथ सर्वतः पुरीं निरीक्ष्य साञ्जलिबन्धम्—

श्रीवल्लभदासेभ्यः श्रीरङ्गक्षेत्रनित्यवासेभ्यः[2] ॥

त्रुटितभवत्रासेभ्यो नमोऽस्तु कृतशिष्यधीविकासेभ्यः ॥ ४३७॥

कृ०—सखे! सर्वानेतत्पुरवास्तव्यान्मा स्म भवान्नमस्कार्षीत् ॥१८३॥

निबिरीसगुणस्तोमैर्हरिदासैरलंकृते ॥

अट्टशूलाः कतिपये पट्टनेऽस्मिन्प्रतिष्ठिताः ॥ ४३८ ॥

---

**नगेति** । अङ्गीकृताः स्वीकृताः शाखाः शिफाः ऋग्वेदादिशाखाश्च येन सः तथाभूतोऽपि अत एव उन्नतः उच्चोऽपि सुष्ठु पर्णानि पलाशानि पक्षाश्च यस्य सः गरुडः नगस्य वृक्षस्य मेरुपर्वतस्य च रूपं साम्यं उपैति प्राप्नोतीति तु युक्तं योग्यमेव । परंतु एषः विनतानां नम्राणां विनताभिधायाः स्वमातुश्च एकः अद्वितीयः विधेयः वचनग्राही आज्ञाधारक इत्यर्थः । "विधेयो वचनग्राही" इत्यमरः । मधोर्वसन्तस्य मधुनामकदैत्यस्य च विपक्षात् शत्रोः विष्णोश्च स्थिरमनश्वरं आमोदं सुगन्धं आनन्दं च अगात् प्राप्तवानिति यत्, एतदेव चित्रमाश्चर्यम् । श्लेषमूलको विरोधाभासोऽलंकारः ॥ ४३६ ॥

**श्रीति** । श्रीवल्लभस्य भगवतो विष्णोः दासेभ्यो भक्तेभ्यः श्रीरङ्गक्षेत्रे नित्यं वस्तुं शीलं येषां तथाभूतेभ्यः अत एव त्रुटितः भवस्य संसारस्य त्रासो येषां तेभ्यः कृतः शिष्याणां धियो बुद्धेः विकासः विविधशास्त्राध्यापनेन प्रकाशो यैस्तेभ्यश्च नमः अस्तु ॥ ४३७ ॥

**सख इति** । सर्वान् एतत्पुरस्थान् रङ्गक्षेत्रनिवासिनो जनान् भवान् मा स्म नमस्कार्षीत् मा नमस्करोतु ॥ १८३ ॥

**निबिरीसेति** । निबिरीसाः अतिसान्द्राः, अत्र सान्द्रार्थे "नेर्बिडज्बिरीसचौ" इति सूत्रेण तद्धितो बिरीसच् प्रत्ययः । ये गुणाः सौशील्यादयः तेषां स्तोमः समूहो येषां तैः अतिगुणवद्भिरित्यर्थः । हरिदासैर्भगवद्भक्तैः अलंकृते विराजितेऽप्यस्मिन् पट्टने श्रीरङ्गक्षेत्रे कतिपये जनाः अट्टशूलाः अन्नविक्रयिणः "अट्टमन्नं शिवो वेदः शूलो विक्रय उच्यते ।" इति कोशः । प्रतिष्ठिताः स्थिताः, सन्तीति शेषः ॥४३८॥

---

१ 'मधात्'. २ 'नियतवासिभ्यः'.

निरूप्य सविस्मयम्—

शक्राद्यर्थं हविरघहरं शौरिणाऽऽस्वादितं यत्
दत्तं वित्तग्रहणचपलाः केऽपि विक्रीणते तत् ॥
धाम श्रीमद्यदि मधुजिता दीयते[1] स्वीयमेते
नो त्रस्यन्ते[2] धनकणतृषा तच्च विक्रेतुमज्ञाः[3] ॥ ४३९ ॥

वि०—मन्दमते मैवं भाणीः ॥ १८४ ॥

किं किं न जीर्यति मुकुन्दपदारविन्द-
द्वन्द्वाभिवन्दनकृतामिह देहभाजाम् ॥
अत्यद्भुतौषधविशेषनिषेवकाणा-
मापादयेत? किमनर्थमपथ्यसेवा ॥ ४४० ॥

---

'अष्टशूला' इत्युक्तमेव सविस्तरमुपपादयति— **शक्राद्यर्थमिति** । यत् हविः शौरिणा विष्णुना आस्वादितं भक्षितं, तस्मै समर्पितमिति यावत् । अत एव तदघहरं पापनिवारकं हविः शक्र इन्द्रः आदिर्मुख्यो येषां अग्निवरुणादीनां तदर्थं दत्तं समर्पितं च तत् हविः केऽपि नीचाः वित्तग्रहणचपलाः द्रव्यसंपादनलोलुपाः सन्तः विक्रीणते । नैतावदेव किंतु मधुजिता विष्णुना यद्यपि श्रीमत् संपत्तियुक्तं लक्ष्मीयुक्तं वा स्वीयं धाम वैकुण्ठस्थानं दीयते समर्प्यते, तथापि एते अज्ञा मूर्खाः धनकणे अल्पीयस्यपि द्रव्ये इत्यर्थः । तृषा वाञ्छा तया तच्च विष्णुपदमपि, विक्रेतुं नो त्रस्यन्ते नैव बिभ्यति । तस्मान्नैतेभ्यो द्रव्यार्जनैकपरेभ्यः अन्ये नीचा इति भावः ॥ ४३९ ॥

**किं किमिति** । इह रङ्गक्षेत्रे मुकुन्दस्य भगवतो विष्णोः पादारविन्दयोश्चरणकमलयोर्द्वन्द्वस्य अभिवन्दनं अभिवादनं कुर्वन्तीति तथाभूतास्तेषां देहभाजां प्राणिनां किं किं पापाचरणं न जीर्यति न नश्यति? अपि तु सर्वमेव जीर्यत्येवेत्यर्थः । एतदेवार्थान्तरन्यासेनाह— **अत्यद्भुतेति** । अत्यद्भुतः सत्वररोगनिवारकत्वादत्याश्चर्यावहः य औषधविशेषः तस्य निषेवकाणां पानं कुर्वतां रोगिणां अपथ्यसेवा अपथ्यभक्षणं अनर्थं रोगवृद्धिकरणरूपं आपादयेत संपादयेत किम्? अपि तु नैव संपादयेदित्यर्थः । पथ्यसेवनं हि क्षुद्रौषधस्वीकारे, न दिव्यौषधस्वीकारे इति भावः । तथैव दृढभगवदासक्तिसत्वे एतादृशक्षुद्रपापाचरणं नैव दोषायेति ज्ञेयम् ॥ ४४० ॥

---

१ 'ध्रीयते'. २ 'नो त्रप्स्यन्ते'. ३ 'विक्रीणतेऽज्ञाः'.

समन्तात् पुरीं निरीक्ष्य सश्लाघम्—

रङ्गादन्यदनङ्गारेः कंसारेर्वा स्थलेष्वहो ॥
किं दृष्टं ? किमपि क्षेत्रं सप्तप्राकारवेष्टितम् ॥ ४४१ ॥

## अथ श्रीजम्बूकेश्वरवर्णनम् ३५.

कृ०—वयस्य मैवं वोचः ॥ १८५ ॥

अभ्यर्णेऽस्य पुरस्यैतदधिसह्यात्मजातटम् ॥
शैवक्षेत्रमवेक्षेथाः सप्तप्राकारसंवृतम् ॥ ४४२ ॥

वि०—विहस्य—

सत्यं जटाधरप्राकारसंवृतस्यास्य श्लेषनैपुण्येनैव रङ्गसाधर्म्यं समर्थनीयम् ॥

निपुणं निरूप्य—

नन्दत्कंदर्पदर्पक्षपणनिपुणदृग्वह्निसम्पन्नभाला-
रुण्यः फण्यग्र[1]गण्यप्रकरमयतया भीषणै[2]र्भूषणैर्यः ॥

---

किंच **रङ्गादिति** । अनङ्गारेर्मदनशत्रोर्महादेवस्य कंसारेर्विष्णोर्वा स्थलेषु स्थानेषु अहो **हे कृशानो !** रङ्गात् श्रीरङ्गक्षेत्रात् अन्यदितरत् सप्तभिः प्राकारैः सालैर्वेष्टितं क्षेत्रं किमपि कुत्रापि वा दृष्टं किम् ? अपि तु नैवेत्यर्थः ॥ ४४१ ॥

**अभ्यर्ण इति** । यस्मादस्य पुरस्य श्रीरङ्गक्षेत्रस्य अभ्यर्णे समीपे "समीपे निकटासन्न-सन्निकृष्ट-सनीडवत् । सदेशाभ्याश-सविध-समर्याद-सवेशवत् । उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोव्ययम् ।" इत्यमरः । अधिसह्यात्मजातटं कावेरीनदीतीरे, विभक्त्यर्थेऽव्ययीभावः । सप्तभिः प्राकारैः संवृतं वेष्टितं, पक्षे सप्तस्य जटाधरस्य (?) प्राकारैः संवृतं च एतत् प्रसिद्धं शैवक्षेत्रं शिवस्थानं जम्बूकेश्वराभिधं अवेक्षेथाः अवलोकय ॥ ४४२ ॥

**सत्यमिति** । सत्यं त्वदुक्तमित्यर्थः । यतः जटाधरस्य शंकरस्य प्राकारैश्चतुःसंख्याकैः संवृतस्यास्य जम्बूकेश्वरक्षेत्रस्य श्लेषस्य सप्तशब्दसंबन्धिनोऽर्थद्वयस्येत्यर्थः । नैपुण्येनैव नतु वास्तवार्थेन संख्यापरेणेत्यर्थः । रङ्गस्य रङ्गक्षेत्रस्य साधर्म्यं सादृश्यं समर्थनीयम् प्रतिपादनीयम् ॥ १८६ ॥

एवं **कृशानुं** प्रत्युत्तरय्य भगवन्तं शंकरं वर्णयति—**नन्ददिति** । नन्दन् सकलविश्वजयेनानन्दं प्राप्नुवन् यः कन्दर्पो मदनस्तस्य यो दर्पो गर्वस्तस्य क्षेपणे

---

१ 'पुण्याग्रगण्य'. २ 'भीषणो'.

कान्तः सान्तःपुरस्सन्कवलितगरलो राजते राजतेऽद्रौ

मह्यां सह्यात्मजाग्रे विहरति सुचिरं शंकरः शङ्खरोचिः ॥४४३॥

कृ०—सखे! नात्र स्थातव्यम्। यदिहै विश्वविलक्षणा रीतिरालक्ष्यते॥

पश्य—

ये तोयैर्नादेयैरभिषिक्तास्ते हि तापमुज्झन्ति ॥

प्रत्युत जहाति तापं कावेरी शंकराभिषेकेण ॥ ४४४ ॥

वि०—कुत एवम्? ॥ १८८ ॥

कृ०—शृणु तावत्—

गङ्गानुषङ्गाद्यमुना सदर्पेत्यसह्यतापा बत सह्यकन्या ॥

गङ्गाधरे स्वैरभिषिच्यमाने तोयैः स्वयं तापमियं जहाति॥४४५

---

नाशने निपुणा चतुरा समर्थेत्यर्थः। या दृक् तृतीयनेत्रं तस्यां यो वह्निरग्निस्तेन संपन्नं जातं भालारुण्यं यस्य सः फण्यग्रगण्यानां सर्पश्रेष्ठानां महासर्पाणामित्यर्थः। प्रकरमयतया समूहात्मकतया भीषणैः भयंकरैर्भूषणैरलंकारैर्यः कान्तो मनोहरः। क्वचित् ‘भूषणः’ इति पाठः। तत्पक्षे भूषणैर्भीषण इति शंकरस्य विशेषणम्। अपि च कवलितं भक्षितं गरलं कालकूटं येन सः राजते रौप्यमये अद्रौ कैलासपर्वते यो राजते शोभते, स एव शङ्खवत् श्वेतवर्णं रोचिः कान्तिर्यस्य सः, सान्तःपुरः अन्तःपुरेण पत्न्या भगवत्या पार्वत्या सहितः सन् शंकरः शिवः, पूर्वोक्तैरलौकिकविशेषणैरतिसामर्थ्यं कृपालुत्वं च शंकरस्य सूच्यते। मह्यां पृथिव्यां सह्यात्मजायाः कावेर्याः अग्रे तीरप्रदेशे जम्बूकेश्वरक्षेत्रे इत्यर्थः। सुचिरं बहुकालपर्यन्तं विहरति क्रीडति ॥ ४४३ ॥

**सख इति**। नात्र स्थातव्यम्। यत् यतः इह क्षेत्रे विश्वविलक्षणा लोकविरुद्धा रीतिः आलक्ष्यते अवलोक्यते ॥ १८७ ॥

**य इति**। हि यस्मात् कारणात् ये जनाः नद्या इमानि नादेयानि तैः, नदीशब्दात् “स्त्रीभ्यो ढक्” इति ढक् प्रत्ययः। तोयैरुदकैरभिषिक्ताः स्नाताः भवन्ति, ते तापं संतापं उज्झन्ति त्यजन्ति। प्रत्युत तद्विरुद्धत्वेनेत्यर्थः। कावेरी नदी शंकरस्य अभिषेकेण तापं जहाति त्यजति ॥ ४४४ ॥

**कुत इत्यादि**। कस्मात् कारणादेवं भवतीति प्रश्नः ॥ १८८ ॥

तदेव कारणमाह—**गङ्गानुषङ्गादिति**। गङ्गायाः अनुषङ्गात् संगमाद्धेतोः ादी सदर्पा गर्वसहिता इति, विचार्येति शेषः। इति हेतोर्वा। सह्यकन्या ासह्यः सोढुमशक्यस्तापश्चित्तसंतापो यस्याः सा तथाभूता सती, बतेति

---

वि०—ईदृशं दूषणं गुणग्राहिणामभिमतमेव ॥ १८९ ॥

## अथ चोलदेशवर्णनम् ३६.

इत्यन्यतो विमानं प्रस्थाप्य सानन्दम्—

अमी खलु—

व्यालाधिपेशयशुभस्थलभूषितेलाः
क्ष्वेडाशनायतनसान्द्रतरान्तरालाः ॥
चोला विभान्ति पवमानविहारवेला-
दोलायमानसहकारनवप्रवालाः ॥ ४४६ ॥

निपुणं विभाव्य सोत्कण्ठम्—

नागवल्लीमतल्लीभिः सुमुखीभिरिवादरात् ॥
परिरब्धाः प्रमोदन्ते क्रमुकाः कामुका इव ॥ ४४७ ॥

---

खेदे । गङ्गाधरे शिवे खैस्तोयैरुदकैः अभिषिच्यमाने सति इयं खयं तापं मनस्तापं जहाति त्यजति । तत्र गङ्गासंबन्धादिति भावः ॥ ४४५ ॥

**ईदृशमिति ।** ईदृशं गुणोत्कर्षव्यञ्जकं दूषणं गुणग्राहिणामभिमतमेवेष्टमेव ॥१८९॥

**व्यालाधिपेति ।** व्यालानां सर्पाणामधिपे शेषे शेते इति व्यालाधिपेशयो विष्णुस्तस्य शुभैः मङ्गलप्रदैः स्थलैः स्थानैः भूषिता अलंकृता इला भूमिर्येषां ते तथा-भूताः, यद्देशे भगवतो विष्णोर्बहूनि स्थानानि सन्तीति भावः । तथा क्ष्वेडाशनः विषभक्षकः शंकरः "क्ष्वेडस्तु गरलं विषम्" इत्यमरः । तस्य आयतनैः मन्दिरैः सान्द्रतराणि अतिनिबिडानि अन्तरालानि मध्यभागा येषां ते तथोक्ताः, पवमानस्य वायोः विहारवेलासु वहनकालेषु दोलायमानाः दोलावदाचरन्तः, चञ्चला इत्यर्थः । सहकारस्य आम्रवृक्षस्य नवप्रवाला नूतनपल्लवा येषु ते "प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे ।" इति विश्वः । चोलाः देशाः विभान्ति विराजन्ते ॥ ४४६ ॥

**नागवल्लीति ।** किंच अस्मिन् देशे इति शेषः । नागवल्लीमतल्लीभिः प्रशस्तनाग-वल्लीभिः आदरात् प्रेमातिशयात् सुमुखीभिः स्त्रीभिः इव परिरब्धाः वेष्टिताः आ-लिङ्गिताश्च क्रमुकाः पूगवृक्षाः कामुका इव प्रमोदन्ते आनन्दयन्ति ॥ ४४७ ॥

---

१ 'कामिनीभिः'.

इतश्च भवानवेक्षताम्—

अभ्रंलिहानहह पश्य मरुद्वृधाया
रोधोरुहः पृथुफलानिह नारिकेलान् ॥
आगच्छते सवितृमण्डलमाश्रिताय
देवाय भक्तित इवात्तनवोपहारान् ॥ ४४८ ॥

मम तु एवं मतिः—

लोलद्दीर्घदला बृहत्तरफला वातोल्लसद्धूलिभि-
श्छन्नाः प्रांशुतमाः स्फुरन्ति पुरतो ये नारिकेलद्रुमाः ॥
धूमास्वादनपात्रधारिण इमे द्राघिष्ठचञ्चज्जटा-
भस्मोद्धूलितमूर्तयो विवसनाः पाखण्डिभेदा इव ॥ ४४९ ॥

सहासमन्यतो निर्दिश्य—

पद्मिन्याकर्षोचितगन्धप्रसवान् प्रपश्य पुन्नागान् ॥

**अभ्रंलिहानिति ।** मरुद्वृधायाः कावेर्याः रोधसि तीरे रुहन्ति उत्पद्यन्ते इति रोधोरुहः अभ्रं आकाशं लिहन्ति स्पृशन्तीति तथाभूतास्तान्, अत्युच्चानित्यर्थः । पृथूनि महान्ति फलानि येषां तान् नारिकेलान् तालवृक्षान् इह देशे पश्यावलोकय अहहेत्यानन्दे । कथंभूतान् । सवितृमण्डलं सूर्यबिम्बं आश्रिताय आगच्छते देवाय भगवते नारायणाय, समर्पयितुमिति शेषः । भक्तितः भक्त्या आत्ताः स्वीकृताः नवाः नूतनाः उपहारा उपायनानि यैस्तथाभूतानिव स्थितान् ॥ ४४८ ॥

**ममेति ।** मम तु एवं मतिरभिप्रायः—

**लोलदिति ।** लोलन्ति वातेन चलन्ति दीर्घाणि दलानि पर्णानि येषां ते, बृहत्तराणि अतिमहान्ति फलानि येषां ते तथोक्ताश्च वातेन उल्लसन्तीभिरूर्ध्वं गच्छन्तीभिर्धूलिभिः छन्नाः आच्छादिताः प्रांशुतमाः अतिशयोन्नताः नारिकेलद्रुमाः तालवृक्षाः ये पुरतः अग्रभागे स्फुरन्ति विलसन्ति, त इमे नारिकेलद्रुमाः द्राघिष्ठाः दीर्घतमाः चञ्चन्त्यश्चञ्चलाश्च जटा येषां ते धूमास्वादनस्य पात्रं धारयन्तीति तथाभूताः भस्मना उद्धूलिताः मूर्तयः शरीराणि येषां ते तथोक्ताः विवसनाः दिगम्बराश्च पाखण्डिनां नास्तिकसंन्यासिनां भेदा इव स्फुरन्ति प्रकाशन्ते । अत्र 'नागवल्ली–' इत्यादिश्लोकत्रयवर्णनेन चोलदेशस्य बहुलाम्र-नारिकेल-क्रमुकादिवृक्षसंपन्नत्वं सूचितम् ॥ ४४९ ॥

**सहासमिति ।** अत्रास्य पूर्वं **विश्वावसुरि**ति दृश्यते । तदत्र निष्प्रयोजनमेवेति भाति । तस्यैव भाषणस्य प्रचलितत्वात् । एवं सति केनचित् तत्समर्थनार्थं 'इयं चासूयाविरहेण यथार्थोक्तितया कृशानुकर्तव्याक्षेपमन्तरेणैव विषयान्तरप्रक्रान्ततयैकस्यैवोक्तिप्रक्रमेऽपि पुनरुक्तिर्न दोषाय भवति' इति यदुक्तं तदप्यविचाररम-

२ 'परितो'. ३ 'पाषण्ड'. ४ 'प्रसरान्'.

अतनूग्राशुगकलनात्संप्राप्तानधिकरेणुसंपर्कम् ॥ ४५० ॥

पार्श्वतो वीक्ष्य—

अहो महोन्नता जनपदानाममीषामभिजातता ॥ १९० ॥

पश्य—

ज्योतिष्टोमस्तोम[1] उक्थ्योऽतिरात्रो-
ऽप्याप्तोर्यामः[2] षोडशी वाजपेयः ॥
प्रौढा यज्ञाः पौण्डरीकादयो ये[3]
चोलेष्वेते चित्रमौपासनन्ति[4] ॥ ४५१ ॥

---

णीयमेव । अग्रिमश्लोकमारभ्य तद्भाषणसमाप्तिपर्यन्तं नैव कुत्राप्यसूया, सर्वत्र यथार्थोक्तिरेव विद्यते । विषयान्तरप्रक्रान्तिरपि नैव पूर्वोक्तवर्णनस्यैवाग्रेपि सत्त्वात् । तस्मादियं पुनरुक्तिरेव सा च दोषायैवेत्यलमप्रकृतेन ॥

**पद्मिनीति ।** पद्मिनीनां कमलिनीनां स्त्रीणां च आकर्षे आकर्षणे स्पर्धायामिति यावत् । अतिशयसौरभ्यद्योतनार्थमिदम् । वशीकरणे च उचितानि योग्यानि गन्धप्रसवानि सुगन्धिपुष्पाणि गन्धस्य मदस्य च प्रसव उत्पत्तिश्च येषां येभ्यश्च तान् अतनोर्महतः अत एवोग्रस्य भयंकरस्य च आशुगस्य वायोः अतनोर्मदनस्य च उग्राणामसह्यानां आशुगानां बाणानां च "आशुगौ वायु-विशिखौ" इत्यमरः । कलनात् संबन्धात् अधिकस्य रेणोः धूल्याः संपर्के स्पर्शे, करेणुषु गजस्त्रीषु चेत्यधिकरेणु इति च । अस्मिन् पक्षे विभक्त्यर्थेऽव्ययीभावः । संप्राप्तान् पुन्नागान् एतन्नामकवृक्षान् पुरुषगजांश्च प्रपश्यावलोकय । यद्वा पद्मिनीनां पद्मिनीजातिस्त्रीणां आकर्षोचितानि वशीकरणयोग्यानि गन्धप्रसवानि सुगन्धपुष्पाणि येषां तान् अधिकः रेणुः रजो यासां तासामधिकरेणूनां स्त्रीणां संपर्के स्पर्शे संभोगरूपमिति यावत् । संप्राप्तान् पुरुषेषु नागान् श्रेष्ठान् तांश्च प्रपश्येति तृतीयार्थोप्यत्र संभवति ॥ ४५० ॥

**अहो इति ।** अमीषां चोलानां जनपदानां देशानां महोन्नता अभिजातता रमणीयता च अस्तीति शेषः ॥ १९० ॥

**ज्योतिष्टोमेति ।** ज्योतिष्टोमानां नाम यज्ञविशेषाणां स्तोमः समूहः, उक्थ्यः, अतिरात्रः, आप्तोर्यामः, षोडशी, वाजपेयश्चापि । एते सर्वेपि यज्ञविशेषाः क्रमात् पञ्च-चतुस्त्रि-द्व्येकरात्रकालसाध्याः । प्रौढाः बहुकालसाध्यत्वान्महान्तः, पौण्डरीकादयश्च ये प्रसिद्धा यज्ञाः सन्ति, त एते चोलेषु देशेषु औपासनन्ति औपासनवत् गृह्याग्निहोमवत् आचरन्ति । तद्वन्नित्यं भवन्तीत्यर्थः । आचारे क्विप् । एतच्चित्रमाश्चर्यम् ॥ ४५१ ॥

---

१ 'ज्योतिष्टोमः साङ्ग उक्थ्योऽतिरात्रोप्या'. २ 'आप्तोर्यामाः'. ३ 'वा'. ४ 'नित्यमेव क्रियन्ते'.

किंच—

गृहे गृहे पश्य कृताग्निहोत्राः
शास्त्रौषधोल्लाघहृदो विदोषाः ॥
पुण्योत्तराः पण्डितपुण्डरीकाः
पुनन्ति वेदैकधना जगन्ति ॥ ४५२ ॥

कृ०—एतद्विषयविषया श्लाघा शाखानुशाखं न कर्तव्या। यत एतद्देशे वसतां सतामप्यनेकप्रकारा दुराचारा उपलभ्यन्ते ॥ १९१ ॥

स्नान्ति प्रातरधिस्रवन्ति विधिवत्संध्यादि कर्माचर-
न्त्यग्नीनादधते मखान्विदधते शास्त्राणि चाधीयते ॥
अभ्यर्चन्ति सुरान्पराध्यर्कुसुमैरर्चन्ति किंचातिथी-
नन्नैः किंतु पुरातनैस्तनुममी पुष्यन्ति दुष्यन्त्यतः ॥४५३॥

---

**गृहे गृह इति**। शास्त्राण्येवौषधानि तैः उल्लाघानि नीरोगाणि हृन्दि अन्तः-करणानि येषां ते, विविधशास्त्राभ्यासेन निर्मलान्तःकरणा इत्यर्थः। उल्लाघ इति "अनुपसर्गात् फुल्ल-क्षीब—" इत्यादिनिपातनात् साधुः। "वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात्।" इत्यमरः। "उल्लाघो निपुणे हृष्टे शुचि-नीरोगयो-रपि।" इति हैमश्च। अत एव विदोषाः पापरहिताः वेदा एव एकं मुख्यं धनं संपादनीयं द्रव्यं येषां ते पुण्योत्तराः अतिशयपुण्यवन्तः पण्डितानां पुण्डरीकाः श्रेष्ठाः गृहे गृहे प्रतिगृहं कृतं अग्निहोत्रं यैस्ते तथाभूताश्च सन्तः जगन्ति पुनन्ति पवित्रयन्ति पश्य ॥ ४५२ ॥

**एतदिति**। एषः विषयः चोलदेशः विषयः प्रतिपाद्यो यस्याः सा श्लाघा प्रशंसा शाखानुशाखं तत्रत्यान् प्रातिस्विकरूपेणोपादाय न कर्तव्या। यतो यस्मात् एतद्देशे चोलदेशे वसतां वासं कुर्वतां सतां विदुषामपि अनेकप्रकारा नानाविधाः दुराचारा उपलभ्यन्ते दृश्यन्ते ॥ १९१ ॥

के ते दुराचारा इत्याकाङ्क्षायामाह—**स्नान्तीति**। अमी चोलदेशवासिनो जनाः प्रातः स्रवन्त्यां कावेर्यां नद्यामित्यधिस्रवन्ति, विभक्त्यर्थेऽव्ययीभावः। "स नपुं-सकम्" इति नपुंसकत्वम्। स्नान्ति स्नानं कुर्वन्ति, संध्यादि कर्म च विधिवत् शास्त्रो-क्तविधिमनुसृत्य आचरन्ति कुर्वन्ति, अग्नीन् दक्षिणादित्रीन् आदधते स्थापयन्ति सततमग्निहोत्रं पालयन्तीत्यर्थः। मखान् दर्श-पूर्णमासादीन् विदधते कुर्वन्ति, शास्त्राणि धर्मप्रतिपादकानि पूर्वमीमांसादीनि च अधीयते अभ्यस्यन्ति, सुरान् विष्णु-शिवादिदेवान् पराध्यर्कुसुमैः सुगन्धिपुष्पैः अभ्यर्चन्ति पूजयन्ति, किंच अतिथी-

---

१ 'औषधोल्लास'. २ 'श्लाघानुश्लाघा न कर्तव्या'. ३ 'अनर्घ्य'. ४ 'अश्नन्ति'. ५ 'पुष्णन्ति'.

पुनर्निरूप्य सविस्मयम्—

कष्टमेतद्देशवासिनीनां विलासिनीनां नित्यमेव लज्जाव्युत्पत्तिराहित्यम् ॥

तथाहि—

अपि हन्त चोलवासस्थैर्यवतीनां चिराय युवतीनाम् ॥
अपकञ्चुलिकाबन्धौ कुचकुम्भाविति विरुद्धमुपलब्धम् ॥४५४॥

किंच—

अगूढगाढस्तनकुम्भिकुम्भमम्भोजदम्भोदयजैत्रनेत्रम् ॥
चित्ते निधत्ते बत चोलदेशस्त्रैणं प्रवीणं रतिकान्तबाणम् ॥४५५

अपि च—

नवार्तवमहोत्सवे ननु सहस्रशः संगता
गृहाद्बहिरशङ्कितं गदितकामगाथाशताः ॥

---

नापि अर्चन्ति सत्कुर्वन्ति । किंतु स्वयं पुरातनैः पर्युषितैरन्नैः तनुं शरीरं पुष्यन्ति पुष्टीकुर्वन्ति । अतः पर्युषितान्नभक्षणात् दुष्यन्ति दोषयुक्ता भवन्ति । शास्त्रे तस्य निषिद्धत्वादिति भावः ॥ ४५३ ॥

किंच **कष्टमिति** । एतद्देशवासिनीनां विलासिनीनां स्त्रीणां नित्यमेव सततमेव, अनेन सुरताद्युपभोगस्थले तथा करणं न दोषायेति सूचितम् । लज्जायाः व्युत्पत्तिर्ज्ञानं तस्या राहित्यं अभाववत्वमिति यत् तत् कष्टम् ॥ १९२ ॥

तदेवाह—**अपीति** । चोलस्य कूर्पासकस्य "चोलः कूर्पासकोऽस्त्रियां" इत्यमरः । वाससः वस्त्रस्य च, चोले देशे वासस्य निवासस्य च स्थैर्यं स्थिरत्वं विद्यते यासां तथाभूतानां 'वासस्थैर्य—' इत्यत्र "खर्परे शरि वा विसर्गलोपो वक्तव्यः" इति पक्षे विसर्गलोपः । युवतीनां स्त्रीणामपि कुचौ स्तनौ कुम्भाविव तौ चिराय बहुकालपर्यन्तं अपगतः कञ्चुलिकायाः बन्धो बन्धनं ययोस्तौ इति एतत् विरुद्धं इतरजनविरुद्धं उपलब्धं दृष्टम् । हन्तेति खेदे ॥ ४५४ ॥

**अगूढेति** । अगूढौ अनाच्छादितौ गाढौ कठिनौ च स्तनौ कुचौ कुम्भिनः हस्तिनः कुम्भौ गण्डस्थले इव यस्य तत् अम्भोजस्य कमलस्य दम्भोदयस्य गर्वोत्पत्तेः जैत्रे जेतृणी नेत्रे यस्य तत् चोलदेशसंबंधि स्त्रैणं स्त्रीसमूहः, प्रवीणं रतौ कुशलं सत्, मोहने कुशलं वा, अस्मिन् । पक्षे रतिकान्तबाणस्यैतद्विशेषणम् । रतिकान्तस्य मदनस्य बाणं चित्ते निधत्ते नितरां धारयति । सततस्तनानावृतत्वात्कामासक्तमिव भातीति भावः । बतेति खेदे ॥ ४५५ ॥

**नवार्तवेति** । नवं प्रथमप्राप्तं यत् आर्तवं स्त्रीरजः तत्संबन्धी यो महानुत्सवः

---

१ 'देशवासिनीनां नित्यमेव'. २ 'न धत्ते,' 'विधत्ते'.

अहार्यकठिनस्तनप्रकटनादनागस्विनो
मुनेरपि घनां धृतिं चुलुकयन्ति चोलाङ्गनाः ॥ ४५६ ॥

वि०—वयस्य मा स्म निन्द चोलमण्डलवासिनो जनान् ॥ १९३ ॥

याभिः सर्वपदार्थशुद्धिरुदिता तास्वप्सु देवार्पितम्
निक्षिप्तं निशि रक्षितं शुचि हविर्भक्ष्येत चेत्का क्षतिः ? ॥
त्याज्यं शास्त्रनिषेधतस्तदिति चेत्साज्यं सतैलं च त-
द्भोज्यं पर्युषितं स्मरन्ति यदतो योज्यं न तद्दूषणैः ॥४५७॥

तस्मिन् गृहाद् बहिःप्रदेशे सहस्रशः सहस्रसंख्याकाः संगतः एकत्र मिलिताः अशङ्कितं भयरहितं यथा तथा गदितानि परस्परं भाषितानि कामगाथानां व्यवायाभिलाषोत्पादककथानां शतानि याभिस्ताः चोलाङ्गनाः चोलदेशीयस्त्रियः अहार्यवत् पर्वतवत् "महीध्रे शिखरि-क्ष्माभृदहार्य-धर-पर्वताः" । इत्यमरः । कठिनौ यौ स्तनौ तयोः प्रकटनात् अनाच्छादनतया व्यक्तं प्रदर्शनात् अनागस्विनः कामादिवासनारहितत्वान्निरपराधिनः मुनेः मननशीलस्यापि घनां निबिडां अतिशयितामित्यर्थः । धृतिं धैर्यं ननु निश्चयेन चुलुकयन्ति चुलुकवत् कुर्वन्ति त्याजयन्तीत्यर्थः ॥ ४५६ ॥

एतदग्रे मुद्रितैकस्मिन् पुस्तके श्लोकद्वयमधिकं दृश्यते, परंतु तस्य प्राचीनादर्शपुस्तके अन्यपुस्तकेषु चानुपलम्भात् प्रकृतवर्णनासंगतत्वाच्च तन्मूले नैव निवेशितमत एव तत्र टीकामपि कर्तुं नोत्सहे। किंतु लोकबोधनार्थं यथास्थितं टीकायामेव निवेश्यते

**किंच—**

**न केशेषु स्नेहो न च नयनयोरञ्जनकथा**
**न वा वीटी वक्त्रे न च कुचतटे चन्दनरसः ॥**
**न चाल्पोऽप्याकल्पो न च सुवसनं नैव कुसुमम्**
**स्नुषात्वं पापानां फलमधनगेहेषु सुदृशाम् ॥ १ ॥**

**अपि च—**

**अंसौ चेदुदकुम्भभारकिणितावङ्घ्री पुनर्गोमय-**
**स्फायन्नाव्यमलीमसौ करतलं घासच्छिदाकर्कशम् ॥**
**पाकाभ्युत्थितधूममेलनगलद्बाष्पाविले लोचने**
**कष्टं रिक्तगृहिस्नुषात्वनरकः स्त्रीणामहो दुस्सहः ॥ २ ॥**

**वयस्येति** । मा स्म निन्द निन्दां मा कुरु इत्यर्थः ॥ १९३ ॥

अथ क्रमेण दूषणानि निराकुर्वन् प्रथमं तावत् 'स्नांति प्रातरधिस्रवन्ति' इत्यादिनोक्तं पर्युषितान्नभक्षणरूपं दोषं निराकरोति—**याभिरिति** । याभिरद्भिः सर्वपदार्थानां शुद्धिरागन्तुकानागन्तुकदोषनिवृत्तिरुदिता कथिता तास्वेवाप्सु जलेषु निक्षिप्तं एकस्मिन् पात्रे जलं संपूर्य तस्मिंस्थापितं, कुलस्त्रियः औदनिका वा उर्वरितान्नपात्रं

१ 'मनोधृतिं'. २ 'मा दूषय'. ३ 'अतिदुस्सहमन्यत्'. ४ 'फलमिह बतात्रत्यसुदृशां.'

पातिव्रत्यमुपेत्य नित्यमनघाचारावदातात्मनाम्
चोलीनां यदि कञ्चुकी न कुचयोर्मालीमसी का ततः ? ॥
नारीणां सुरतोपयोग्यवयवस्पष्टीकृतिर्दोष इ-
त्युक्तं चेदधरापिधानमपि किं न स्यात् सदा वाससा ? ॥ ४५८ ॥

---

## अथ कुम्भघोणशार्ङ्गपाणिवर्णनम् ३७.

इति पार्श्वतोऽवलोक्य सश्लाघम्—
अस्य देवस्य भाग्यवत्ता खल्वियत्तापरित्यक्ता ॥ १९४ ॥

---

जलपूरितपात्रे पिपीलिकादिभ्यो रक्षणार्थं स्थापयन्तीति सुविदितमेव गृहस्थानाम् । तच्च देवेभ्यः अर्पितं नैवेद्यादिरूपेण निवेदितं सत् निशि रात्रौ रक्षितं मूषक-मार्जारादिभ्य इत्यर्थः । अत एव शुचि प्रकारत्रयेण पवित्रं हविरन्नं भक्ष्येत चेत् तस्मात् का क्षतिः को वा दोषः ? तर्हि शास्त्रनिषेधस्य का व्यवस्था इत्याकाङ्क्षायामाह—शास्त्रनिषेधतः तन्निशि रक्षितमन्नं त्याज्यं इति चेत् साज्यं घृतयुक्तं सतैलं तैलपक्वं च यदन्नं तत् पर्युषितमपि भोज्यं भोजनार्हं स्मरन्ति । तथा च मनुः—“ यत्किंचित् स्नेहसंयुक्तं भक्ष्यं भोज्यमगर्हितम् । तत् पर्युषितमप्याद्यं हविःशेषं च यद्भवेत् ।” इति । अतः कारणात् तत् पर्युषितान्नभक्षणं दूषणैः न योज्यम् । एतेषां शास्त्रविहितान्नस्यैव भक्षणात् ॥ ४५७ ॥

अथ स्त्रीणां कञ्चुकीराहित्यरूपं दूषणं निराकरोति—**पातिव्रत्येति** । पतिव्रतानां भावः पातिव्रत्यं पतिसेवापरत्वं उपेत्य प्राप्य अत एव नित्यं संततं अनघैर्निर्दोषैराचारैः अवदातः शुद्धः आत्मा चित्तं यासां तासां चोलीनां चोलदेशीयस्त्रीणां कुचयोः स्तनयोः यदि कञ्चुकी न भवति, ततः कञ्चुक्यभावात् मालीमसी मलिनता का ? अपि तु कापि नास्तीति । पातिव्रत्येन शुद्धाचाराणां अवयवगोपनेऽगोपने वा न कोऽपि दोषः समुज्जृम्भत इति भावः । अथ सुरते रतिकाले उपयोगिनामवयवानां स्पष्टीकृतिर्व्यक्तीकरणं नारीणां दोषः इति उक्तं, शास्त्रे इति शेषः । तस्माद्दोष एवायं स्तनानाच्छादनरूप इति चेत् वाससा वस्त्रेण अधरस्याधरोष्ठस्यापिधानमाच्छादनं तस्य सुरतोपयोगित्वात् किं कुतो हेतोर्न स्यात् ? सर्वासामपि स्त्रीणामिति भावः । एतेन चोलीनां देशाचारात् कञ्चुक्यभावो न दोषायेति सूचितम् ॥ ४५८ ॥

**अस्येति** । अस्य पुरोदृश्यमानस्य देवस्य शार्ङ्गपाणिनः भाग्यवत्ता ऐश्वर्यवत्त्वं, इयत्तापरित्यक्ता **परिमितिरहिता** निःसीमेत्यर्थः ॥ १९४ ॥

---

१ ‘कञ्चुकं’. २ ‘उक्तश्चेत्’. ३ ‘देशस्य’.

यतोऽत्र—

मणिमयफणितल्पे मल्लिकापुञ्जकल्पे
शमितजगदभद्रां संश्रयन्योगनिद्राम् ॥
दहरकुहरवर्ती देवताचक्रवर्ती
दलितदुरितबाणे दृश्यते कुम्भघोणे ॥ ४५९ ॥

अन्तर्नागरिकीं जनतामवेक्ष्य सशिरःकम्पम्—

स्नात्वा सह्यसुताजले शुचितमा भूत्वा जपादिक्रमै-
र्हुत्वाग्नौ च हविः कृतेतरगिरां कृत्वा च पारायणम् ॥
नत्वा शार्ङ्गधरं भवामयहरं स्तुत्वा च तं भक्तितः
श्रेष्ठाः कालममी क्षिपन्ति बहवः श्रीकुम्भघोणे द्विजाः॥४६०॥

## अथ चम्पकारण्यश्रीराजगोपालवर्णनम् ३८.

इतश्च—

कुटीषु गोपीरुचिरासु योऽर्कभूतटीषु गोपाल इति श्रुतोऽचरत्॥

**मणिमयेति** । मल्लिकापुञ्जकल्पे मल्लिकाकुसुमराशितुल्ये तद्वन्मृदुनीत्यर्थः । मणिमयो रत्नप्रचुरः फणी शेष एव तल्पं शय्या तस्मिन् शमितं जगतो विश्वस्य अभद्रममङ्गलं यया तां योगः वृत्तिनिरोधरूपः समाधिः तद्रूपां निद्रां प्रलयकाले सर्वमात्मनि प्रविलाप्य स्वस्थस्थितिमिति यावत् । संश्रयन् आश्रयन् सन्' किंच दहरमन्तराकाशस्तदेव कुहरं विवरं तद्वर्ती अन्तर्यामीत्यर्थः । देवतानां चक्रवर्ती श्रेष्ठो भगवान्, दलितः भग्नः दुरितं पापमेव बाणः, ( बाणवत् पीडाकरत्वात् ) येन तस्मिन् कुम्भघोणे नाम क्षेत्रे दृश्यते अवलोक्यते, जनैरिति शेषः ॥ ४५९ ॥

**अन्तरिति** । अन्तः पुरमध्ये नगरे भवा नागरिकी तां जनतां जनसमूहम्—

**स्नात्वेति** । श्रीकुम्भघोणे नगरे श्रेष्ठाः अमी बहवो द्विजाः ब्राह्मणाः सह्यसुतायाः कावेर्याः जले स्नात्वा जपः गायत्र्यादिमन्त्राणामुपांशुपाठः आदिर्मुख्यो येषु तैः क्रमैः संध्यादिभिः कर्मक्रमैरित्यर्थः । शुचितमाः पवित्रतरा भूत्वा, अग्नौ च हविर्घृतादिकं हुत्वा विधिवत् प्रक्षिप्य, कृतेतराः रचितभिन्नाः नित्याः या गिरः वाण्यः तासां, वेदवाचामित्यर्थः । पारायणं पठनं च ब्रह्मयज्ञसमये इत्यर्थः । कृत्वा, भवामयहरं संसाररोगहरं शार्ङ्गधरं विष्णुं नत्वा नमस्कृत्य तं विष्णुं भगवन्तं च भक्तितः स्तुत्वा च कालं क्षिपन्ति निर्यापयन्ति ॥ ४६० ॥

**कुटीष्विति** । अर्कभुवः सूर्योत्पन्नायाः यमुनायाः तटीषु तीरेषु गोपीभिर्गोपस्त्री-

अकम्पकारुण्यमुपेत्य मोदते स चम्पकारण्यमगण्यवैभवः ॥४६१॥

अत्र किल राजगोपालपादकमलमुपाश्रयतः साधुजनस्येत्थमनु-संधानम् ॥ १९५ ॥

कोपाटोपदशाविशालपरुषालापादिरूपाशुभ-
व्यापारग्लपितार्थिलोकहृदयैर्भूपालपाशैरलम् ॥
तापाविष्टसकृत्प्रपन्नजनमुक्त्यापादने दीक्षितम्
पापानामपनोदनाय कुहनागोपालमेवाश्रये ॥ ४६२ ॥

कु०—अत्रापि मे विरोध एव प्रतिभाति ॥ १९६ ॥

यतः—

न्यस्तपादः सुमनसां शीर्षेषु मधुहार्यहो ! ॥
मुरारातिर्द्विरेफोऽपि चम्पकारण्यमाश्रितः ॥ ४६३ ॥

---

भी रुचिरासु सुन्दरासु कुटीषु लतागृहेषु यः गोपालः इति नाम्ना श्रुतः प्रसिद्धः सन् अचरत् बभ्राम, स एव भगवान्, सांप्रतमिति शेषः । अगण्यं संख्यातुमशक्यं वैभवमैश्वर्यं यस्य सः अचिन्त्यैश्वर्य इत्यर्थः । तथाभूतः सन्, अकम्पं निश्चलं शाश्वतमित्यर्थः । कारुण्यं यस्मिंस्तत्तथाभूतं चम्पकारण्यं नाम क्षेत्रं उपेत्य आगत्य मोदते क्रीडति ॥४६१॥

**अत्रेति ।** अत्र चम्पकारण्यक्षेत्रे राजा त्रिलोक्यधिपतिश्चासौ गोपालश्च तस्य भगवतः पादकमलमुपाश्रयतो भजतः साधुजनस्य इत्थं वक्ष्यमाणप्रकारेण अनु-संधानम् ॥ १९५ ॥

**कोपेति ।** कोपस्य क्रोधस्य आटोपदशायामतिशयावस्थायां ये विशाला बहुलाः परुषाः कठोराश्च आलापाः भाषणानि आदौ प्रथमतो येषु तद्रूपा ये अशुभाः दुष्टाः व्यापाराः कर्माणि तैर्ग्लपितं दुःखाकृतं अर्थिलोकानां याचकजनानां हृदय-मन्तःकरणं यैस्तैः अत एव भूपालपाशैर्दुष्टनृपैः अलं पर्याप्तम् । न तेऽनु-सार्या इत्यर्थः । किंतु तापाविष्टानां आध्यात्मिकादितापतप्तानां अत एव सकृदे-कवारमपि प्रपन्नानां जनानां मुक्त्यापादने मुक्तिसंपादने दीक्षितं गृहीतव्रतं कुहना-गोपालं कपटगोपालवेषं भगवन्तं पापानां दुरितानामपनोदनाय निवारणार्थं आश्रये भजे ॥ ४६२ ॥

**अत्रापीति ।** अत्र गोपालस्तवनेऽपि मे विरोध एव प्रतिभाति ॥ १९६ ॥

तमेवोपपादयति—**न्यस्तपाद इति ।** सुमनसां देवानां पुष्पाणां च शीर्षेषु मस्तकेषु अग्रभागेषु च न्यस्तौ पादौ येन तथाभूतः सन्, मुरारातिर्मुरनामकदैत्य शत्रुः विष्णुः द्विरेफोऽपि रेफद्वययुक्तो मुरारातिरिति शब्दः भ्रमरश्चापि मधुहारी मधु-

---

१ 'साधुजनस्येदमित्थम्'.

वि०—विरुद्धानामपि सहावस्थि[1]तिसंपादके देवे वासुदेवे का नाम विरोधकथा? ॥ १९७ ॥

यस्मिन्विलोचनतया सह पुष्पवन्तौ
पर्यङ्कवाहनतया फणि-पक्षिराजौ ॥
तेजस्विनौ प्रमुदितौ स्थितिमाश्रयेते
तस्मिन्नहो भगवति क्व विरोधगन्धः? ॥ ४६४ ॥

इति परिक्रम्यावलोक्य प्राञ्जलिः—

परिगतसहकारैः प्रांशुभिर्नारिकेलै-
र्दिनकरकरधारादुष्प्रवेशान्तरेभ्यः ॥
चुलुकितदुरितेभ्यश्चोलदेशस्थितेभ्यो
नम इदमखिलेभ्यो नाथदिव्यस्थलेभ्यः ॥ ४६५ ॥

---

नामकर्दलविनाशकः मकरन्दहारकश्च चम्पकारण्यं नाम क्षेत्रं चम्पकवनं च आश्रितः। अहो इत्याश्चर्ये। तच्च चम्पक-भ्रमरयोः स्वभावविरोधित्वादिति भावः ॥४६३॥

अनुकूलमेवैतदस्मन्मतस्येति सूचयन्नाह—**विरुद्धानामिति**। विरुद्धानां निसर्गविरोधिनामपि सहावस्थितिः एकत्र सहवासः तस्याः संपादके निर्मातरि देवे भगवति वासुदेवे विरोधकथा विरोधवार्ता का नाम भवति? ॥ १९७ ॥

**यस्मिन्निति**। यस्मिन् भगवति तेजस्विनौ विरुद्धशीतोष्णतेजोयुक्तौ पराक्रमयुक्तौ च प्रमुदितौ आनन्दयुक्तौ च पुष्पवन्तौ सूर्य-चन्द्रौ "एकयोक्त्या पुष्पवन्तौ दिवाकर-निशाकरौ।" इत्यमरः। विलोचनतया नेत्ररूपेण, फणिराजः शेषः पक्षिराजो गरुडश्च तौ, द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकमभिसंबन्धात् राजशब्दस्योभयत्राप्यन्वयः। पर्यङ्कवाहनतया अत्रापि पूर्ववदेव। शयनतया वाहनतया चेत्यर्थः। स्थितिं वासं सह युगपदेव आश्रयेते कुरुतः। तस्मिन् भगवति गोपाले, अहो हे **कृशानो!** विरोधस्य गन्धः लेशोऽपि "गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः।" इति विश्वः। क्व अस्ति? अपि तु नास्त्येव ॥ ४६४ ॥

एवं भगवन्तं गोपालं स्तुत्वा तत्रत्यभगवन्निवासस्थानानि स्तौति— **परिगतेति**। परिगताः सर्वतः संगताः सहकारा आम्रवृक्षा येषु तैः प्रांशुभिरुन्नतैः नारिकेलैस्तालवृक्षैः दिनकरस्य सूर्यस्य कराणां किरणानां धारायाः दुष्प्रवेशं प्रवेष्टुमशक्यं अन्तरं मध्यभागो येषां तेभ्यः चुलुकितं विनाशितं दुरितं पापं यैस्तेभ्यः चोलदेशस्थितेभ्यः अखिलेभ्यः सर्वेभ्यः नाथस्य भगवतो गोपालस्य दिव्यस्थलेभ्यः दिव्यमन्दिरेभ्यः, इदं नमः तेभ्यो नमस्करोमीत्यर्थः ॥ ४६५ ॥

---

१ 'सहावस्थान'.

क्ष०—भवतु तवैतेषु[1] नमस्कर्तृता। मम तु देवलकादिदेवालयोपजी-
दुराचारानालोकयतो[2] न भवति नमश्चिकीर्षा ॥ १९८ ॥

तथाहि—

वारस्त्रीकुचमर्दिभिर्विरचयन्त्यर्घ्योदिदानं करै-
स्तद्वीटीरसवासितैश्च[3] वदनैर्जल्पन्ति मन्त्रानमी ॥
द्रव्यं देवलका हरन्त्यचकिता देवस्य तत्पूजिता-
स्वेतासु प्रतिमासु हन्त भविता किं देवतासंनिधिः ॥४६६॥

किंच—

आघ्राता बत पण्ययौवतकथा नो कर्मसंध्यादिकं
यैरभ्यस्तमभूदसभ्यवचनं न त्वेव वेदाक्षरम् ॥
अन्धश्चौर्यपरैर्दुरन्वयभवैः सूदैरमीभिः कृता-
न्यन्नौघानि निवेदितानि भगवानङ्गीकरोत्येष किम्? ॥४६७॥

---

**भवत्विति**। एतेषु नाथस्थलेषु तव नमस्कर्तृता नमस्काराचरणं भवतु।
म तु देवलकाः वेतनादिना देवपूजकाः "देवाजीवस्तु देवलः"। इत्यमरः। आदयो
स्याः येषु तादृशा ये देवालयोपजीविनः देवालयोत्पन्नधन-फलादिभिः स्वोदर-
काः अत एव दुराचारास्तान् आलोकयतः पश्यतः सतः नमश्चिकीर्षा नम-
र्तुमिच्छा न भवति नैवोत्पद्यते ॥ १९८ ॥

**वारस्त्रीति**। अमी देवलकाः वारस्त्रीणां वेश्यानां कुचमर्दिभिः स्तनमर्दिभिः
हस्तैः देवस्य, देवाय भगवते इत्यर्थः अर्घ्यं आदिः प्रधानं येषामावाहनादिषोडश-
ोपचाराणां तेषां दानं समर्पणं विरचयन्ति कुर्वन्ति। तासां वेश्यानां वीट्याः
न्नसम्बन्धिताम्बूलस्य रसेन वासितैः सुगन्धयुक्तैर्वदनैर्मुखैश्च मन्त्रानर्घ्याद्युपचार-
र्पणमन्त्रान् जल्पन्ति पठन्ति। तथा अचकिताः परलोकभयरहिताः सन्तः द्रव्यं
श्रद्धक्तैः समर्पितं फलादिकं हरन्ति स्वयमेव गृह्णन्ति। तैर्देवलकैः पूजितासु एतासु
मासु देवमूर्तिषु देवतानां संनिधिः सामीप्यं भविता भविष्यति किम्? अपि तु
त्यर्थः। हन्तेति खेदे ॥ ४६६ ॥

एवं देवलकानां स्थितिमुक्त्वा तन्नैवेद्यान्नपाचकानां सूदानामाचरणमाह—**आघ्रा-
ते**। यैः सूदैः पण्ययुवतीनां वारस्त्रीणां समूहः पण्ययौवतं तस्य कथा आ-
ा अभ्यस्ता संध्यादिकं कर्म तु नो नैवाघ्रातम्। बतेति विषादे। तथा अस-
वचनं अश्लीलभाषणं अभ्यस्तमधीतमभूत्, वेदस्य अक्षरमपि, किमुत मन्त्रादिकं
ैवाभ्यस्तम्। किंच अन्धसोऽन्नस्य "भिःसा स्त्री भक्तमन्धोऽन्नमोदनः" इत्य-

---

१ 'भवत एतेषु'. २ 'आलोचयतो'. ३ 'रससासितैश्च'. ४ 'मदन्न'.
'अन्नाद्यानि'.

विमृश्य—

अहो कलिमाहात्म्यादखिलजनानामनिवार्यो विवेकविपर्ययः १९९

यतः—

सद्मस्वादरतोऽर्पितानि हरये सत्त्वोत्तरैर्भूसुरै-
रन्नान्यत्र न मानयन्ति विधिवत्सिद्धानि वृद्धा अपि ॥
देवस्यायतने स्वदन्ति विभया व्रात्यैः कृतानोदनान्
स्पृष्टान्दुष्टजनेन कष्टमखिलैर्दृष्टानशिष्टाहृतान् ॥ ४६८ ॥

वि०—मादृशेभ्यो हि दिव्यक्षेत्रमाहात्म्यवेदिभ्यो भवदीयमत्र दूषणं न रोचते ॥ २०० ॥

---

नरः । चौर्यपरैः चौर्यतत्परैः यतो दुरन्वयभवैः दुष्कुलोत्पन्नैः अमीभिः सूदैः ओदनपाचकैः कृतानि पाचितानि अन्नौघानि विविधान्नसमूहाः, अन्नौघशब्दस्य नपुंसकत्वं "स्तोमौघ-निकर-व्रात-वार-संघात-संचयाः ।" इत्यमरानुशासनात् प्रामादिकमिति भाति । क्वचित् 'अन्नाद्यानि' इति पाठान्तरं दृश्यते तत्तु युक्तमेवेति मन्यामहे । तत्पक्षे च अन्नं भक्तं आद्यं मुख्यं येषु सूप-शाकादिवस्तुषु तानीत्यर्थः । परंतु प्राचीनबहुतरपुस्तकेषु अस्यैव पाठस्य स्वीकृतत्वादस्माभिरपि स एवाङ्गीकृतः । निवेदितानि समर्पितानि सन्ति, एष भगवान् अङ्गीकरोति स्वीकरोति किम् ? ॥४६७॥

**अहो इति ।** कलिमाहात्म्यात् कलियुगप्रभावात् अखिलजनानां, नतु केवलं देवलकादीनामेव, विवेकस्य विधि-निषेधविवेचनस्य विपर्ययः वैपरीत्यम् ॥ १९९ ॥

**सद्मस्विति ।** सत्त्वेन सत्त्वगुणेन उत्तरैः श्रेष्ठतां प्राप्तैः भूसुरैर्ब्राह्मणैः सद्मसु स्वगृहेषु आदरतः सत्कारेण हरये भगवते अर्पितानि निवेदितानि अत एव विधिवद्यथाशास्त्रं सिद्धानि पक्वानि अन्नानि अत्र चोलदेशे वृद्धा अपि, किमुतेतरे ? न मानयन्ति ? नैव स्वीकुर्वन्ति । किंतु देवस्यायतने देवालये व्रात्यैः पूर्वोक्तरीत्या विवाहादिसंस्कारहीनैः कृतान् पाचितान्, किंच दुष्टजनेन दुराचारिणा मनुष्येण स्पृष्टान् कृतस्पर्शान्, अखिलैः सर्वैः शूद्रादिभिर्जनैर्दृष्टान्, अशिष्टैरसभ्यैः आहृतान् आनीतान् ओदनान् अन्नानि 'ओदनोऽस्त्री' इत्यनुशासनादोदनशब्दस्य पुँल्लिङ्गतापि । विभयाः भयरहिताः सन्तः स्वदन्ति आस्वादयन्ति भक्षयन्तीत्यर्थः ॥ ४६८ ॥

**मादृशेभ्य इति ।** मादृशेभ्यः मत्सदृशेभ्यः दिव्यक्षेत्रस्य माहात्म्यवेदिभ्यः प्रभावविद्भ्यः हि भवदीयं त्वत्संबन्धि, त्वयोक्तमित्यर्थः । अत्र श्रीराजगोपालविषये दूषणं न रोचते ॥ २०० ॥

---

२ 'आयतनेष्वदन्ति,' त्वदन्ति'. ३ 'नूनमखिलैः'. ४ 'शि-

यतः—

उषस्येव स्नानादुचितशुचिताशालिवपुषो
विनीताः स्वे शास्त्रे वि[1]गतवृजिनाः पूजकजनाः ॥
परित्रातुं लोकान्विधिवदपतन्द्रा विदधते
पवित्रैरन्नाद्यैः परमपुरुषाराधनम[2]मी ॥ ४६९ ॥

आकर्ण्यतामिदमपि यदभ्युपगम्याप्यभिधास्या[3]मि रहस्यम् ॥ २०१ ॥

विधिवदविधिवद्वा भक्तितोऽभक्तितो वा
ननु शुचिरशुचिर्वा नाथमर्चेत्विहत्यः ॥
अनुदिनमुपयातैरर्च्यमानासु देवै-
ररुचिरजितमूर्तिष्वास्तिकस्यास्ति कस्य ? ॥ ४७० ॥

इदं चावधेयम्—

केचिच्चक्रधरापरा[4]धचकिताः क्ष्मापालभीताः परे
श्रद्धातः कतिचित्पचन्त्यवहिताः शुद्धाश्च दिव्यं हविः ॥

---

**उषसीति** । अमी पूजकजनाः उषस्येव प्रातःकाले एव स्नानाद्धेतोः उचिता यथाशास्त्राचारतया योग्या या शुचिता पवित्रता तया शालि शोभमानं वपुः शरीरं येषां ते, स्वे आत्मीये शास्त्रे विनीताः शिक्षिताः, स्वशास्त्रकृताभ्यासा इत्यर्थः । अत एव विगतं विनष्टं वृजिनं दुष्कृतं येषां ते लोकान् परित्रातुं संरक्षितुं अपगता तन्द्रा मन्दता येषां ते, संततं जागरूका इत्यर्थः । विधिवद्यथाशास्त्रं पवित्रैः अन्नाद्यैः परमपुरुषस्य भगवतो गोपालस्य आराधनं पूजनं विदधते कुर्वन्ति ॥ ४६९ ॥

**आकर्ण्यतामिति** । किंच यत् अभ्युपगम्य भवदीयदूषणं स्वीकृत्यापि रहस्यं गौप्यं अभिधास्यामि कथयामि, तत् आकर्ण्यतां श्रूयताम् । त्वयेति शेषः ॥ २०१ ॥

'वारस्त्रीकुचमर्दिभिः—' इत्यादिनोक्तं दूषणमुद्धर्तुमाह—**विधिवदिति** । इहत्यः एतद्देशीयः जनः शुचिः पवित्रः, अशुचिः अपवित्रो वा सन्, नाथं गोपालं भगवन्तं विधिवद्यथाशास्त्रं वाऽथवा अविधिवत् शास्त्रविरुद्धतया, भक्तितः अभक्तितो वा अर्चतु पूजयतु । किंतु अनुदिनं प्रतिदिनं उपयातैः आगतैः देवैरिन्द्रादिभिः अर्च्यमानासु पूज्यमानासु अजितमूर्तिषु भगवन्मूर्तिषु कस्य अस्ति परमात्मा इति मतिर्यस्य स आस्तिकः "अस्तिनास्तिदिष्टं मतिः" इति ठक् प्रत्ययः । तस्य पुरुषस्य अरुचिः अप्रीतिः अस्ति ? अपि तु सततमिन्द्रादिदेवैः पूजितत्वाद्देवतासंनिधानात्सर्वस्याप्यास्तिकस्य श्रद्धा जागरूकैवेति भवादृशनास्तिकस्य तु अश्रद्धैवेति च भावः ॥ ३७० ॥

'आघ्राता बत–' इत्यादिश्लोकद्वयेनोक्तं दूषणं परिहरति—**केचिदिति** ।

---

१ 'विजित'. २ 'मपि'. ३ 'अभिधास्यामि'. इत्येव क्वचिद्दृश्यते. ४ 'पचार'.

अग्रे न्यस्तमिदं मुदैव भगवानालोकनैः स्वीकरो-
त्यंहःसंहरणास्थया च तदिदं प्राश्नन्ति भाग्योत्तराः॥४७१॥

पश्य तावत् स्वानुभवसिद्धौ प्रकर्ष-निकर्षौ भगवदायतन-तदितरस्थलपरिकल्पितयोरन्नयोः ॥ २०२ ॥

उपस्कारैः स्फारैरुपचितरसामोदभरम-
प्यवैत्यन्नं गेहे कृतमनतिभोग्यं बुधजनः ॥
अभूयःसंस्कारिण्यपि हविषि देवालयभवे
त्वनल्पं भोग्यत्वं पुनरघहरत्वं च मनुते ॥ ४७२ ॥

---

केचित् सूदादयः चक्रधरस्य विष्णोः अपराधात् चकिताः यदि तावत् अशुचितयाऽन्नादिकं पाचितं तर्हि भगवतोऽपराधः स्यादिति भीताः, परे अन्ये ये तावदीश्वराद्भयं न मानयन्ति ते इत्यर्थः । क्षमापालात् राज्ञः सकाशात् भीताः यदि तावदनवहिततवेनाशुचित्वेन च पाकनिष्पत्तिः कदाचिद्राज्ञा राजपुरुषेण वा केनचिद्दृष्टा स्यात्तदा वयं दण्ड्या भवेमेति शङ्किताः सन्तः, अत एव अवहिताः पाककर्मणि दत्तचित्ताः, तत एव च शुद्धाः स्नानादिना पवित्राश्च सन्तः कतिचिदौदनिकाः श्रद्धातः आस्तिक्यबुद्ध्या दिव्यं सम्यग्विहितत्वेन तेजोयुक्तं हविरन्नादिकं पचन्ति । ततश्च इदं सावधानतया पवित्रतया च निष्पादितमन्नं अग्रे न्यस्तं नैवेद्यार्थं पुरःस्थापितं सत् भगवान् मुदैव आनन्देनैव आलोकनैरवलोकनैः स्वीकरोति । तच्चेदं भगवदीक्षणेनात्यन्तपरिशुद्धमन्नादिकं अंहसां पापानां संहरणास्थया विनाशाशया भाग्योत्तराः अतिशयभाग्यवन्तो जनाः प्राश्नन्ति भक्षयन्ति ॥ ४७१ ॥

नन्वनुभवमन्तरेण व्यर्थमेवेदं सर्वं त्वद्भाषणमिति चेदाह—**पश्येति** । भगवतः आयतने स्थाने तदितरस्मिंश्च स्थले कस्यचिद्गृहे परिकल्पितयोः पाचितयोरन्नयोः स्वानुभवेनात्मीयानुभवेनैव नतु मत्सदृशान्येन केनचित्कथितमात्रेण, सिद्धौ प्रकर्षः देवालयनिष्पादितस्योत्कर्षः निकर्षः तदितरस्थलनिर्मितस्य चापकर्षश्च तौ पश्य तावत् ॥ २०२ ॥

**उपस्कारैरिति** । स्फारैर्बहुलैः उपस्कारैः वेसवारादिव्यञ्जनैः उपचितः वृद्धः रसस्य तिक्ताम्लादेः आमोदस्य सुगन्धस्य च भरः अतिशयः यस्मिन् तथाविधमप्यन्नं गेहे गृहे कृतं पक्वं चेत्, तत् बुधजनः अनतिभोग्यं अतीव भोजनानर्हं अवैति जानाति । किंच देवालयभवे भगवन्मन्दिरपक्वे न विद्यन्ते भूयांसो बहुलाः संस्कारा व्यञ्जनादयो यस्मिन् तथाभूतेऽपि, किं पुनर्बहुतरसंस्कारवति हविषि अन्ने अनल्पं बहुतरं ...योग्यत्वं, न त्वेतावदेव, पुनः अघहरत्वं पापनिवर्तकत्वं चापि मनुते । ...प्रभाव एवेति भावः ॥ ४७२ ॥

---

...षौ' २ 'कृतमयमभोग्यं'.

इदं च बोद्धव्यम्—

देवागारनिषेविणः किल जना दुष्यन्तु शुध्यन्तु वा
तेऽमी स्वामिपरिग्रहेण नियतं मान्या मनीषाजुषाम् ॥
प्रायेणाश्रयगौरवेण लभते हीनोऽपि मानार्हताम्
कुब्जक्लीबमुखो जनोऽपि भजते पूजां हि राजाश्रयात् ॥४७३॥

## अथ सेतुवर्णनम् ३९.

इत्यन्यतः परिक्रामन्नग्रतोऽवलोक्य सहर्षं साञ्जलिबन्धनम्—

पातुं पातकिनो जनानशरणान् पातुं तमःसागरम्
यातुं यातुपुरीमरीन् रणमुखे जेतुं दशास्यादिकान् ॥
नेतुं भूतनयां मुदं विरहिणीमेतुं यशः शाश्वतम्
दातुं शर्म च राघवेण रचितं[1] सेतुं नमस्कुर्महे ॥ ४७४ ॥

---

किंच **देवागारेति** । देवागारे देवमन्दिरस्य निषेविणः पूजनान्ननिष्पादनादिरूपेण सेवकाः जनाः प्रातःकालस्नानादिना शुध्यन्तु, संध्यानाचरणादिना दुष्यन्तु दोषयुक्ता भवन्तु वा । परंतु ते उभयविधा अपि अमी जनाः स्वामिनः भगवतः परिग्रहेणानुग्रहेण मनीषाजुषां बुद्धिमतां नियतं नियमेन मान्याः पूज्याः भवन्ति । अत्रार्थान्तरमुपन्यस्यति—लोके प्रायेण बहुधा हीनोऽपि नीचोऽपि जनः आश्रयस्याधारस्य गौरवेण महत्त्वेन मानार्हतां पूज्यतां लभते प्राप्नोति । हि यस्मात् कुब्जः वक्राङ्गः क्लीबश्च तौ मुखौ प्रमुखौ यस्मिन् तथाभूतो जनोऽपि, जातावेकवचनम् । राजाश्रयात् पूजां इतरजनेभ्यः सत्कारं, भजते प्राप्नोति ॥ ४७३ ॥

अथ दक्षिणतः श्रीरामकृतं सेतुं दृष्ट्वा तं नमस्कुर्वन्नाह—**पातुमिति** । अशरणान् रक्षकहीनान् पातकिनश्च जनान् पातुं रक्षितुं, तमःसागरमज्ञानसमुद्रं पातुं तस्य पानं कर्तुं, पूर्वं 'पा रक्षणे' इति धातो रूपमत्र च 'पा पाने' इति धातोश्च रूपमङ्गीकृतमिति बोध्यम् । तेन सकलाज्ञानं विनाशयितुमित्यर्थः । यातूनां रक्षसां "यातुधानः पुण्यजनो नैर्ऋतो यातु-रक्षसी ।" इत्यमरः । पुरीं लङ्कानगरीं यातुं गन्तुं, रणमुखे युद्धमध्ये दशास्यादिकान् रावणप्रमुखान् अरीन् शत्रून् जेतुं पराभावयितुं, विरहिणीं स्ववियोगिनीं भूतनयां सीतां मुदमानन्दं नेतुं, प्रापयितुं, शाश्वतं विनाशरहितं यशः कीर्तिं एतुं संपादयितुं, शर्म सुखं दीनजनेभ्य इति शेषः । दातुं च राघवेण श्रीरामचन्द्रेण रचितं निर्मितं सेतुं नमस्कुर्महे वन्दनं कुर्मः ॥ ४७४ ॥

---

१ 'निर्मितं भगवता'.

हन्त कठिनानामप्यमीषामतिमहती प्रीतिरनुबन्धिजने ॥२०३॥

यतः—

लङ्कापुरे पङ्क्तिमुखेन रुद्धां भूमेः सुतां भूमिभृतोऽनुबन्धात् ॥
पतिं पुनः प्रापयितुं पयोधौ सेतूभवन्तः स्वयमाप्लवन्ति ॥४७५॥

निरूप्य—

पयोधिमध्ये प्लवमानमूर्तयस्तरङ्गवेगार्पितफेनचिह्निताः ॥
हसन्ति किं मन्दरमन्तरर्णवं निमग्नमेते नलसेतुभूधराः ॥४७६॥

पुनर्विमृश्य—

लङ्कापुरावासिरघूद्वहारिसंपर्कपापादिव सिन्धुराजः ॥
सपक्षभूभृन्निबिडान्तरोऽपि विपक्षभूभृद्भिरबन्धि कष्टम् ॥४७७॥

शुद्धाः संश्रितधर्मसेतव इमे सोढोग्रवर्षातपाः
स्थित्वा सिन्धुजले सदा क्षितिभृतो घोरं तपः कुर्वते ॥

---

**हन्तेति**। कठिनानां कठोराणामपि अमीषां सेतुसंबन्धिनां शिला-पाषाणादिकानामिति शेषः। अनुबन्धिजने स्वसंबन्धिजने अर्थात् सीताविषये अतिमहती प्रीतिः प्रेम, अस्तीति शेषः। हन्तेत्यानन्दे ॥ २०३ ॥

प्रीतिमेव विशदयति—**लङ्कापुर इति** । भूमिभृतः सेतुसंबन्धिपर्वताः अनुबन्धात् भूमिकन्यात्वात्सोदरसंबन्धादित्यर्थः । लङ्कापुरे दशाननगर्यां पङ्क्तिमुखेन रावणेन रुद्धां भूमेः पृथिव्याः सुतां सीतां पुनः पतिं श्रीरामचन्द्रसंनिधिं प्रापयितुं पयोधौ समुद्रे स्वयं सेतूभवन्तः सन्तः, आप्लवन्ति तरन्ति ॥ ४७५ ॥

किंच **पयोधिमध्य इति**। पयोधेः समुद्रस्य मध्ये प्लवमानाः तरन्तः मूर्तयो येषां ते, तरङ्गाणां ऊर्मीणां वेगैः जवैः अर्पितैः समर्पितैः फेनैः चिह्निताः कृतलाञ्छनाः एते नलो नाम रामसैनिकानां वानराणामेकतमः तन्निर्मितसेतुसंबन्धिनो भूधराः पर्वताः, अन्तरर्णवं समुद्रमध्ये निमग्नं मन्दरं नाम पर्वतं हसन्ति किं, उपहासं कुर्वन्त्येवेति किमित्युत्प्रेक्षा ॥ ४७६ ॥

**पुनरिति**। विमृश्य विचार्य—

**लङ्केति**। सिन्धुराजः समुद्रः लङ्कापुरावासिनः रघूद्वहस्य रघुश्रेष्ठस्य रामचन्द्रस्य अरेः शत्रो रावणस्य संपर्कपापात् स्पर्शदोषादिव सपक्षाः समानमतस्थाः सुहृद इत्यर्थः। पक्षसहिताश्च ये भूभृतः राजानः पर्वताश्च तैः निबिडं घनं अन्तरं मध्यभागो यस्य सः तथाभूतोऽपि विपक्षभूभृद्भिः शत्रुभूतराजभिः पक्षरहितैश्च पर्वतैः अबन्धि बद्धः, कष्टमिति खेदे ॥ ४७७ ॥

संश्रितः आश्रितः धर्मस्य सेतुर्मर्यादा यैस्ते, पक्षे संश्रितः धर्मेण

नृत्यन्तीरिह नित्यमेव लुलितास्तीक्ष्णैरतन्वाशुगै-
र्लावण्यं दधतीः कदापि न चलन्त्यालोक्य वीचीरमूः ॥४७८॥

क्षणमभिध्यायन्नञ्जलिं बद्ध्वा—

अस्तोकदृप्तिरपि वारिधिरेष यस्मात्
त्रस्तो बिभर्ति विपुलोपलसान्द्रसेतुम् ॥
गोपायते दुरितवन्ति जगन्ति तस्मै
कोपाय ते रघुपते महते नमोऽस्तु ॥ ४७९ ॥

कु०– साक्षेपम्—

काकुत्स्थकोप[2]चकितः कमिता नदीना-
मासीद्यदानघ[3]गुरुप्लवनार्हतोयः ॥
शक्यस्तदैष तरितुं हरिभिः पदाभ्याम्
किं वा फलं कथय सेतुकृतिश्रमस्य ? ॥ ४८० ॥

---

धर्मरूपेण रामेण रचितः सेतुर्यैस्ते इति च, सोढौ मर्षितौ उग्रौ वर्षं वृष्टिः आतपः सूर्यप्रकाशश्च तौ द्वौ यैस्ते अत एव शुद्धाः पवित्राः सदा सर्वदा सिन्धुजले समुद्रोदके स्थित्वा क्षितिभृतः राजानः पर्वताश्च घोरं भयंकरं तपः कुर्वते कुर्वन्ति । अतः इमे पर्वताः राजानश्च इह लोके समुद्रे च लावण्यं सौन्दर्यं लवणस्य भावः लावण्यं क्षार-रसमित्यर्थः । दधतीः धारयन्तीः तीक्ष्णैस्तिग्मैः अतनुभिः बहुभिः आशुगैः वायुभिः अतनोर्मदनस्य च आशुगैर्बाणैश्च "आशुगौ वायु-विशिखौ" इत्यमरः । लुलिताः क्षुभिताः पीडिताश्च अत एव नित्यमनवरतमेव नृत्यन्तीः वर्द्धिताः नृत्यमाचर-न्तीश्च अमूः वीचीः लहरीः आलोक्यावलोक्य कदापि न चलन्ति न मुह्यन्ति न भ्रमन्ति च ॥ ४७८ ॥

**अस्तोकेति** । एष वारिधिः समुद्रः अस्तोका बहुला दृप्तिर्गर्वो यस्य तथाभूतः सन्नपि, यस्मात् कोपात् त्रस्तो भीतः सन् विपुला बहुला ये उपलाः पाषाणास्तैः सान्द्रं निबिडं सेतुं बिभर्ति धारयति, तस्मै दुरितवन्ति पापयुक्तानि जगन्ति गोपायते रक्षते, 'गुपू रक्षणे' इत्यस्मात् "गुपू-धूप-" इत्यादिना आयप्रत्यये शतृप्रत्ययः । हे रघुपते भगवन् रामचन्द्र ! ते तव महते कोपाय क्रोधाय नमः अस्तु ॥ ४७९ ॥

'वारिधिस्त्रस्तो बिभर्ति विपुलोपलसान्द्रसेतुं' इत्यत्राक्षिपति—**काकुत्स्थेति** । नदीनां कमिता पतिः समुद्रः ककुत्स्थस्य गोत्रापत्यं पुमान् काकुत्स्थः रामचन्द्रः तस्य कोपात् चकितो भीतः यदा अनघानां निर्मलानां गुरूणां महतां, सोढुमशक्यानामित्यर्थः । अर्थात् पाषाणानां प्लवनाय तरणाय अर्हं योग्यं तोयमुदकं यस्य तथाभूतः आसीत्, तदा तर्हि एषः हरिभिः वानरैः पदाभ्यां

---

१ 'चपला'. २ 'रोष'. ३ 'गुरुनग', 'ननु गुरु'.

**वि०**—तत् कथितमेव मया । भवता तु न सम्यगवधारितम् । शृणु तर्हि पुनः सावधानम् ॥ २०४ ॥

अम्भोराशिं वानरा लङ्घयन्त्वित्येतद्व्याजीकृत्य राजीवनेत्रः ॥
अंहोराशेर्लङ्घनार्थं नराणामम्भोराशौ[१] सेतुमुच्चैरबध्नात् ॥ ४८१ ॥

पुनर्निरूप्य—

न सागरोऽसौ नभ एव फेनव्रजा न चामी विपुलोडुवर्गाः ॥
न सेतुरेषोऽपि निशाचराणां नृपातकानामपि धूमकेतुः ॥४८२॥

पश्यात्र जलचरभ्रमचमत्कारम् ॥ २०५ ॥

गजेन्द्रबुद्ध्या नलसेतुशैलान्ग्राहा ग्रसन्ते जलधौ वसन्तः ॥
तद्ग्रासजायाससमुत्थदंष्ट्राव्यथाः प्रधावन्ति यथागतं ते ॥४८३॥

---

चरणाभ्यां तरितुं लङ्घयितुमपि शक्यः स्यात् । तस्मात् सेतुकृतिश्रमस्य सेतुरचनाप्रयत्नस्य किं वा फलमुपयोगः ? कथय ॥ ४८० ॥

**तदिति** । तत् सेतुकृतिश्रमफलं मया कथितं 'दातुं शर्म च राघवेण रचितं' इत्यादिनोक्तमेव । भवता तु पुरोभागितया न सम्यक् अवधारितं ज्ञातम् । तर्हि पुनः कथयामीति शेषः । सावधानं केवलपुरोभागित्वं त्यक्त्वा तत्त्वजिज्ञासया मनःपूर्वकं यथा तथा शृणु ॥ २०४ ॥

**अम्भोराशिमिति** । वानराः अम्भोराशिं समुद्रं लङ्घयन्तु तरन्तु इत्येतत् व्याजीकृत्य निमित्तीकृत्य, राजीवनेत्रः कमलनयनः श्रीरामचन्द्रः नराणां अंहसां पापानां राशेः समुद्रस्य लङ्घनार्थं उल्लङ्घनार्थं अम्भोराशौ समुद्रे उच्चैर्महान्तं सेतुं अबध्नात् बबन्ध ॥ ४८१ ॥

**नेति** । असौ दृश्यमानः सागरः समुद्रो न, किंतु नभ आकाश एव । अमी सागरतरङ्गेषु विलसन्तः फेनव्रजाः फेनसमुदायाः न, किंतु विपुलानां बहूनां उडूनां नक्षत्राणां वर्गाः समुदाया एव । तथा एषः सागरे श्रीरामनिबद्धः सेतुर्न, अपि तु निशाचराणां राक्षसानां नृणां मनुष्याणां संबन्धिनां पातकानामपि च धूमकेतुः उत्पातसूचकग्रहविशेषः । अत्र सागरादीनां प्रकृतस्वरूपं निषिध्य नभआदीनामप्रकृतानां साधनादपह्नुतिरलंकारः । तदुक्तम्— " प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः । " इति ॥ ४८२ ॥

**पश्येति** । अत्र समुद्रे जलचराणां मत्स्यादीनां भ्रमस्य मिथ्याज्ञानस्य चमत्कारं आश्चर्यं पश्य ॥ २०५ ॥

**गजेन्द्रेति** । जलधौ समुद्रे वसन्तो वासं कुर्वन्तः ग्राहाः नक्राः, गजेन्द्रा महा- ...बुद्धिस्तया नलस्य नलनिर्मितस्य सेतोः संबन्धिनो ये शैलाः पाषा-

---

[१] 'उदां राशौ', 'पाथोराशौ'.

पुनर्विचिन्त्य—

डिण्डीरखण्डान्मूयपाण्डुराभं द्राघिष्ठमुच्चैः परिणाहवन्तम् ॥
काकुत्स्थसेतुं कलये गुणाढ्यं धौतोत्तरीयं धृतमर्णवेन ॥ ४८४ ॥

यद्वा—

चिराद्धराभूरिभरार्तमूर्तिर्हरित्करिष्वर्पितनैजकृत्यः ॥
श्रमक्षयायार्णववारि शीते शेते स किं सेतुमिषेण शेषः ॥४८५॥

विमृश्य सश्लाघम्—

यः पुरा पापदशकच्छेदे साधनतां गतः ॥
स सेतुर्न कथं शक्तः ? पापपञ्चकभञ्जने ॥ ४८६ ॥

---

णास्तान् ग्रसन्ते भक्षयन्ति । ततः तेषां ग्रासाज्जाता ये आयासाः प्रयत्नाः तेभ्यः समुत्था उत्पन्ना दंष्ट्राणां व्यथा येषां ते तथाभूताः सन्तः, यथागतं आगतस्थानमनतिक्रम्य, स्वस्थानमित्यर्थः । प्रधावन्ति शीघ्रगत्या गच्छन्ति ॥ ४८३ ॥

**डिण्डीरेति** । डिण्डीरखण्डानां फेनशकलानां अन्वयेन स्पर्शसंबन्धेन पाण्डुरा श्वेतवर्णा आभा कान्तिर्यस्य तं द्राघिष्ठं अतिदीर्घं उच्चैः परिणाहवन्तं अतिविशालतासंपन्नं च गुणैः प्रणतजनदुःखनिर्हरणादिभिः, सूत्रैश्च आढ्यं संपन्नं काकुत्स्थसेतुं श्रीरामनिर्मितं सेतुं, अर्णवेन समुद्रेण धृतं परिधृतं धौतं प्रक्षालितं उत्तरीयं उपवस्त्रं, कलये अवगच्छामि ॥ ४८४ ॥

अथवा एवं कल्पनीयमित्याह— **चिरादिति** । चिरात् बहुकालपर्यन्तं धरायाः पृथिव्याः भूरिभरेणातिभारेण आर्ता पीडिता मूर्तिः शरीरं यस्य सः, अत एव हरित्करिषु दिग्गजेषु अर्पितं समर्पितं नैजं स्वकीयं कृत्यं पृथ्वीधारणरूपं येन तथाभूतः सन् श्रमक्षयाय पृथ्वीधारणायासपरिहाराय, सः प्रसिद्धः शेषः अनन्तः सेतुमिषेण सेतुव्याजेन शीते अर्णववारि समुद्रजले, रेफान्तोयं शब्दः । शेते शयनं करोति किम् ? उत्प्रेक्षालंकारः ॥ ४८५ ॥

**य इति** । यः सेतुः पुरा रामावतारे पापानां दशकं, तस्य त्रिविधकायिक-चतुर्विधवाचिक-त्रिविधमानसिकेति भेदेन दशसंख्याकपापानामित्यर्थः । तानि स्कान्दे यथा—" अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥ पारुष्यमनृतं चैवं पैशून्यं चापि सर्वशः । असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम् । वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ॥ " इति । दशसंख्यानि कानि शिरांसि यस्य सः दशकः पापश्चासौ दशको रावणस्तस्य च छेदे विनाशे साधनतां निखिलवानरसैन्यस्य लङ्कायां प्रापणात् साहाय्यत्वं गतः, सः सेतुः पापानां ब्रह्महत्यादीनां पञ्चकं तस्य भञ्जने विनाशे कथं न शक्तः न समर्थः ? अपि तु शक्त एव स्यादिति तत एव च स स्तुत्य एवेति च भावः ॥ ४८६ ॥

## अथ ताम्रपर्णीवर्णनम् ४०.

इति परावृत्यान्यतोऽवलोक्य सामोदम्—

ताप विलुम्पति नृणामिह ताम्रपर्णी-
त्याख्यां वहन्नघदवानलजृम्भणोत्थम् ॥
पाथोनिधेस्त्रिजगति प्रथितोऽवरोधो
रोधोलसत्परमहर्षमहर्षियूथः ॥ ४८७ ॥

## अथ कुरुकानगरश्रीशठकोपमुनिवर्णनम् ४१.

तदभ्यर्णं निर्वर्ण्य—

चकास्ति कुरुकापुरी शुचिनि ताम्रपर्णीतटे
विरक्तिपरिपक्त्रिमत्रियुगभक्तिभिर्वैष्णवैः ॥
दृढव्रतशठार्युरोबकुलसंपतद्भम्भर—
ध्वनिद्विगुणजृम्भणद्रविडवेदघोषोज्ज्वला ॥ ४८८ ॥

एवं सेतुं संवर्ण्य ततो निवृत्य ताम्रपर्णीत्याख्यां नदीं वर्णयतीत्याह— **इतीत्यादि** ।

**तापमिति** । रोधसोस्तीरयोः लसन्ति शोभमानानि परमहर्षाणां अतिशयानन्दयुक्तानां महर्षीणां यूथानि समूहाः यस्य सः, अत एव त्रिजगति त्रैलोक्ये प्रथितः प्रसिद्धः पाथोनिधेः समुद्रस्य अवरोधः अन्तःपुरस्त्री ताम्रपर्णी इति प्रसिद्धां आख्यां नाम वहन् धारयन् सन्, इह लोके नृणां मनुष्याणां अघानि पापान्येव दवानलस्तस्य जृम्भणात् प्रज्वलनात् उत्थमुत्पन्नं तापं आध्यात्मिकादिरूपं विलुम्पति विनाशयति ॥ ४८७ ॥

एवं ताम्रपर्णी प्रस्तूय तत्समीपवर्तिश्रीशठकोपमुनिं वर्णयितुं प्रस्तौति—**तदित्यादि** । अभ्यर्णं समीपदेशम्—

**चकास्तीति** । शुचिनि पवित्रे ताम्रपर्ण्या नद्यास्तटे तीरे दृढव्रतस्य निर्भरनियमसंपन्नस्य शठारेः एतन्नामकवैष्णवगुरोः उरः स्थिते बकुले बकुलमालायां संपतन्तः संप्राप्नुवन्तः ये बम्भराः भ्रमरास्तेषां ध्वनिभिः गुञ्जारवशब्दैः द्विगुणं जृम्भणं ध्वनिप्रसारणं येषां तैर्द्रविडपठितैर्वेदघोषैः उज्ज्वला कान्तिमती कुरुकाख्या पुरी

अत्रत्यानां धर्मनिरतानां हरिभृत्यानामित्थमनुसंधानम् ॥२०६॥
परिदृष्टवते सहस्रशाखां परमां द्राविडसंहितां हितां नः ॥
गुरवे करवाम नित्यमस्मै शठकोपाय महर्षये प्रणामान् ॥४८९॥
अञ्चाम चिञ्चातरुमद्भुतं तं पञ्चामरद्रूनवधीरयन्तम् ॥
शठारिसंज्ञं किल यस्य मूले तपःफलं किंचिदुदञ्चितं नः॥४९०॥
दिशन् श्रितानाममृतात्मकं फलम्
विलक्षणो भाति स तिन्तिडीतरुः ॥
सहस्रशाखं द्रविडागमं सृजन्
स यस्य मूलं समुपाश्रितो मुनिः ॥ ४९१ ॥

---

नगरी विरक्तैर्विषयवैतृष्ण्याद्धेतोः परिपक्विमा फलाभिमुखा त्रियुगे विष्णौ भक्तिर्येषां तथाभूतैर्वैष्णवैः विष्णुभक्तैः करणैः चकास्ति प्रकाशते ॥ ४८८ ॥

**अत्रत्यानामिति** । अत्रत्यानां कुरुकापुरनिवासिनां धर्मनिरतानां पुण्यकर्मतत्पराणां हरेर्भृत्यानां सेवकानां इत्थं वक्ष्यमाणप्रकारकमनुसंधानं चिन्तनम् ॥ २०६ ॥

**परीति** । सहस्रं चतस्रः शाखा विभागाः यस्यास्तां, सहस्रसंख्यायाश्चतुर्थस्थानत्वाच्चतुर्षु सहस्रशब्दस्यौपचारिकः प्रयोगः । अत एव परमां महतीं द्राविडैः पठनीयां संहितां, नः अस्माकं वैष्णवानां हितां हितकारिणीं परिदृष्टवते सम्यगवगच्छते, 'परिसृष्टवते' इत्यपि पाठः, तत्पक्षे परिसृष्टवते उत्पादयित्रे इत्यर्थः । शठकोपाय गुरवे महर्षये अस्मै नित्यं प्रणामान् नमस्कारान् करवाम कुर्मः । "क्रियार्थोपपदस्य—" इत्यादिना चतुर्थी । 'स्वयंभुवे नमस्कृत्य' इत्यादिवत् । तेन शठकोपायेत्यस्य तमनुकूलयितुमित्यर्थः ॥ ४८९ ॥

**अञ्चामेति** । यस्य चिञ्चातरोर्मूले नः अस्माकं वैष्णवजनानां किंचिदनिर्वाच्यं शठारिसंज्ञं शठारिमुनिरूपमित्यर्थः । तपःफलं उदञ्चितं प्रकटीभूतं किल, तं पञ्च अमरद्रून् मन्दार-पारिजातादिदेववृक्षान् । "पञ्चैते देवतरवो मन्दारः पारिजातकः । संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ।" इत्यमरः । अवधीरयन्तं तिरस्कुर्वन्तं अत एव अद्भुतमाश्चर्यावहं चिञ्चातरुं तिन्तिडीवृक्षं अञ्चाम पूजयाम । 'अञ्चु गतिपूजनयोः' इत्यस्य लोडुत्तमपुरुषः ॥ ४९० ॥

**दिशन्निति** । यस्य तिन्तिडीतरोः मूलं सः प्रसिद्धः सहस्रशाखं द्रविडागमं द्रविडवेदं सृजन्नुत्पादयन् मुनिः शठारिसंज्ञः समुपाश्रितः, सः श्रितानामाश्रितानां अमृतात्मकं मोक्षरूपं पीयूषरूपं च फलं दिशन् समर्पयन् अत एव विलक्षणः आश्चर्यावहः स्वस्य आम्लमयत्वात् अमृतफलप्रदत्वेनेति भावः । तिन्तिडीतरुः भाति शोभते ॥ ४९१ ॥

---

१ 'धर्मनित्यानां'. 'धर्मनित्यानां हरिभृत्यानां'. २ 'परिसृष्टवते'.

हरिमिव कृतावतरणं बकुलाभरणं वृणीमहे शरणम् ॥
ध्येयं यं विदुरार्या मुमुक्षुभिर्यत्प्रबन्धमध्येयम् ॥ ४९२ ॥

तस्मिन्मतिर्मेऽस्तु दृढा शठारौ गायन्त उच्चैरिह यस्य गाथाः ॥
[1]प्रहाय देहं प्रथयन्ति दिव्ये पदेऽहमन्नाद इति प्रगीते ॥ ४९३ ॥

कृतदुरितनिरोधानां कलितश्रुतिमौलिभावबोधानाम् ॥
वशितरमानाथानां न सुधाऽपि समा शठारिगाथानाम् ॥४९४॥

जनानुद्दिश्य—

कठिनशठनरेन्द्रस्तावकान् श्लोकपाशान्
जठरपिठरपूर्त्यै जातु मा संगि[3]रध्वम् ॥

---

**हरिमिवेति**। हरिमिव श्रीविष्णुमिव कृतं अवतरणमवतारो येन सः तं भगवन्तं विष्णुमिव लोकोपकारार्थमाविर्भूतमित्यर्थः । बकुलाभरणं श्रीशठकोपमुनिं शरणं रक्षकं वृणीमहे अङ्गीकुर्मः। किं वा तस्मिन् रक्षणसामर्थ्यं यस्मात्तदङ्गीकार इत्याकाङ्क्षायामाह—यं शठकोपमुनिं आर्याः श्रेष्ठजनाः मुमुक्षुभिः ध्येयं ध्यातुं योग्यं यत्प्रबन्धं यस्य शठकोपस्य ग्रन्थं अध्येयं अभ्यसनीयं च विदुः जानन्ति । एतदेव शरणत्वेन स्वीकारे बलवत्तरं प्रमाणमित्यर्थः ॥ ४९२ ॥

**तस्मिन्निति**। इह लोके यस्य शठारेः गाथाः संहितारूपाः उच्चैरुच्चस्वरेण गायन्तः सन्तः देहं प्रहाय त्यक्त्वा अहमन्नादः इति प्रगीते वर्णिते, यजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यां दशमेऽनुवाके " य एवं वित् । अस्माल्लोकात्प्रेत्य " इत्युपक्रम्य " एतत्साम गायन्नास्ते । हा३वु हा ३ वुहा ३ वु । अहमन्नमहमन्नमहमन्नम् । अहमन्नादोऽहमन्नादो२ऽहमन्नादः ।" इत्युपसंहारपरया श्रुत्येति शेषः । अत एव दिव्ये तेजःसंपन्ने पदे वैकुण्ठस्थाने प्रथयन्ति प्रसिद्धा भवन्ति । तस्मिन् शठारौ शठकोपमुनौ मे दृढा अनन्यविषया मतिः अस्तु ॥ ४९३ ॥

एवं शठकोपं वर्णयित्वा तद्गाथामाहात्म्यं वर्णयति—**कृतेति** । कृतं दुरितानां पापानां निरोधो वारणं याभिस्तासां, कुतः यतः कलितः प्रकटीकृतः श्रुतिमौलीनां उपनिषदां भावस्याभिप्रायस्य बोधो ज्ञानं याभिस्तासां, अत एव वशितः वशीकृतः रमानाथो भगवान् विष्णुर्याभिस्तासां शठारिगाथानां सुधा अमृतमपि समा तुल्या न, का पुनरितरेषां वार्तेति भावः ॥ ४९४ ॥

**कठिनेति**। भो भो जनाः भवन्तः कठिनाः निष्ठुराः अत एव शठाः दुस्तरकरभारादिग्रहणेन वञ्चकाश्च ये नरेन्द्रा राजानः तेषां स्तावकाः वृथैव श्लाघाकारिणस्तान् अत एव श्लोकपाशान् निन्द्यश्लोकान् केवलं जठरपिठरस्य उदरकुण्डस्य " पिठरः स्थाल्युखा कुण्डं " इत्यमरः । पूर्त्यै भरणार्थं जातु कदाचिदपि मा

---

प्पठन्ति'. ३ 'संगदिष्ठाः'.

लुठत दृढतमस्के मा च संसारकूपे
पठत शठजिदुक्तीरश्रमानीतमुक्तीः ॥ ४९५ ॥

कृशानुमामन्त्र्य—

ननु शठकोपाय त्वं प्रणतिं प्राप्ताय भावुकोपायत्वम् ॥
विमलमते! कुरु कायान्निरसितुमंहो विराजते कुरुकायाम् ॥४९६॥

किंच—

बकुलाभरणीयानां गाथानां सन्मुखेन भरणीयानाम् ॥
हरिगृहमध्ये तारस्वरेण पुनते प्रपञ्चमध्येतारः ॥ ४९७ ॥

सश्लाघम्—

विरक्तेरास्थानी मधुमथनभक्तेर्नटनभू-
र्विमुक्तेर्निःश्रेणी सुकृतपरिपक्तेः फलमसौ ॥
प्रपत्तेरुद्यानक्षितिरकृतकोक्तेः प्रियसखी
चिदङ्कूरक्षोणी बकुलधरवाणी विजयते ॥ ४९८ ॥

---

संगिरध्वम् मा उच्चारयत। तथा दृढं गाढं तमोऽज्ञानं यस्मिन् तथाभूते संसारकूपे च मा लुठत मा तिष्ठत। किंतु अश्रमेणानायासेनैव आनीता प्रापिता मुक्तिर्याभिस्ताः शठजितः शठकोपस्य मुनेः उक्तीः गाथाः पठत उच्चारयत ॥ ४९५ ॥

अथ **कृशानुमुपदिशति— नन्विति**। हे विमलमते शुद्धबुद्धे **कृशानो!** त्वं कायात् शरीरात् अंहः पापं निरसितुं निवारयितुं भावुकः कुशलश्चासावुपायः साधनं च "भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्। शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च" इत्यमरात् सुखादयः शब्दाः विशेष्यनिघ्नाः। तत एवात्र भावुकशब्दस्य पुँल्लिङ्गत्वम्। सः तस्य भावः भावुकोपायत्वं प्राप्ताय कुरुकायां नाम नगर्यां विराजते शोभमानाय शठकोपाय मुनये प्रणतिं नमस्कारं कुरु। ननु निश्चयेन। मा तस्मिन् दोषारोपं कार्षीरित्यर्थः ॥ ४९६ ॥

**बकुलेति**। सतां सत्पुरुषाणां सता सद्विद्यादिसंस्कारवत्त्वेनोत्तमेन वा मुखेन भरितुं पठितुं योग्याः भरणीयास्तासां बकुलाभरणः शठकोपमुनिस्तस्येमाः बकुलाभरणीयाः श्रीशठकोपमुनिप्रणीता इत्यर्थः। तासां गाथानां हरिगृहस्य श्रीभगवद्विष्णुमन्दिरस्य मध्ये तारस्वरेण उच्चस्वरेण अध्येतारः अध्ययनकर्तारः जनाः प्रपञ्चं सकलं संसारं पुनते पवित्रीकुर्वन्ति ॥ ४९६ ॥

**विरक्तेरिति**। विरक्तेर्वैराग्यस्य आस्थानी सभा "समज्या परिषद्गोष्ठी सभा-समिति-संसदः। आस्थानी" इत्यमरः। मधुमथनभक्तेर्विष्णुभक्तेः नटनभूः

---

१ 'सन्मुखाब्ज'. २ 'सुकृततरुपक्तेः'.

समन्तादवलोक्य सानन्दं कृशानुमुद्दिश्य—

अभ्यस्तवेदमौलिभ्यः सद्भ्यस्तत्त्वबुभुत्सया ॥
कुरुकापुरवासिभ्यः कुरु कामं नमस्क्रियाः ॥ ४९९ ॥

कृ०—सत्यमेवम् तथापि पुनरतिपतितश्रुतिस्मृतयो यतयोऽपि कतिचिदत्र वर्तन्त इति भातीह नातिमाननीयता ॥ २०७ ॥

तथाहि—

न संध्यासु स्नानं तिसृषु न कमण्डल्वभिधृति—
न चातुर्मास्यादिव्रतमपि न भिक्षाटनविधिः ॥
न लिप्सायास्त्यागो न परिपठनं चोपनिषदाम्
यतित्वं नैतेषां श्रुतिमतमतिक्रम्य चरताम् ॥ ५०० ॥

न केवलमेतावदेव शृणु तावदन्यदपि ॥ २०८ ॥

---

रङ्गभूमिः, विमुक्तेर्मोक्षस्य निःश्रेणी, अधिरोहिणी, सुकृतस्य पुण्यकर्मणः परिपक्तेः परिपाकस्य फलं इच्छितलाभः, प्रपत्तेः शरणागतेः उद्यानक्षितिः उपवनभूमिः, विशिष्टसुखोत्पादकत्वात्। अकृतकायाः अकृत्रिमायाः उक्तेः वेदस्य प्रियसखी, चिदङ्कुरस्य चिन्मयनूतनप्ररोहस्य क्षोणी उत्पत्तिभूमिः, एतदभ्यासादेव चिन्मयब्रह्मज्ञानं प्रादुर्भवतीत्यर्थः । एतादृशी असौ बकुलधरस्य श्रीशठकोपस्य वाणी प्रबन्धरूपा विजयते सर्वोत्कर्षेण वर्तते ॥ ४९८ ॥

**अभ्यस्तेति । हे कृशानो,** त्वमिति शेषः । तत्त्वस्य आत्मयाथार्थ्यस्य बुभुत्सया जिज्ञासया हेतुभूतया अभ्यस्ताः अधीताः वेदमौलयः उपनिषदः यैस्तेभ्यः अत एव सद्भ्यः कुरुकापुरवासिभ्यः कामं यथेच्छं नमस्क्रियाः नमस्कारान् कुरु ॥ ४९९ ॥

**सत्यमिति ।** सत्यमित्यार्धाङ्गीकारे । एवं त्वदुक्तप्रकारेण सत्यं, तथापि अतिपतिताः अतिक्रमिताः श्रुतयः स्मृतयश्च यैस्ते कतिचित् यतयः संन्यासिनोऽपि अत्र कुरुकानगर्यां वर्तन्ते इति हेतोः अतिमाननीयता अतिपूज्यता इह न भाति ॥ २०७ ॥

**नेति ।** श्रुतिमतं वेदमतमतिक्रम्य चरतां एतेषां संन्यासिनां एतत्प्रतिवाक्यान्वयि । तिसृषु संध्यासु प्रातर्मध्याह्न-सायाह्नासु स्नानं यतीनां वेदविहितं न, कमण्डलोः अभिधृतिर्धारणं न, चातुर्मास्यादिव्रतं एकस्मिन्नेव स्थाने संवासादिरूपं एतच्च यतीनां शास्त्रविहितम् । तदपि न, भिक्षाटनं भिक्षार्थं परिभ्रमणं तस्य विधिः न, लिप्सायाः धनवाञ्छायाः त्यागो न, किंच उपनिषदां पठनमपि न, अत एव एतेषां यतित्वं न । ...ायवस्त्रपरिधानादिना बाह्यतः संन्यासित्वेपि न तथाऽन्तत इत्यर्थः ॥५००॥

---

३ 'न भातीह माननीयता'. ४ 'श्रुतिगति'.

संन्यासाश्रममाश्रितोऽपि सकलव्यापारलोपात्मकम्
कैङ्कर्यं चपलो हरेरपदिशन्द्राग्राजधानीं विशन् ॥
अर्थानर्जयति श्रितोर्जितमठो मृष्टान्नमश्नात्यसौ
को मृष्येदिह राम! राम! तदिदं कष्टं कलेश्चेष्टितम् ५०१

किं बहुना—

अन्याय्यमस्ति किमितोऽपि हते कलौ यत्
संन्यासिनो विदधते गृहिणां प्रणामान् ॥
एतत्तु चेत इह कृन्तति वैष्णवोऽसा-
वित्यत्र शूद्रममतिर्नमति द्विजो यत् ॥ ५०२ ॥

**वि०**—सखे मैवं संभाषिष्ठाः ॥ २०९ ॥

इच्छन्तु हन्त यतिनः कतिचिद्धनौघ-
मुज्झन्तु भैक्ष्यचरणं कलयन्तु मा वा ॥

---

**संन्यासेति** । सकलाश्च ते व्यापारा धनार्जनादिरूपाश्च तेषां लोपः शास्त्रतस्त्याग एवात्मा स्वरूपं यस्य तं संन्यासाश्रमं आश्रितोऽपि चपलः द्रव्याशाधीनत्वाच्चञ्चलान्तः-करणः हरेर्भगवतः कैङ्कर्यं दास्यं अपदिशन् निमित्तीकुर्वन् सन्, द्राक् शीघ्रमेव राजधानीं राजनिवासनगरीं विशन् प्रविशन् संश्च अर्थान् द्रव्याण्यर्जयति संपाद-यति । नैतावदेव, किंतु श्रितः निवासार्थमाश्रितः ऊर्जितः सुभगशिला-भित्त्यादिसं-पन्नः मठः येन तथाभूतः सन्, असौ यतिः मृष्टान्नं मधुरान्नं अश्नाति भुनक्ति । तत् तस्मात् इदं कलेः कलियुगस्य, क्वचित् ‘यतेः’ इत्यपि पाठः । अर्थात् कलि-युगसंबन्धियतेः चेष्टितं कष्टं अन्याय्यम् । अत एव इह लोके को जनः मृष्येत् सहेत ? राम ! राम ! इति खेदे ॥ ५०१ ॥

किंच **अन्याय्यमिति** । संन्यासिनः गृहिणां गृहस्थाश्रमिणां प्रणामान् नम-स्कारान् विदधते कुर्वन्ति इति यत्, इतोऽप्यस्मादपि हते दुष्टे कलौ युगे अन्याय्यं किमस्ति ? नान्यत् किमपीत्यर्थः । किंच एतस्मादपि अन्यद्दुश्चरितं शृण्वित्याह— **एतत्त्विति** । असौ शूद्रः वैष्णवः विष्णुभक्तः इति मत्वा, अत्र कुरुकानगर्यां अम-तिर्मन्दबुद्धिः स्वयं द्विजो ब्राह्मणोऽपि सन्, शूद्रं नमति नमस्करोतीति इयत् एतत्तु द्विजेन शूद्रनमस्काराचरणं च, इह नगर्यां चेतः चित्तं कृन्तति त्रोटयति ॥ ५०२ ॥

अथ धनार्जनादिरूपं यतिनामारोपितं दोषमुद्धारयन्नाह—**इच्छन्त्विति** । हन्तेति हर्षे । कतिचित् यतिनः न तु सर्वे । धनौघं द्रव्यसंचयं इच्छन्तु, उज्झन्तु त्यजन्तु वा । तथा भैक्ष्याचरणं च मा कलयन्तु न कुर्वन्तु । किं तु ते यतयः

---

१ ‘यतेश्चेष्टितं’. २ ‘कलौ युगे यत्’. ३ ‘इत्यान्ध्र.’ ४ ‘मुञ्चन्तु हन्त यतयः कतिचिद्व्रतौघान्’. ५ ‘ऋच्छन्तु’. ६ ‘कलयन्तु वामी’.

हर्यङ्घ्रिपङ्करुहकिङ्करतारताश्चे-
देङ्कप्रसक्तिरकलङ्कहृदां क ? तेषाम् ॥ ५०३ ॥

यत्पुनरभिहितं फणिवर्यपर्यङ्ककैङ्कर्यार्थं पर्यटनमपि तुर्याश्रमाननुगुणमिति तदपि निपुणनिरूपणविरहविजृम्भितम् ॥ २१० ॥

केचन पङ्कजलोचनकैङ्कर्यायैव पर्यटाट्यन्ते ॥
संन्यासिन इह धन्यास्ते हि स्वत उपगतस्पृहाविरहाः ॥५०४॥

इत्थं हि हेयोपादेयविद उदाहरन्ति ॥ २११ ॥

भोगायैव नितम्बिनीपरिणयो यागाहृतिः ख्यातये
स्वार्थे पाककृतिः कुपात्रविषये त्यागार्थमर्थार्जनम् ॥

---

हरेर्विष्णोरङ्घ्री चरणावेव पङ्करुहे कमले, पङ्करुह इति प्रामादिकम् । "तत्पुरुषे कृति- " इत्यलुग्विधानात् । " पङ्केरुहं तामरसं " इत्यमरोऽपि । बाहुल्याद्वा कथंचित् समाधेयम् । तयोः किङ्करतायां दास्ये रतास्तत्पराश्चेत् यदि भवेयुस्तर्हि, तत एव अकलङ्कं दोषरहितं हृदन्तःकरणं येषां तेषां यतीनां अङ्कस्य कलङ्कस्य "उत्सङ्ग-चिह्नयो-रङ्कः कलङ्कोऽङ्कापवादयोः । " इत्यमरः । प्रसक्तिः संबन्धः क संभवति ? हरिभक्तिप्रभावादेव धनार्जनादिरूपाः क्षुद्रदोषा नश्यन्तीति भावः । तदुक्तं भगवतैव— " अपि चेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः— " इत्यादि ॥ ५०३ ॥

**यदिति** । यत् पूर्वं फणिवर्यः शेषः पर्यङ्कः शयनं यस्य तस्य विष्णोः कैङ्कर्यार्थं दास्यार्थं पर्यटनं परिभ्रमणमपि तुर्याश्रमस्य चतुर्थाश्रमस्य अननुगुणमयोग्यमिति यदभिहितं 'संन्यासाश्रममाश्रितोऽपि—' इत्यादिना प्रतिपादितं तत्प्रतिपादनमपि निपुणं सविवेकं यन्निरूपणं अवलोकनं तस्य विरहेणाभावेन विजृम्भितं समुल्लसितम् ॥ २१० ॥

**केचनेति** । केचन संन्यासिनः पर्यटाट्यन्ते पुनःपुनरतिशयेन वा परिभ्रमन्ति, राजधानीमिति शेषः । 'अट गतौ ' इत्यस्मात् यङि रूपम् । ते पङ्कजलोचनस्य भगवतो विष्णोः कैङ्कर्यायैव दास्यार्थमेव, एवकारेणेतरदोषारोपव्यवच्छेदः । अत एव स्वतः उपगतः प्राप्तः स्पृहायाः इच्छायाः विरहः अभावो येषां तथाभूताः निःस्पृहा इत्यर्थः । सन्ति । अत एव च ते इहलोके धन्याः सुकृतिनः हि एव ॥५०४॥

**इत्थमिति** । हेयं त्याज्यं उपादेयं ग्राह्यं च ते उभे विदन्ति जानन्तीति तद्विदः ते, इत्थं वक्ष्यमाणप्रकारेण उदाहरन्ति कथयन्ति ॥ २११ ॥

**भोगेति** । यदि नितम्बिन्याः स्त्रियाः परिणयः विधिवत् पाणिग्रहः भोगायैव ाचर्यते तदा दुष्येत् निन्द्यो भवेत् प्रत्यवायमुत्पादयेदिति वा । दुष्येदिति च प्रतिवाक्यमन्वेतव्यम् । न तु संतत्यै

---

३ 'स्वार्थः'. ४ 'विषय'.

स्वाध्यायाध्ययनं प्रतिग्रहकृते वादाय शास्त्रश्रमो
दुष्येत्स्वोदरपूर्तये[1] यदि हरेः कैङ्कर्यमाचर्यते ॥ ५०५ ॥

अन्यच्च—

भूयोदोषैरपि परिवृतः पूरुषः सात्विकानाम्
प्रायः पूज्यो भवति भगवद्भक्तिमासाद्य हृद्याम् ॥
आक्रान्ताऽपि प्रबलभुजगैः कण्टकैरप्यनल्पैः
किं नादृत्या सुरभिकुसुमा केतकी भाग्यभाजाम्[2] ॥ ५०६ ॥

## अथ पाण्ड्य-चोलदेशनिवासिस्मार्त-शैवादिवर्णनम् ४२.

इत्यन्यतोऽभिक्रामन् समन्तादवलोक्य साञ्जलिबन्धम्—
क्रियासार्थितवेदेभ्यो ग्राहयद्भ्यः श्रुतीर्बहून् ॥
पाण्ड्य-चोलनिवासिभ्यः पण्डितेभ्यो नमोऽस्तु वः ॥ ५०७ ॥

---

अग्निहोत्राद्याश्रमधर्माय वा; यागानां ज्योतिष्टोमादीनां आहृतिरनुष्ठानं ख्यातये कीर्त्यर्थं न तु स्वर्गाद्यर्थं; पाकस्य कृतिः निष्पादनं स्वार्थे स्वभक्षणार्थं न तु पञ्चयज्ञाद्यर्थं; अर्थार्जनं द्रव्यसंपादनं कुपात्रविषये कुत्सितवेश्यादिजनविषये त्यागार्थं समर्पणार्थमेव, न तु धर्मार्थं; स्वाध्यायस्य वेदस्य अध्ययनमभ्यासः प्रतिग्रहकृते परदत्तद्रव्यादिग्रहणार्थं, न तु स्वीयानुष्ठानोपयोगिकर्मज्ञानाद्यर्थं शास्त्रेषु व्याकरण-तर्क-मीमांसादिषु श्रमोऽभ्यासः वादाय, न तु तत्त्वावबोधाय; तथा हरेः कैङ्कर्यं दास्यं स्वोदरपूर्तये आचर्यते तदादुष्येदिति हेयोपादेयविद उदाहरन्तीति पूर्वेण संबन्धः ॥ ५०५ ॥

**भूय इति** । पुरुषो मनुष्यः भूयोदोषैर्बहुभिर्दोषैः संध्यादिकर्मत्यागादिभिः परिवृतः युक्तोऽपि, सात्त्विकानां सत्त्वप्रधानमनसां शुद्धमानसानामित्यर्थः । जनानां हृद्यां मनोज्ञां भगवति विष्णौ भक्तिं आसाद्य संपाद्य प्रायः बहुधा पूज्यो मान्यो भवति । एतदेव सदृष्टान्तमाह—केतकी प्रबलाः दुर्भरगरलसंपन्नत्वेन प्रकृष्टशक्तिमन्तश्च ते भुजगाः सर्पाश्च तैः अनल्पैर्बहुभिः कण्टकैश्चापि आक्रान्ता व्याप्तापि सुरभीणि सुगन्धीनि कुसुमानि पुष्पाणि यस्याः सा तथाभूता, हेतुगर्भमिदं विशेषणम् । सुरभिकुसुमसंपन्नत्वादित्यर्थः । भाग्यभाजां आदृत्या आदरार्हा न भवति किम् ? अपि त्ववश्यमादर्तव्यैव भवतीत्यर्थः ॥ ५०६ ॥

**क्रियेति** । क्रियाभिः यागाद्यनुष्ठानैः सार्थिताः सफलीकृताः वेदाः यैस्तेभ्यः, बहून् शिष्यवर्गानिति शेषः । श्रुतीर्वेदान् ग्राहयद्भ्यः पाठयद्भ्यः पाण्ड्यश्च चोलश्च

---

१ 'दुष्येच्चोदर'. २ 'भाग्यभाजा'.

# अथ वेदान्तिवर्णनम् ४३.

कृ०—सत्यं पुनर्मह्यमराणामप्येषां न रोचते नमस्क्रिया। यदेतेषु मिथ्यावादिन एव बहुलमुपलभ्यन्ते। अमी खलु प्रामाणिकार्थं दूरीकृत्याप्रामाणिकमर्थमुररीकुर्वन्ति ॥ २१२ ॥

तथाहि—

प्रत्यक्षगोचरमशेषमपि प्रपञ्चं मिथ्येति मायिन इमे प्रतिपादयन्ति ॥
सर्वप्रमाणसरणीमतिवर्तमानं ब्रह्माश्रयन्ति च परं बत निर्विशेषम् ॥ ५०८ ॥

---

देशभेदौ तयोः निवासो वसतिरस्त्येषां तेभ्यः पण्डितेभ्यो वो युष्माकं नमः अस्तु ॥ ५०७ ॥

**सत्यमिति।** सत्यं 'क्रियासार्थित—' इत्यादिनोक्तं तथ्यमेव, पुनः किंतु एषां मह्यमराणामपि ब्राह्मणानामपि, अपिशब्दात्तत्वतस्तेषां पूज्यत्वं सूचितम्। नमस्क्रिया नमस्करणं, मह्यमिति शेषः। न रोचते। यद्यस्मादेतेषु ब्राह्मणेषु मध्ये मिथ्यावादिनः प्रपञ्चमिथ्याभाषिणः, असत्यभाषणशीला एव च बहुलं उपलभ्यन्ते दृश्यन्ते। अमी ब्राह्मणाः खलु प्रमाणेन चक्षुरादीन्द्रियसंनिकर्षेण प्रत्यक्षतया सिद्धः प्रामाणिकः, शास्त्रतः सिद्धश्च तमर्थं शरीरादेः सत्यत्वादिकं कर्तव्यादिकं च दूरीकृत्य परित्यज्य, अप्रामाणिकं "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, न चक्षुषा गृह्यते नापि वाचा, नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन" इत्यादिश्रुतिभिः सर्वप्रमाणागोचरं, स्वकपोलकल्पितं च अर्थं उररीकुर्वन्ति अङ्गीकुर्वन्ति ॥ २१२ ॥

उक्तमेवार्थं विशदीकरोति—**प्रत्यक्षगोचरमिति।** प्रत्यक्षस्य चक्षुरादीन्द्रियजातस्य गोचरं विषयीभूतमपि, सर्वैराकीटपतङ्गमा च देवर्षिभ्यः साक्षात्क्रियमाणतया दुःशकापह्नवमपीत्यहोसाहसमिति भावः। अशेषं सकलं प्रपञ्चं चराचरात्मकं जगत् इमे पुरोदृश्यमाना मायायाः अविद्याया संबन्धो येषां ते मायिनः, संबन्धे मतुप्। स च प्रतिपाद्यप्रतिपादकभावः। मायावादिन इत्यर्थः। पक्षे मायिनः कपटिनः **मिथ्येति** स्वेन रूपेण निस्तत्त्व इति प्रतिपादयन्ति। " सर्वं विकारजातं मायामात्रं " " द्वितीयकारणाभावादनुत्पन्नमिदं जगत् " " इदं प्रपञ्चं नास्त्येव नोत्पन्नं नो स्थितं जगत् " इत्यादिवचनैरिति भावः। पक्षे मिथ्येति परप्रतारणाय वास्तवरूपविपर्यासेन यथा—हीरकादिकं काचत्वेन प्रतिपादयन्ति महत्यारभट्या समर्थयन्ति। किं तर्हि ने ''रमार्थसन्न किमप्यङ्गीकुर्वन्तीत्याकाङ्क्षायामाह—**सर्वप्रमाणेति।** सर्वाणि च —— प्रत्यक्षागमादीनि तत्र प्रत्यक्षाणि चक्षुरादीन्द्रियाणि आगमा- च तेषां सरणीं पद्धतिं अतिक्रम्य वर्तमानं " न

पुनः सरोषम्—

हन्त ! ब्रह्मबन्धव इमे ब्रह्मणे परस्मै द्रुह्यन्ति ॥ २१३ ॥

यतः—

यदेव सर्वज्ञमपास्तदोषं भवार्तिहारि श्रुतमागमान्ते ॥
अज्ञं परं ब्रह्म तदेव भुङ्क्ते[1] संसारतापानिति संगिरन्ते ॥ ५०९॥

---

तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथै-तदनुशिष्यादन्यदेव तद्विदितादथो अविदितादधि । इति शुश्रुम पूर्वेषां ये नस्तद्व्याच-चक्षिरे ।" "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।" इत्या-दिबहुश्रुतेः सर्वप्रत्यक्षागमप्रमाणातीतमित्यर्थः । पक्षे सर्वप्रमाणबहिर्भूतत्वात्स्वक-पोलकल्पितमित्यर्थः । अत एव विशिष्यते इतरव्यावृत्तत्वेन ज्ञायते यैस्ते विशेषाः प्रकाराः । धर्मा इति यावत् । ते निर्गता यस्मात् तन्निर्विशेषम् । पक्षे आदरातिशयप्र-योजकानितरसाधारणप्रशस्तगुणरहितं; परं "इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ।" इत्यादिभगवद्वाक्यप्रामाण्यात्सर्वेभ्यः श्रेष्ठतमं पक्षे कुत्रापि केनाप्यदृष्टपूर्वस्वभावकं सकललोकविलक्षणमिति यावत् । ब्रह्म आश्रयन्ति स्वीकुर्वन्ति । बतेत्यानन्दे खेदे च ॥ ५०८ ॥

ननु परं ब्रह्माश्रयन्ति चेत् का हानिः, सम्यगेव तदित्याशङ्क्याह—**हन्तेति** । ब्रह्मबन्धवः दुष्टब्राह्मणाः परस्मै इन्द्रियसंघातात् परत्र वर्तमानाय ब्रह्मणे पर-मात्मने द्रुह्यन्ति ॥ २१३ ॥

द्रोहप्रकारमेवोपपादयति—**यदेवेति** । आगमान्ते वेदान्ते यदेव ब्रह्म सर्वं जाग्रत्-स्वप्न-सुषुप्त्यात्मकमवस्थात्रयं जानाति अन्तर्यामित्वेन प्रत्यक्षयतीति तथाभूतं सर्गस्थित्यादिकं वा जानातीति । तथा च श्रुतिः— "यः सर्वज्ञः सर्वविद् यस्यैष महिमा भुवि ।" इति । अत एव अपास्ताः निर्गताः दोषाः जन्मादिविकारा यस्मात् तत् "न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ।" इति श्रुतिरत्रार्थे प्रमा-णम् । भवार्तिहारि संसारदुःखनिवर्तकं "ज्ञात्वा स देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्म-मृत्युप्रहाणिः ।" इति श्रुतिरपि । इति श्रुतं आकर्णितं, तदेव परं ब्रह्म अज्ञं जीववत् किंचिज्ज्ञं, अल्पार्थे नञ् । संसारतापान् जन्म-जरा-मरणादीन् भुङ्क्ते इति संगिरन्ते । "ज्ञाज्ञौ द्वावजावनीशावजा ह्येका भोक्तृ-भोगार्थयुक्ता । अनन्त-श्चात्मा विश्वरूपो ह्यकर्ता" । "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ।" इत्यादिबहुलश्रुतिभ्यः प्रति-षादयन्ति । जीव-ब्रह्मणोरैक्यप्रतिपादकानामेतत्कथनं व्याहन्यत इति भावः ॥५०९॥

---

१ 'भोक्तृ'.

न केवलममी परस्मै ब्रह्मणे द्रुह्यन्ति, किंतु तत्प्रमाणेभ्यः श्रुतिभ्योऽपि२१४

यतः—

मिथ्यार्थावेदकत्वात् श्रुतिषु कुमतिभिः कर्मकाण्डे निरस्त-
प्रामाण्ये ब्रह्मकाण्डैः सह गुणवचनैः शेषितो ब्रह्मशब्दः ॥
मिथ्यार्थास्मिन्विभक्तिः प्रकृतिरपि परं ब्रह्म नैवाभिधत्ते
वाच्यत्वानाश्रयत्वात्कथमुपनिषदां मानतां जानतां ते॥५१०॥

परमेते श्रुतिभ्यो न द्रुह्यन्ति, किंतु शारीरकायापि ॥ २१५ ॥

---

**नेति** । तस्मिन् परब्रह्मणि विषये यानि प्रमाणानि यथार्थतद्भावप्रतिपादकानि तेभ्यः, श्रुतिभ्यः उपनिषद्भ्योऽपि द्रुह्यन्ति ॥ २१४ ॥

द्रोहप्रकारमेवाह— **मिथ्येति** । श्रुतिषु कर्म-ब्रह्मपरेषु सर्वेषु वेदवाक्येषु मध्ये मिथ्यार्थानां असत्यार्थानां "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादिश्रुतिभिः स्वर्गप्राप्त्यादिरूपाणां आवेदकत्वाद्बोधकत्वाद्धेतोः कर्मकाण्डे मन्त्रब्राह्मणात्मके ब्रह्मकाण्डैः अपवादरूपोपनिषद्वाक्यैः "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिभिः निरस्तं निवारितं प्रामाण्यं यस्य तथाभूते सति एभिः कुमतिभिः कुत्सितबुद्धिभिः, 'कुं कुत्सितं असत्यं प्रपञ्चं अतन्ति जानन्तीति तैः कुमतिभिः प्रपञ्चमिथ्यात्वज्ञातृभिरित्यर्थः ।' इति भावदर्पणव्याख्यायामर्थान्तरं दृश्यते । तत्पक्षे । 'अत सातत्यगमने' इत्यस्माद्धातोर्गत्यर्थात् औणादिक इप्रत्यय इत्यवगन्तव्यम् । गत्यर्थस्य ज्ञानार्थकत्वं च । गुणवचनैः सगुणेश्वरप्रतिपादकैः कर्मकाण्डवाक्यैः सह ब्रह्म इत्येक एव शब्दः शेषितः एकार्थीकृतः, तत्र प्रमाणत्वेन स्वीकृत इत्यर्थः । उपनिषदां कर्मकाण्डापवादरूपत्वादेतदयुक्तमिति भावः । किंच अस्मिन् ब्रह्मशब्दे विभक्तिः सु औ इत्यादिरूपा मिथ्यार्था निरर्थका । ब्रह्मणः सदैकरूपत्वात् द्वित्वबहुत्वाभावादित्यर्थः । ततश्च प्रकृतिः केवलं विभक्तिरहितं रूपं वाच्यत्वस्य शब्दप्रतिपाद्यत्वस्य अनाश्रयत्वादनधिकरणत्वाद्धेतोः परं ब्रह्म नैवाभिधत्ते नैव बोधयति । ततः ते अद्वैतवादिनः उपनिषदां मानतां प्रामाण्यं कथं जानतां विदन्तु? नैव ज्ञातुं शक्नुवन्तीत्यर्थः ॥ ५१० ॥

**परमिति** । किंच परं अन्यदपि, कथयामीति शेषः । एते केवलं श्रुतिभ्यो वेदेभ्य एव द्रुह्यन्तीत्येतावदेव न, किंतु शरीरमधिकृत्य कृतं शारीरकं श्रीमद्व्यासनिर्मितं ब्रह्मसूत्ररूपं शास्त्रं तस्मै अपि द्रुह्यन्ति । उपनिषत्प्रतिपादितार्थमेव स्पष्टीकर्तुं तत्रभवता व्यासेन ब्रह्मसूत्ररूपं शास्त्रं व्यरचि, तत्रापि द्रोहाचरणमन्याय्यमित्यपिशब्दाद्बोध्यम् ॥ २१५ ॥

परांशरभुवा शास्त्रं ब्रह्मज्ञानाय निर्मितम् ॥
असमञ्जसतां नीतमद्वैतब्रह्मवादिभिः ॥ ५११ ॥

किं च यादृशस्वभावः सर्वेश्वरस्तद्विपरीतमेव तमुशन्ति विरुद्धमतय एते ॥ २१६ ॥

सर्वज्ञमज्ञ इति सर्वपदाभिधेयम्
कस्याप्यवाच्य इति सर्वमहागुणानाम् ॥
स्थानं च निर्गुण इतीह समस्तवेद-
वेद्यं त्ववेद्य इति ते जगदीशमाहुः ॥ ५१२ ॥

किं बहुना—

विविधदुरितव्रातस्फीतस्थिरव्यसनाकुला-
दतिमितमतेर्जीवादेवाभिदां परमेशितुः ॥
अपगतपरिच्छेदामोदाम्बुधेरुपगच्छताम्
मशकशिशुतोऽभेदो न स्यात्कुतो मदहस्तिनः ॥ ५१३ ॥

---

उक्तार्थमेव प्रपञ्चयति— **पराशरभुवेति** । पराशरभुवा श्रीमद्व्यासेन शास्त्रं सूत्ररूपं ब्रह्मणः ज्ञानाय ज्ञानार्थमेव, सकलजीवानामिति शेषः । निर्मितं रचितम् । तदपि द्वे जीव–ब्रह्मरूपे इते गते यस्मात् तद्वीतं द्वीतमेव द्वैतं जीव–ब्रह्मणोर्द्विरूपत्वं तन्न भवतीत्यद्वैतं जीवात्म–परमात्मनोरैक्यरूपं ब्रह्म एकमिति वदन्तीति तद्वादिभिः " आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किंचन मिषत् " " एकमेवाद्वितीयम् " "तत्त्वमसि" इत्यादिबहुलश्रुत्यनुरोधेन जीवात्मनोरेकत्वप्रतिपादकैरित्यर्थः । असमञ्जसतां अयोग्यतां नीतं प्रापितम् ॥ ५११ ॥

**किंचेति** । किंच यादृशस्वभावः तत्त्वतो यत्प्रकाररूपो भगवान् सर्वेश्वरः तस्माद्विपरीतं विरुद्धस्वभावमेव तं सर्वेश्वरं परमात्मानं उशन्ति इच्छन्ति । विरुद्धमतयः एते अद्वैतिनः ॥ २१६ ॥

**सर्वज्ञमिति** । ते अद्वैतवादिनः वस्तुतः सर्वं भूतभविष्यादि जानातीति सर्वज्ञः तं जगदीशं अज्ञः अल्पज्ञः ज्ञातुमशक्यश्च इति, आहुः कथयन्ति । एतदेव सर्वत्रान्वेतव्यम् । सर्वेषां पानां शब्दानां अभिधेयं वाच्यं जगदीशं, कस्यापि पदस्य अवाच्यः इति, सर्वेषां महागुणानां स्रष्टृत्वादीनां स्थानभूतं जगदीशं निर्गुणः सत्त्व-रजआदिगुणरहितः इति, समस्तैः सर्वैरपि वेदैर्वेद्यं ज्ञेयं, तुपदं विरोधसूचकम् । अवेद्यः " विज्ञातारमरे केन विजानीयात् " इत्यादिश्रुतिभिः अज्ञेय इति च आहुः ॥ ५१२ ॥

**विविधेति** । विविधानामनेकेषां दुरितानां पापानां व्रातेन समूहेन स्फीतैः

---

१ 'भोक्तृ, वेद्यं'. २ 'तमुपदिशन्ति'. ३ 'बुद्धयः'. ४ 'तं'.

अपरं च—

दृश्यं मिथ्या दृष्टिकर्ताऽपि मिथ्या
दोषो मिथ्यैवेति या धीरमीषाम् ॥
साधिष्ठानांशेपि किं नेति चिन्ता
साधिष्ठानां पण्डितानामुदेति ॥ ५१४ ॥

वि०—वयस्य ! मैवं महीसुरदूषणेषु विजृम्भिष्ठाः ॥ २१७ ॥

पारम्पर्यत आगतो निजकुले पन्था न हातव्य इ-
त्यद्वैतं परिगृह्य हन्त जगतो मिथ्यात्वमाचक्षताम् ॥

---

प्रवृद्धैः स्थिरैश्च व्यसनैः आकुलात् पीडितात्, अत एव च अतिमितमतेः अल्पल्प-बुद्धेः जीवादेव, एवकारेणात्यन्तानौचित्यं सूचितम् । अपगतः परिच्छेदः परिमितिर्यस्मात् तादृशः य आमोदाम्बुधिः आनन्दसागरः तद्रूपः, अपरिमितानन्दरूप इत्यर्थः । तस्य परमेशितुरीश्वरस्य अभिदामभेदं उपगच्छतां जानतां तेषामद्वैतिनां मशकशिशुतः मशकबालात् मदयुक्तस्य हस्तिनः अभेदः कुतो न स्यात् ? अपि तु “ विद्या-विनयसंपन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः । ” इति गीताप्रामाण्यात् शरीरमात्रभेदेन विरोधेऽपि सर्वत्र जीवसाम्यात् स्यादेवाभेद इति भावः ॥ ५१३ ॥

**दृश्यमिति** । द्रष्टुं योग्यं दृश्यं रज्जु–सर्पादि, शुक्ति–रजतादिकं वा, मिथ्या असत्यं, दृष्टेरयं सर्पः, इदं रजतं, इत्यादिभ्रान्तेः कर्ता आश्रयो देवदत्तादिश्चापि मिथ्या, दोषः पित्तादिश्च मिथ्यैव । अत्र दृश्य-दृष्टिकर्तृ-दोषशब्दैः क्रमेण सकलप्रपञ्च-अन्तःकरणावच्छिन्नचैतन्य-अज्ञानानि ग्राह्याणि । तेनैतत्त्रयमपि ज्ञानोत्तरकाले बाधप्रतीतेर्मिथ्यैवावभासते इत्यद्वैतवेदान्तिनामभिप्रायः । इत्युक्तप्रकारा या अमीषामद्वैतवादिनां धीर्ज्ञानं विद्यते, सा दृश्याद्यंशत्रयेऽपि मिथ्येति बुद्धिः अधिष्ठानं आश्रयः रज्जुः शुक्तिर्वा, परब्रह्म च तस्मिन्नंशेऽपि किं कुतो न भवति ? इत्येवंप्रकारा चिन्ता साधिष्ठानां श्रेष्ठानां पण्डितानां विदुषामुदेति उत्पद्यते । अत्र केचित् ‘अज्ञाननाशात् सत्ये अधिष्ठानांशे सा मिथ्याबुद्धिर्नोत्पद्यते इत्यद्वैतिनामभिप्रायः । अत एव आधिना कामादिमनोव्यथया सहिताः तिष्ठन्तीति साधिष्ठाः गाढाज्ञानिनस्तेषामेवेदृशी चिन्तेति न्यायावतारः ’ इत्याहुः ॥ ५१४ ॥

**वयस्येति** । एवमुक्तप्रकारेण मा विजृम्भिष्ठाः उद्युक्तो मा भव ॥ २१७ ॥

**पारम्पर्यत इति** । निजकुले स्ववंशे परम्परायाः श्रीमद्व्यास–शंकराचार्यादि-[illegible] भावः पारम्पर्यं तस्मादिति ततः आगतः प्राप्तः पन्था अद्वैतमार्गः [illegible] । अन्यथा अतिप्राचीनपरंपरागतसंप्रदायत्यागदोषापातप्रस-[illegible] ः माध्वरामानुजीयादिसंप्रदायवन्नाधुनिकः, केवलं [illegible] नश्रुत्यर्थानुसरणपूर्वकं श्रीमद्व्यास–

अध्येतुं निगमानशेषत ईमान्[1] कर्माणि निर्मातुम-
प्यास्तिक्याच्चतुरा निकाममितरे के? तावदेतादृशाः ॥ ५१५ ॥

किं च—

श्रुतीरध्येतारः किमपि विदितारः[2] प्रतिदिनं
क्रतूनाहर्तारः किमपि जपितारो मनुगणम् ॥
अमी स्मार्ताः श्राद्धान्यपि रचयितारो विधुनते
श्रुतेरप्रामाण्यं प्रसजदननुष्ठापकतया ॥ ५१६ ॥

---

शंकरप्रभृतिभिरीश्वरांशैरेव प्रवर्तित इति प्रतीयते। इति हेतोः अद्वैतं जीवेश्वरयोरैक्यं परिगृह्य जगतः मिथ्यात्वमसत्यत्वं आचक्षतां कथयताम् । एते अद्वैतवादिन इति शेषः। अतिसर्गे लोट्। हन्तेति हर्षे " नेह नानास्ति किंचन " " मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति।" इत्यादिश्रुतिप्रामाण्यात् एकमात्मानं विनाऽन्यत् सर्वमपि जगन्मिथ्यैवेति भावः। किंच एते इमान् प्रसिद्धान् निगमान् स्वस्वशाखीयऋगादिवेदान् अशेषतः मूलमारभ्य समाप्तिपर्यन्तं अध्येतुं अभ्यसितुं, तदुक्तानि कर्माणि नित्य-नैमित्तिकादीनि आस्तिक्यात् अस्ति वेदविहितं सत्यमिति बुद्धिर्येषां ते आस्तिकाः तेषां भावस्तस्माद्धेतोः निकामं यथेच्छं निर्मातुमाचरितुमपि चतुराः कुशलाः इतरे अद्वैतिभ्योऽन्ये एतादृशाः अद्वैतिसमाः के सन्ति? न केपीति भावः। अनेन वैष्णवादयो न तावद्वेदस्यैकं मन्त्रमपि यथार्थतया पठितुं शक्ता इति प्रसिद्धिः सूचिता । दृश्यते हि सांप्रतमप्येवं रीतिः केषुचित् कर्नाटकीयवैष्णवेषु ॥ ५१५ ॥

**श्रुतीरिति**। अमी स्मार्ताः अद्वैतिनः, अत्र स्मार्तपदं अद्वैतिषु योगरूढं पङ्कजादिवदिति बोध्यम्। श्रुतीर्वेदान्, प्रतिदिनं ब्रह्मयज्ञसमये इति शेषः । अध्येतारः पठितारः। न केवलं पठितार एव, किंतु किमपि यथामति विदितारः तदुक्तमर्थमपि जानन्तः, क्रतून् ज्योतिष्टोमादियज्ञान् आहर्तारः कर्तारः, किमपि यथाशक्ति मनुगणं स्वसंप्रदायप्रोक्तं मन्त्रसमुदायं जपितारः जपं कुर्वन्तः, क्वचित् 'ददितारः प्रतिदिनम्' इति पाठः। तत्पक्षे दानं कुर्वाणा इत्यर्थः । श्राद्धानि प्रतिवार्षिकविहितानि पितृतृप्तिकराणि, अपिः समुच्चयार्थकः। रचयितारः कुर्वन्तश्च सन्तः अननुष्ठापकतया अध्ययन-तदर्थज्ञान-होम-जपाद्याचरणाभावतया प्रसजति निकटं प्राप्नोतीति प्रसजत् नित्यं प्राप्नुवत् श्रुतेर्ऋगादेर्वेदस्य अप्रामाण्यं प्रमाणत्वाभावं विधुनते निरस्यन्ति। यथार्थानुष्ठानाभावात् श्रुतेरप्रामाण्यं प्राप्तावसरमिति भावः । अत्र वेदाप्रामाण्यनिरसनद्वारा अद्वैतवादिनां वेदप्रमाणकत्वेन तदुक्तानुष्ठानतया च जगन्मिथ्यात्वादिकाः सकला अपि सिद्धान्ताः सप्रमाणास्तेनैव हेतुना पूर्वोक्तानि सकलान्यपि दूषणानि निष्फलानीति सूचितम्। एवमेव भावदर्पणकृतोप्यभिप्रायः ॥५१६॥

---

१ 'इमे'. २ 'किमपि ददितारः प्रतिदिनम्'.

कृ०—समन्तादवलोक्य—

निस्तुला अप्यमी विषयाः शैवप्रचुरतया न श्लाघामर्हन्ति । अत्र हि तत्त्वहितपुरुषार्थानयथावस्थितानभिदधानाः शैवा विदुषोऽपि विमोहयन्ति ॥ २१८ ॥

तथाहि—

मदनजनके वीतातङ्के महागुणशेवधौ
परमपुरुषे नित्यासक्तां श्रुतिं कमलामिव ।
बत पशुपतौ शूलोपेते मनोभवदाहके
निहितहृदयां शैवा जल्पन्त्यभाग्यहता इवं ॥ ५१७ ॥

---

उक्तार्थाङ्गीकारपूर्वकमाह **कृशानुः—निस्तुला इति ।** अमी विषया देशाः निस्तुला वेदविहितकर्म-ज्ञानविद्बहुजनसत्त्वान्निरुपमा अपि, शिवस्य भक्ताः शैवास्ते प्रचुराः बहुला येषु ते तत्प्रचुरास्तेषां भावस्तत्ता तया हेतुना श्लाघां प्रशंसां नार्हन्ति, तस्याः न योग्या भवन्ति । सन्तु नाम शैवाः किं वा तेन प्रशंसानर्हत्वमिति चेदाह— **अत्रहीति ।** अत्र एषु देशेषु हि तत्त्वतः सत्यतया हिता हितकरा ये पुरुषार्थास्तान् अयथावस्थितान् स्थितिमतिक्रम्य वर्तमानान् विरुद्धस्वभावानिति यावत् । अभिदधानाः प्रतिपादयन्तः सन्तः, क्वचित् 'तत्पदार्थं यथावस्थितमनभिदधानाः' इति पाठः तत्पक्षे तदिति पदस्य शब्दस्य अर्थं ब्रह्मरूपं यथावस्थितं स्थितिमतिक्रम्य वर्तमानं, यथास्थितस्वभावमित्यर्थः । अनभिदधानाः अकथयन्तः सन्त इत्यर्थः । शैवाविदुषोऽपि पुरुषान् किमुतान्यान्, विमोहयन्ति विभ्रमयन्ति ॥ २१८ ॥

मोहनप्रकारमेव स्पष्टतयाह—**मदनजनक इति ।** वीताः गताः आतङ्काः रोगाः दोषाश्च यस्मात् तस्मिन्, महतां स्रष्टृत्व—पालकत्वादीनां गुणानां शेवधौ निधौ मदनस्य कामस्य जनके पितरि परमपुरुषे देवानामपि श्रेष्ठपुरुषे विष्णौ नित्यं संततमासक्तां अनुरक्तां, अत एव कमलां लक्ष्मीमिव स्थितां श्रुतिं सर्वमपि वेदं शूलेन रोगेण, शूलनामकायुधविशेषेण चोपेते युक्ते पशूनां गवादीनां ब्रह्मादिदेवानां च पतिस्तस्मिन् मनोभवस्य मदनस्य दाहके शिवे निहितं अनुरक्तं स्थापितं च हृदयं मनः अभिप्रायश्च यस्याः सा तां श्रुतिं अभाग्येन प्राक्तनदुष्कर्मणा हता नष्टा इव शैवाः जल्पन्ति वर्णयन्ति । अत्र शैवानां तात्पर्यं वर्णितं भावदर्पणकृता तदित्थम्— 'महतां अगुणानां कामक्रोधादीनां शेवधिर्यस्मात्तस्मिन् राग-द्वेषादिजनके अत ...स्य स्मरविकारस्य जनके अत एव विशेषेण इताः प्राप्ताः आतङ्काः तापा-

---

'. २ 'हतामिव'.

सूर्यादारोग्यमिच्छेत्कमपि हुतवहात्सम्पदुल्लासमिच्छे-
दीशानात् ज्ञानमिच्छेदनवधिविभवं मोक्षमिच्छेन्मुकुन्दात् ॥
इत्याद्याः सत्यवाद्यादिममुनिभणितीराकलय्यापि विष्णोः
सेवां शैवास्त्यजन्तो बत भवहतये भावयन्ते भवं ते ॥५१८॥

अपि च—

तद्विष्णोः परमं पदं हि तमसः पारे सदा पश्यता
सान्द्रं सूरिगणेन निर्मलमहानन्दात्मकं शाश्वतम् ॥
अप्रेप्सन्त इमे समेतमनिशं वेतालभूतालिभि-
र्लोकं भीकरमञ्चितुं व्यवसिता माहेश्वरं नश्वरम् ॥ ५१९ ॥

---

यः यस्मात्तस्मिन् तज्जनके " रुक्-ताप-शङ्कास्वातङ्कः " इत्यमरः । परं भृशं अपु-
े अल्पपुरुषे, अनुदरा कन्येत्यादाविव अल्पार्थे नञ्समासः । नित्यं आ ईषदंशेन
न्तां अत एव के चित्ते मलं अपुरुषसंबन्धजन्यदुःखं यस्यास्तथोक्तामिव स्थितां
काश्चित्तात्म-रवि-ब्रह्म-वाताः " इति कोशः । अत एव च अभाग्यहतामिव श्रुतिं
नसि भवन्तीति मनोभवाः कामादयस्तद्दाहके शूलमिव शूलं अज्ञाननाशकं ज्ञानं
नोपेते प्राप्ये इत्यर्थः । पशुपतौ सर्वेश्वरे निहितहृदयां शैवाः जल्पन्ति' इति ॥५१७॥

**सूर्यादिति** । सूर्यात् सूर्यमुपास्य, ल्यब्लोपे पञ्चमी । आरोग्यं इच्छेत्, हुतव-
दग्नेः कमप्यनिर्वचनीयं संपदः धनादिसंपत्तेः उल्लासं विस्तारं इच्छेत्, ईशानात्
गवतः शंकरात् ज्ञानं परमात्मविषयं इच्छेत्, अनवधिर्निःसीमः विभव ऐश्वर्यं
स्मिन् तथाभूतं अनश्वरसुखादिसंपद्युक्तमित्यर्थः । मोक्षं मुक्तिं मुकुन्दात् भगवतः
विष्णोः इच्छेत्, इत्याद्याः सत्यवादिनो यथार्थवक्तारः ये आदिमाः प्रथमाः मुनयः
ास-वाल्मीकादयस्तेषां भणितीर्वाक्यानि "आरोग्यं भास्करादिच्छेत्" इत्याद्याः
कलय्य ज्ञात्वापि शैवाः भवस्य संसारस्य हतये नाशार्थं विष्णोः सेवां परिचर्यां
जन्तः सन्तः, ते भवं शिवमेव भावयन्ते पूजयन्ति । अत्रार्थे शैवानामेवमभि-
यः— " तरति शोकमात्मवित्, ज्ञात्वादेवं मृत्युमुखात् प्रमुच्यते, ज्ञानादेव तु
वल्यम् " इत्यादिबहुलश्रुति-स्मृतिप्रामाण्याज्ज्ञानेनैव मोक्षः, तज्ज्ञानं च "ईशानः
र्वविद्यानामीश्वरः " इत्यादिश्रुतिभ्यः शिवादेव प्राप्नोति ततश्च युक्तमेव तद्भ-
नमिति ॥ ५१८ ॥

**तदिति** । तमसः अज्ञानस्य पारे समाप्तौ सत्यां अज्ञानविनाशे सतीत्यर्थः ।
श्यता अवलोकयता सूरीणां ज्ञानिनां गणेन समुदायेन सनक-नारदादिज्ञानि-
निसमुदायेनेत्यर्थः । सान्द्रं निबिडं व्याप्तमिति यावत् । निर्मलः जन्म-मरणादि-
कारहितश्चासौ महानन्दः अतिशयानन्दश्च स आत्मा स्वरूपं यस्य सः तथाभूतं
त एव शाश्वतं विनाशरहितं अत एव च परमं सर्वोत्तमं, हिः समुच्चायकः । तत्

---

१ 'सूरात्'. २ 'सत्यवाचो हितमुनि'.

**वि०**—सखे गुणग्रहणकुतू[1]हली भूयाः ॥ २१९ ॥

नित्यं कर्म समाचरन्ति निगमान् शास्त्राणि चाधीयते
संतन्वन्ति च सप्ततन्तुनिचयं धिन्वन्ति भक्त्या[2]तिथीन् ॥
साम्बं त्र्यम्बकमर्चयन्ति शुचयः शैवाः सदैवादरा-
देषामीदृश[3]धर्मणां कतिपये दोषा विषह्या न किम् ?॥५२०॥

---

प्रसिद्धं विष्णोः पदं वैकुण्ठं अप्रेप्सन्तः अनिच्छन्तः सन्तः, वेतालः पिशाचसेनानीश्च भूतानि च तेषामालिभिः पङ्क्तिभिः, वेतालो नाम पिशाचसेनापतिरिति हि रुद्रपटले पिशाचसाधनप्रकरणे दृश्यते । "वेतालो नीलदेहोऽसौ पिशाचगणनायकः । सर्वकार्यकरः शंभोः सेनानीः शवभूमिगः ।" इति । एतेन 'वेताला नाम भूतानि' इति भावदर्पणकारोक्तं व्याख्यानं परास्तम् । यद्वा वेतालस्य भूतानामाधिपत्ये सेनानीत्वे वा सत्यपि भूतत्वं पिशाचत्वं वा नापैति। यथा मनुजसेनानेः। प्रत्यक्षशिवसंनिधौ च तदितरक्षुद्रभूतानां प्रयोजनाभावात् युक्तमेव पूर्वोक्तं व्याख्यानमिति समाधेयम् । अनिशं संततं समेतं व्याप्तं अत एव भीकरं सर्वलोकानां भयोत्पादकं, नश्वरं विनाशयुक्तं च महेश्वरस्यायं माहेश्वरः तं लोकं कैलासं अञ्चितुं गन्तुं व्यवसिताः कृतनिश्चयाः इमे शैवाः सन्ति । 'वस्तुतस्तु "यस्य ब्रह्म च विष्णुश्च उभे भवत ओदनः । मृत्युरस्योपसेचनम् । " इति श्रुत्या वैकारिकमूर्तित्रयावसानानां त्रयाणामपि नश्वरत्वेन निर्विकारसदाशिवावासपरमकैलासकाङ्क्षिषु शैवेषूक्तदूषणमारोपितमेवेति ध्येयम्' इति भावदर्पणकारः ॥ ५१९ ॥

**सख इति** । गुणग्रहणे यथार्थगुणाङ्गीकारे कुतूहलं कौतुकं यस्यास्ति स तत्कुतूहली भूयाः भव ॥ २१९ ॥

के वा शैवानां गुणा इत्यपेक्षायामाह— **नित्यमिति** । शुचयः पवित्राः शैवाः सदैव नित्यमेव आदरात् नित्यं संध्योपासनादिकं कर्म सं सम्यक्, न तु यथाकथंचित्, आचरन्ति, निगमान् वेदान् शास्त्राणि च अधीयते अभ्यस्यन्ति, सप्ततन्तूनां नित्य-नैमित्तिकादियज्ञानां निचयं समुदायं संतन्वन्ति सम्यगनुतिष्ठन्ति च, भक्त्या प्रेम्णा अतिथीनभ्यागतान् धिन्वन्ति प्रीणयन्ति, अम्बया भगवत्या पार्वत्या सहितः साम्बः तं त्रीणि अम्बकानि नेत्राणि यस्य सः तं शिवं, भक्त्येत्यत्रापि संबन्धनीयम् । अर्चयन्ति पूजयन्ति । ईदृशाः पूर्वोक्तरीत्या शुद्धाः धर्माः पुण्यकर्माणि येषां "धर्माः पुण्य-यम-न्याय-स्वभावाचार-सोमपाः ।" इत्यमरः । तथाभूतानां "धर्मादनिच् केवलात्" इति समासान्तोऽनिच्प्रत्ययः । एषां शैवानां कतिपये बहुगुणसमवाये द्वि-त्राः दोषाः विषह्याः विशेषेण सहनीया न किम् ? अपि तु "एकोहि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ।" इति न्यायमाश्रित्यावश्यं सह्या इति ॥ ५२० ॥

---

२ 'कर्मणां'.

अन्यच्च श्रोतव्यम् ॥ २२० ॥

स्मरहरपरिचर्या सांप्रतं तन्यते या
जनयति हरिभक्तिं हन्त जन्मान्तरे सा ॥
शमितदुरितवर्गं सा च सूतेऽपवर्गम्
कुत इव फलहानिः? कुर्वतां शर्वपूजाम् ॥ ५२१ ॥

परंतु—

सा रुद्रभक्तिर्वितनोति भद्रं या विष्णुविद्वेषलवासहिष्णुः ॥
त एव धर्माय भवन्ति दाराः कदापि यान्नाभिमृशन्ति जाराः ॥५२२॥

शेषशायिविद्वेष एव हि मूर्धाभिषिक्तो दोषः पुरुषाणाम् ॥ २२१ ॥

पश्य—

नास्तिक्यमावहति नारकमातनोति
प्रौढिं निहन्ति परिलुम्पति संपदं च ॥
आयुः क्षिणोत्युपचिनोति समस्तदोषान्
द्वेषो मुकुन्दविषयो विषयोगतुल्यः ॥ ५२३ ॥

---

किंचैतेषां शिवपूजनं हरिभक्तिजननद्वाराऽपवर्गसाधकमतो महदुपकारकं तदिति वक्तुमवतारयति—**अन्यच्चेति** ॥ २२० ॥

**स्मरहरेति** । सांप्रतमधुना स्मरहरस्य शिवस्य परिचर्या पूजा या तन्यते क्रियते, जनैरिति शेषः । सा । हन्तेति हर्षे । जन्मान्तरेऽन्यस्मिन् जन्मनि हरिभक्तिं विष्णुभक्तिं जनयति उत्पादयति । सा हरिभक्तिश्चापि शमितः विनाशितः दुरितानां पापानां वर्गः समुदायो येन स तं, सकलपापसंबन्धनिवारकमित्यर्थः । अपवर्गं मोक्षं सूते उत्पादयति । तस्मात् शर्वस्य शिवस्य पूजां कुर्वतां जनानां फलहानिः कुतो भवति? अपि तु कुतोऽपि नैव भवतीत्यर्थः ॥ ५२१ ॥

शिवभजनेऽपि विष्णुभजनमावश्यकमन्यथानर्थापात इति वक्तुमाह-**परमिति**—

**सेति** । या रुद्रभक्तिः शिवभक्तिः विष्णौ द्वेषः अप्रीतिस्तस्य लवस्य लेशस्यापि, किमुताधिकस्य, असहिष्णुरसहनशीला, सा भद्रं मोक्षप्राप्तिरूपं कल्याणं वितनोति विस्तारयति। अन्यथाधःपातः स्यादिति भावः । एतदेवार्थान्तरेण द्रढयति—**त एवेति**। यान् दारान् स्त्रियः जाराः परस्त्रीलम्पटाः पुरुषाः कदापि न अभिमृशन्ति न स्पृशन्ति, ते एव दाराः स्त्रियः धर्माय धर्मसाध्यपुरुषार्थाय भवन्ति प्रभवन्ति ॥५२२॥

**शेषशायीति** । पुरुषाणां शेषशायिविद्वेषः विष्णुद्वेष एव हि मूर्धाभिषिक्तः सर्वदोषेभ्योऽधिकः दोषः ॥ २२१ ॥

एतदेव सप्रपञ्चमुपपादयति—**नास्तिक्यमिति** । विषस्य योगेन भक्ष्य-पेयपदार्थसंबन्धेन तुल्यः समः मुकुन्दविषयः श्रीविष्णुविषयः द्वेषः नास्तिक्यं नास्तिपरलोक

कृ०—तथ्यमेव, तथाप्यवैदिकव्रतेष्वेव[1] प्रयततां शिवभक्तिमभिनयतां पाषण्डविशेषाणामेषां वेष एव भीषयति हृदयम् ॥ २२२ ॥

तथाहि—

श्रिताभव्यमार्गाश्चिताभस्मशुष्यन्निटाला जटालाः स्फुटालापशून्याः ॥
स्मशानाग्निसख्या दृशा निर्दहन्तः पिशाचा इवामी दिशासु भ्रमन्ति५२४

किंच—

एषामतिजुगुप्सिता रीतिः ॥ २२३ ॥

पक्षीकृत्य गिरीशं सिद्ध्या रहिताश्च मानहीनाश्च ॥
इच्छन्त्यधिगन्तुमिमे धनंजयं लिङ्गदर्शनेनैव ॥ ५२५ ॥

---

इति मतिं आवहति संपादयति, नारकं दुर्गतिं आतनोति विस्तारयति । पुनः पुनर्नरकमेव प्रापयतीत्यर्थः । प्रौढिं महत्त्वं निहन्ति विनाशयति, क्षुद्रत्वं ददातीत्यर्थः । संपदमर्थसंपत्तिमपि परिलुम्पति परिहरति । आयुर्जीवितकालं क्षिणोति क्षीणं करोति, तथैवं समस्तदोषान् उपचिनोति वर्धयति ॥ ५२३ ॥

**तथ्यमिति** । त्वयोक्तं तथ्यमेव सत्यमेव, तथापि एतेषु शैवेष्वयं प्रकारो न दृश्यते, किंतु अवैदिकानि वेदबाह्यानि यानि व्रतानि केवलं शैवागमप्रोक्तानि तेष्वेव प्रयततां प्रयत्नं कुर्वाणानां पाषण्डविशेषाणां वेददूषकभेदानां जनानां शिवभक्तिं अभिनयतां प्रकटीकुर्वतां एषां शैवानां वेषः जटा-भस्मादिधारणरूपः दिगम्बरत्वादिरूपश्च, हृदयमन्तःकरणं भीषयत्येव ॥ २२२ ॥

**श्रितेति** । श्रितः अङ्गीकृतः अभव्यः अकल्याणकरः मार्गः यैस्ते, चितायाः भस्मना शुष्यत् शुष्कीभवत् निटालं भालं येषां ते, जटालाः जटायुक्ताः, स्फुटः स्पष्टः श्रवणयोग्यः य आलापो भाषणं तेन शून्याः रहिताः, स्मशानाग्नेः सख्या मित्रभूतया तत्सदृश्या अतिरक्तवर्णयेत्यर्थः । दृशा लोचनेन निर्दहन्त इव सन्तः, अमी पाषण्डाः पिशाचा इव दिशासु दशसु भ्रमन्ति पर्यटन्ति ॥ ५२४ ॥

**एषामिति** । एषां पाषण्डानां अतिजुगुप्सिता अतीव निन्द्या रीतिः ॥ २२३ ॥

तामेव स्पष्टतया प्रतिपादयति—**पक्षीकृत्येति** । मानेन अभिमानेन, वह्निव्याप्यधूमवानयं पर्वतः इत्यनुमानेन च हीना रहिताः अत एव सिद्ध्या फलनिष्पत्त्या, पर्वतो वह्निमान् इति निश्चयेन च रहिताः इमे पाषण्डाः लिङ्गस्य शिवलिङ्गस्य धूमरूपस्य च दर्शनेनैव दर्शनमात्रेणैव गिरीशं शिवं पर्वतं च पक्षीकृत्य इष्टदेवत्वेनाश्रित्य, पक्षताश्रयं च कृत्वा, धनं द्रव्यं जयमुत्कर्षं च, धनंजयमग्निं च अधिगन्तुं प्राप्तुं इच्छन्ति ॥ ५२५ ॥

---

१ 'सत्यमेव तथाप्यवैदिकवृत्तिष्वेव प्रयियासतां'.

अन्ये चात्र—

दीर्घवक्रनखरं[1] खरकल्पा उद्धरन्त इव बाहुयुगं ते ॥
शौचमाचरितुमप्यसमर्था नीचबुद्धिहृदया विहरन्ति[2] ॥ ५२६ ॥

वि०—विमृश्य—

सखे गुणग्राहिणा नैतेऽपि दूषणीयाः ॥ २२४ ॥

शीतोष्णजृम्भणसहेषु जितेन्द्रियेषु
कष्टोपवासपरिशुष्ककलेवरेषु
पुण्यस्थलाटनपराकृतकिल्बिषेषु
जानीहि कानपि गुणान् जटिलेष्वमीषु ॥ ५२७ ॥

---

## अथ ज्यौतिषिकवर्णनम् ४४.

इत्यन्यतो वीक्ष्य साशङ्कम्—

क इमे पुस्तकहस्ताः कल्य एवोत्थाय तत इतः पर्यटन्ति ? ॥ २२५ ॥

---

**दीर्घेति ।** दीर्घाणि आयतानि वक्राणि कुटिलानि च नखानि यस्मिन् तत् बाहुयुगं भुजद्वयं, ते पाषण्डाः उद्धरन्तः उत्क्षिपन्त इव सन्तः, अत एव खरकल्पाः गर्दभतुल्याः शौचमप्याचरितुं असमर्थाः, नीचा हीना बुद्धिर्निश्चयो यस्मिन् तादृशं हृदयमन्तःकरणं येषां तथोक्ताः सन्तः विहरन्ति इतस्ततः क्रीडन्ति ॥ ५२६ ॥

**सख इति ।** गुणग्राहिणा "गुण-दोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः । शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ।" इति न्यायेन दोषसत्त्वेऽपि गुणमात्रस्वीकारपरेण पुरुषेण एते पाषण्डा अपि, अपिना दोषबाहुल्यं द्योत्यते । न दूषणीयाः ॥ २२४ ॥

**शीतोष्णेति ।** शीतं वर्ष-वातादि च उष्णं आतपादि च तयोः जृम्भणं अतिशयत्वं सहन्तीति तत्सहास्तेषु, अत एव जितेन्द्रियेषु कष्टाः दुःखप्रदा ये उपवासाः प्रदोष-शिवरात्र्यादिष्वनशनव्रतरूपास्तैः परिशुष्कं कृशीभूतं कलेवरं शरीरं येषां तथाभूतेषु पुण्यस्थलेषु वाराणसी-गोकर्ण-रामेश्वरादिक्षेत्रेषु अटनेन यात्रार्थं भ्रमणेन पराकृतं निरस्तं किल्बिषं पापं यैस्तेषु अमीषु जटिलेषु कानपि वक्तुमशक्यान् गुणान् जानीहि अवगच्छ । नहि तावदेतत्कष्टोपवासादि गृहिभिर्विषयिजनैश्च कर्तुं शक्यं तस्मादेते पूज्या एवेति भावः ॥ ५२७ ॥

**क इति ।** इमे पुस्तकं पञ्चाङ्गादिकं हस्ते येषां ते जनाः कल्ये प्रातःकाले एवोत्थाय तत इतः गेहाद्गेहं पर्यटन्ति, भ्रमन्ति, ते के ? ॥ २२५ ॥

---

१ 'नखराः'. २ 'नीचबुद्धिहृदयं भ्रमयन्ति'.

कृ०—निपुणमवलोक्य सपरिहासम्—

ज्योतिःशास्त्रमहोदधौ बहुतरोत्सर्गापवादात्मभिः
कल्लोलैर्निबिडे कणान् कतिपयान् लब्ध्वा कृतार्था इव ॥
दीर्घायुः-सुत-संपदादिकथनैर्दैवज्ञपाशा इमे
गेहंगेहमनुप्रविश्य धनिनां मोहं मुहुः कुर्वते ॥ ५२८ ॥

किंच—

विलिखति सदसद्वा जन्मपत्रं जनानाम्
फलति यदि तदानीं दर्शयत्यात्मदाक्ष्यम् ॥
न फलति यदि लग्नं द्रष्टुरेवाह मोहं
हरति धनमिहैवं हन्त ! दैवज्ञपाशः ॥ ५२९ ॥

---

**ज्योतिरिति**। बहुतराः अतिबहुलाः उत्सर्गाः सामान्यवचनानि अपवादाः विशेषवचनानि च आत्मा स्वरूपं येषां तथाभूतैः, अतिशयोत्सर्गापवादवचनरूपैरित्यर्थः। कल्लोलैस्तरङ्गैः निबिडे परिपूर्णे ज्योतिःशास्त्रं प्राणिनां ग्रहाद्यानुकूल्य-प्रातिकूल्यज्ञापनद्वारा शुभाशुभफलप्रतिपादकं ग्रहनक्षत्रस्वरूपगत्यादिज्ञापकं च शास्त्रं स एव महोदधिः समुद्रस्तस्मिन् कतिपयान् अत्यल्पान् द्वि-त्रान् कणान् लेशान् लब्ध्वा प्राप्य, अतिविशालज्योतिःशास्त्रस्य यत्किंचिदंशमधीत्येति यावत्। कृतार्थाः कृतकृत्या इव वर्तमानाः इमे कुत्सिता दैवज्ञाः ज्यौतिषिकाः दैवज्ञपाशाः, याप्ये पाशप्। गेहं गेहं प्रतिगृहं अनुप्रविश्य दीर्घायुः-सुत-संपदादिकथनैः कस्यचित् दीर्घायुष्यकथनेन, कस्यचित्सुतार्थिनः 'तव सद्गुणसंपन्नः पुत्रः स्यात्' कस्यचिद्दरिद्रस्य त्वं 'अग्रे बहुतरद्रव्यसंपन्नो भविष्यसि' इत्यादि कथनमूह्यम्। धनिनां द्रव्यवतां मुहुर्वारंवारं मोहं कुर्वते। इमे भविष्यच्छुभकथनेनातीव विद्वांस इति भ्रान्तिमुत्पादयन्तीत्यर्थः ॥ ५२८ ॥

**विलिखतीति**। किंच अयं दैवज्ञपाशः ज्यौतिषिकाधमः जनानां सत् यथार्थफलज्ञापकं असत् अयथार्थफलं वा कथमपि जन्मपत्रं विलिखति। तच्चाग्रे यदि कदाचिद्दैववशतः फलति स्वलेखनानुरूपफलप्राप्तिर्भवति चेत्, तदा आत्मनः दाक्ष्यं भविष्यत्फलकथनचातुर्यं दर्शयति। यदि च लग्नं न फलति तदा द्रष्टुर्जन्मकालीनलग्नादिकं पश्यत एव मोहं अज्ञानं आह कथयति। अस्य जन्मकालीनलग्नादि सम्यङ् न ज्ञातं भवद्भिस्तस्माद्भवतामेवायं दोषो न ममेति वदतीत्यर्थः। एवं इह लोके मिति शेषः। धनं हरति। हन्तेति खेदे ॥ ५२९ ॥

अपि च—

प्रमोदे[1] खेदे वाऽप्युपनमति पुंसो विधिवशा-
न्मयैवं[2] प्रागेवाभिहितमिति मिथ्या कथयति ॥
जनानिष्टानिष्टाकलनपरिहारैकनिरता-[3]
नसौ मेषादीनां परिगणनयैव भ्रमयति ॥ ५३० ॥

अस्तु वा तथ्यवादी दैवज्ञस्तथापि वृथा तद्वचःश्रवणम् ॥ २२६ ॥

तथाहि—

असुखमथ सुखं वा कर्मणां पक्तिवेला-
स्वहह! नियतमेते भुञ्जते देहभाजः ॥
तदिह पुरत एव प्राह मौहूर्तिकश्चेत्
कथय फलममीषामन्ततः किं ततः स्यात्? ॥ ५३१ ॥

---

**प्रमोद इति**। पुंसो जनस्य विधिवशाद्दैववशादेव न तु स्वकथनेन, प्रमोदे आनन्दे वाऽथवा खेदे दुःखे उपनमति प्राप्नुवति सति, इदं सुखं दुःखं वा मया प्रागेव प्राप्तकालात् पूर्वमेव अभिहितं कथितं इत्येवं मिथ्या असत्यं कथयति। इष्टं सुखादि अनिष्टं दुःखादि च तयोः आकलनं स्वीकारः परिहारः निवारणं च तयोः एकं मुख्यं यथा स्यात् तथा निरतानासक्तान्, सुखस्याङ्गीकारे दुःखस्य परिहारे च तत्परानिति यथायथमूह्यम्। जनान् असौ ज्यौतिषिकः मेषादीनां राशीनां परिगणनया संख्यानेनैव भ्रमयति विमोहयति। 'तव जन्मराशेः सकाशाद्द्व्यादेर्ग्रहस्येष्टफलप्रतिपादके एकादशादिस्थाने प्रवेशात् सुखोत्पत्तिः, जन्म-चतुर्थादिस्थानप्रवेशाच्चानिष्टफलप्राप्तिः' इत्यादिकथनेन भ्रमयतीत्यर्थः ॥ ५३० ॥

**अस्त्विति**। किंच दैवज्ञः तथ्यवादी सत्यवक्ता, वाऽप्यर्थकः। अस्तु तथापि तस्य वचसो भाषणस्य श्रवणं वृथा निष्फलमेव ॥ २२६ ॥

वृथात्वमेवाह—**असुखमिति**। एते दृश्यमाना देहभाजः प्राणिनः कर्मणां पूर्वजन्मकृतानां पक्तिवेलासु फलनिष्पत्तिकालेषु असुखं दुःखं अथवा सुखं च नियतं नियमेनैव भुञ्जते। अहहेत्याश्चर्ये। तदेव सुखं दुःखं वा मौहूर्तिको ज्यौतिषिकः इह पुरतः तत्प्राप्तेः प्रागेव प्राह कथयति चेत्, ततः अग्रिमसुख-दुःखादिकथनात् अमीषां देहभाजां फलं अन्ततः अन्तकालपर्यन्तं किं स्यात्? कथय। प्राणिनामिष्टानिष्टप्राप्तिः स्वस्वकर्मानुसारेणैव भविष्यति ज्यौतिषिकादिकथनेन किमप्यन्यथा न भवेदित्यर्थः ॥ ५३१ ॥

---

१ 'प्रमोदः खेदो वा'. २ 'मयेदं'. ३ 'नियतान्'.

वि०—ऐहिकामुष्मिककर्मारम्भोपयोगिनो नोपालम्भमर्हन्ति ज्योतिर्विदः ॥ २२७ ॥

शृणु तावत्—

न दैवं न पित्र्यं च कर्मात्र सिध्येन्न यत्रास्ति देशे ननु ज्योतिषज्ञः ॥
न तारा न चारा नवानां ग्रहाणां न तिथ्यादयो वा यतस्तत्र बुद्धाः ५३२

यच्च समर्थितं मौहूर्तिकवचनिशमनं मुधेति तन्निपुणनिरूपणा न भणन्ति ॥ २२ ॥

यतः—

भानोः शीतकरस्य वापि भुजगग्रासे पुरो निश्चिते
तीर्थानामटनं जनस्य घटयेत्तापत्रयोच्चाटनम् ॥

---

**ऐहिकेति**। इहलोके भवान्यैहिकानि अमुष्मिन् परलोके भवान्यामुष्मिकाणि च यानि कर्माणि तेषामारम्भे उपयोगिनः भविष्यदिष्टानिष्टकथनेनेति भावः। ज्योतिर्विदः ज्योतिःशास्त्रवेत्तारः उपालम्भं निन्दां नार्हन्ति निन्दितुं न योग्या भवन्ति ॥ २२७ ॥

ज्योतिर्विदां सर्वाण्यपि दूषणानि परिहरन् प्रथमं तावत्तेषामुपयोगमाह—**नेति**। ननु इति आमन्त्रणे। हे **कृशानो**। इत्यर्थः। यत्र यस्मिन् देशे ज्योतिषं ग्रह-नक्षत्रादीनां स्वरूप-गत्यादिज्ञापकं शास्त्रं जानातीति तज्ज्ञः नास्ति न विद्यते, अत्रास्मिन् ज्योतिर्विदभाववति देशे दैवं देवसंबन्धि कर्म पूजादिकं एकादश्युपवासादिकं च सम्यक् तिथ्यादिज्ञानाभावात् न सिध्येत्, तथा पित्र्यं पित्रुद्देशेन कर्तव्यं श्राद्धादिकं चापि न सिध्येत्। अत्रापि पूर्वोक्त एव हेतुर्ज्ञेयः। किंच ताराः नक्षत्राणि न सिध्येयुः, तेषां स्वरूपज्ञानाभावादित्यर्थः। तथा नवानां नवसंख्याकानां ग्रहाणां रव्यादीनां चारा मेषादिराशिप्रवेशाश्च न सिध्येयुः, तिथ्यादयः प्रतिपदादितिथयः आदिशब्देन योग-करणादीनां संग्रहः। न सिध्येयुः। वाऽप्यर्थकः। यतः कारणात् तत्र दैव-पित्र्यादिकर्मसु ज्योतिर्विद इति शेषः। बुद्धाः ज्ञानवन्तः सन्ति। तस्मात् तेषामभावात् क्वापि दैव-पित्र्यादिकर्मोपयोगि कालज्ञानं नोत्पद्येतेत्यर्थः। क्वचित् 'यतोऽत्रैष बुद्धः' इति पाठः। पूर्वसंबन्धदर्शनेन स एव युक्त इति भाति। परं च प्राचीनपुस्तकेषु तस्याभावात् स नादृतः ॥ ५३२ ॥

**यच्चेति**। मौहूर्तिकानां ज्योतिर्विदां वचनस्य भाषणस्य निशमनं श्रवणं मुधा व्यर्थमेव इति च यत् समर्थितं प्रतिपादितं तत् निपुणं युक्तायुक्तविवेकपूर्वकं निरूपणं भाषणं येषां ते न भणन्ति न प्रतिपादयन्ति ॥ २२८ ॥

तत्कारणमुपपादयति—**भानोरिति**। भानोः सूर्यस्य शीतकरस्य चन्द्रस्य वापि, ...टिल्येन गच्छतीति भुजगस्तेन 'भुजो कौटिल्ये' इति धातोः 'अन्यत्रापि—'

---

२ 'यतोत्रैष बुद्धः'. ३ 'वचःश्रवणं'. ४ 'पणायन्ति'.

इष्टे प्रागवधारिते सति धृतेस्तुष्टेश्च लाभो भवे-
　　द्दृष्टे[1] तु व्यसनेऽत्र तत्परिहृतिः कर्तुं जपाद्यैः क्षमा ॥५२३॥
अविस्रम्भश्च दैवज्ञवचनेष्वनुपपन्नः ॥ २२९ ॥
वृद्धि[2]-ह्रासौ कुमुदसुहृदः पुष्पवन्तोपरागः[3]
　　शुक्रादीनामुदयविलयावित्यमी सर्वदृष्टाः ॥
आविष्कुर्वन्त्यखिलवचनेष्वत्र कुम्भीपुलाक-
　　न्यायाज्ज्योतिर्नयगतिविर्दां[4] निश्चलं मानभावम् ॥ ५२४ ॥

---

इत्यनेन डप्रत्ययः । राहुणा केतुना वा ग्रासे, चन्द्र-सूर्यग्रहणे इत्यर्थः । पुरः ग्रासकालात् पूर्वमेव निश्चिते ज्ञाते सति, ज्यौतिषिकेनेति शेषः । तापत्रयस्य आध्यात्मिकादिदुःखत्रयस्य उच्चाटनं निर्मूलनं यस्मात् तत्, तापत्रयनाशकरमित्यर्थः । तीर्थानां गङ्गादीनां यात्रार्थमिति शेषः । अटनं भ्रमणं जनस्य घटयेत् संपादयेत् । किंच ग्रहाणामानुकूल्येन इष्टे अभीष्टफले प्राक् तत्प्राप्तिकालात् पूर्वमेव अवधारिते निश्चिते सति धृतेर्धैर्यस्य तुष्टेः संतोषस्य च लाभः भवेत् । व्यसने दुःखे ग्रहाणां प्रातिकूल्येनेति शेषः । दृष्टे प्राग्गणितेन ज्ञाते सति तु, अत्र तस्य व्यसनस्य परिहृतिः परिहारः जपाद्यैः तत्तदनिष्टग्रहमन्त्रजपाद्यैः, आद्यशब्देन दानादेर्ग्रहणम् । कर्तुं क्षमा योग्या स्यात् । अनेन ‘ असुखमथ सुखं वा ’ इत्यादिनोक्तं दूषणं परिहृतमिति ज्ञेयम् ॥ ५२३ ॥

अत एव ज्यौतिषिकवचनमवश्यं माननीयमिति वक्तुमाह—**अविस्रम्भ इति ।** दैवज्ञानां ज्योतिर्विदां वचनेषु भाषणेषु अविस्रम्भोऽविश्वासः अनुपपन्नः अयुक्तः २२९

कुत इत्यत आह—**वृद्धि-ह्रासाविति ।** कुमुदसुहृदश्चन्द्रस्य वृद्धिः शुक्लपक्षे प्रतिदिनमेकैककलया जायमाना पुष्टिः ह्रासः कृष्णपक्षे तत्क्रमेणैव जायमानः क्षयश्च तौ, पुष्पवन्तौ सूर्याचन्द्रमसौ “एकयोक्त्या पुष्पवन्तौ दिवाकर-निशाकरौ” इत्यमरः । तयोः उपरागः ग्रहणं “ उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च । ” इत्यमरः । शुक्रादीनां ग्रहाणां, आदिशब्देन गुर्वादीनां ग्रहणम् । उदयः विलयः अस्तमयश्च तौ, इत्येवंप्रकारेण अमी कालविशेषाः सर्वैर्लोकैः दृष्टाः, एते ज्यौतिषिकनिश्चिता एवेति शेषः । अत्र लोके कुम्भी अन्नपचनपात्रं पुलाकः धान्यकणः तयोर्न्यायः एककणपचनज्ञानात् सर्वधान्यपाकज्ञानरूपः तस्मात् ज्योतिर्नयो ज्योतिःशास्त्रं तस्य गतिं लापनरीतिं विदन्ति जानन्तीति तद्विदस्तेषां अखिलानि सर्वाणि यानि वचनानि तेषु निश्चलं चञ्चलतारहितं सनिश्चयमित्यर्थः । मानभावं पूज्यभावं अविष्कुर्वन्ति प्रकटीकुर्वन्ति ॥ ५२४ ॥

---

१ ‘कष्टे च’.　२ ‘वुद्धि’.　३ ‘पुष्पवन्तोपरागौ’.　४ ‘विदो’.

इत्थं किल नीतिविदो विदुः ॥ २३० ॥

विदैवज्ञं ग्रामं विबुधविधुरं[1] भूपतिसभम्[2]
मुखं श्रुत्या हीनं मनुजपतिशून्यं च विषयम् ॥
अनाचारान् दारानपहरिकथं काव्यमपि च
प्रवक्तृत्वापेतं गुरुमपि सुबुद्धिः परिहरेत् ॥ ५३५ ॥

---

## अथ भिषग्वर्णनम् ४५.

कृ०- अस्त्वेवम् । इत्यन्यतो वीक्ष्य सोपहासम्-

मिथ्यौषधैर्हन्त ! मृषाकषायैरसह्यलेह्यैरयथार्थतैलैः ॥
वैद्या इमे वञ्चितरुग्णवर्गाः पिचण्डभाण्डं परिपूरयन्ति ॥५३६॥

किंच—

न धातोर्विज्ञानं न च परिचयो वैद्यकनये
न रोगाणां तत्त्वावगतिरपि नो वस्तुगुणधीः ॥
तथाप्येते वैद्या इति तरलयन्तो जडजना-
नसून्भृत्या मृत्योरिव वसु हरन्ते ! गदजुषाम् ॥ ५३७ ॥

---

**विदैवज्ञमिति** । सुष्ठु विचारसंपन्ना बुद्धिर्यस्य सः सुबुद्धिः पुरुषः विदैवज्ञं ज्यौतिषिकरहितं ग्रामं, विबुधविधुरं पण्डितशून्यं भूपतिसभं राज्ञः सभां, क्वचित् 'विबुधविधुरां भूपतिसभां' इति पाठान्तरं दृश्यते । तत्तु न युक्तं, "सभा राजाऽमनुष्यपूर्वा" इति राजपर्यायपूर्वसभान्ततत्पुरुषस्य नपुंसकत्वविधानात् । श्रुत्या वेदेन हीनं रहितं मुखं, मनुजपतिना राज्ञा शून्यं च विषयं देशं, अनाचारान् सतीलाचाररहितान् व्यभिचारसंपन्नानित्यर्थः । दारान् स्त्रियं चापि, अपगता हरिकथा यस्मात् तत् हरिगुणानुवर्णनरहितमित्यर्थः । काव्यं च, प्रकर्षेण यद्वक्तृत्वं यथार्थोपदेशरूपं तस्मादपेतं निवृत्तं गुरुमध्यापकं च परिहरेत् त्यजेत् ॥ ५३६ ॥

**मिथ्येति** । इमे वैद्याः मिथ्यौषधैः रोगादिसम्यक्परीक्षामन्तरा प्रयुक्तैरसत्यौषधैः, मृषाकषायैः पूर्ववदेव वृथाप्रयुक्तैः, असह्यैः सोढुमशक्यैर्लेह्यैः, अयथार्थैः विरुद्धरोगप्रयुक्ततया अयोग्यैस्तैलैश्च, वञ्चितः रुग्णानां रोगिजनानां वर्गः समुदायो यैस्तथाभूताः सन्तः, पिचण्डमुदरं भाण्डमिव परिपूरयन्ति पूर्णं कुर्वन्ति ॥५३६॥

**नेति** । एषां वैद्यानां धातोः पारद-ताम्रादेः विज्ञानं विशेषतः शुद्धिकरणादिज्ञानं च, वैद्यकनये वैद्यकशास्त्रे चरक-सुश्रुतादिग्रन्थे परिचयोऽभ्यासः न, रोगाणां ज्वरा-

---

१ 'विधुरां'. २ 'सभाम्'.

अपि च—

कषायैरुपवासैश्च नृणामुल्लाघतां कृताम् ॥
निजौषधकृतां वैद्यो निवेद्य हरते धनम् ॥ ५३८ ॥

वि०—वयस्य! विश्वोपकारिषु वैद्येषु अवद्यानि न कलयेथाः[1] ॥ २३१ ॥

पश्य—

मस्ते दुःसह[2]वेदनाकवलिते मग्ने स्वरेऽन्तर्गलम्
तप्तायां ज्वरपावकेन च तनौ तान्ते[3] हृषीकव्रजे ॥
दूने बन्धुजने कृतप्रलपने धैर्यं विधातुं पुनः
कः शक्तः कलितामयप्रशमनाद्वैद्यात्परो विद्यते? ॥ ५३९ ॥

---

दीनां तत्त्वतः अवगतिर्ज्ञानं चापि न, वस्तूनां औषधीनां गुणाः शैत्यौष्ण्यादयः तेषां धीर्ज्ञानं नो नास्ति । तथापि औषध-रोगादिज्ञानाभावे सत्यपि वैद्या वयं इति कथयित्वा जडजनान् मूर्खलोकान् तरलयन्तो मोहयन्तः सन्तः मृत्योर्यमस्य भृत्याः दूता इवेत्युत्प्रेक्षा । गदजुषां रोगिणां वसु द्रव्यं, असून् प्राणांश्चापि हरन्ते अपहरन्ति ॥ ५३७ ॥

**कषायैरिति** । कषायैः त्रिकटु-त्रिफलादिसाररूपैः उपवासैर्लङ्घनैश्चापि नृणां मनुष्याणां उल्लाघतां नीरोगतां "अनुपसर्गात्फुल्ल-क्षीव-कृशोल्लाघाः" इति निपातनात्साधुः । "उल्लाघो निर्गतो गदात्" इत्यमरः । कृतां संपादितां वैद्यः निजैः स्वकीयैः औषधैः कृतां संपादितां निवेद्य कथयित्वा, धनं हरते । रोगिजनानामिति शेषः ५३८ ॥

**वयस्येति** । हे वयस्य! विश्वोपकारिषु सर्वजनोपकारकर्तृषु, सदौषधप्रयोगादिभिरिति भावः । वैद्येषु अवद्यानि दूषणानि न कलयेथाः दूषणानां वृथारोपं मा कुर्वित्यर्थः ॥ २३१ ॥

विश्वोपकारित्वमेवाह—**मस्ते इति** । रोगिण इति शेषः । मस्ते शिरसि दुःसहा सोढुमशक्या या वेदना रोगोत्पन्नं दुःखं तया कवलिते ग्रस्ते सति, स्वरे शब्दे च अन्तर्गलं कण्ठमध्ये एव मग्ने लीने सति, स्फुटतया कण्ठाद्बहिरप्रकटे सतीत्यर्थः । तनौ देहे च ज्वरो रोगविशेषः स एव पावकोऽग्निस्तेन तप्तायां सत्यां तत एव हृषीकाणां चक्षुरादीन्द्रियाणां व्रजे समुदाये तान्ते निम्नगतत्वेन सम्यग्दर्शनाद्यभावसंपन्ने च सति बन्धूनां मातृ-पितृ-भ्रातृ-पुत्रादिस्वजनानां जने समुदाये दूने दुःखिते च सति अत एव कृतं प्रलपनं शोको येन तथाभूते च सति पुनः धैर्यं विधातुमुत्पादयितुं कलितं संपादितमामयानां शिरोवेदनानां प्रशमनं शान्तिर्येन तस्मात् वैद्यात् परोऽन्यः पुरुषः कः शक्तः समर्थः विद्यते? अपि तु कोऽपि नास्तीत्यर्थः ॥ ५३९ ॥

---

१ 'न कल्पयेथाः'. २ 'दुस्तर'. ३ 'ग्लाने'.

मा बोधि वैद्यकर्ममथापि महामयेषु
प्राप्तेषु यो भिषगिति प्रथितस्तमेव ॥
आकारयत्यखिल एव विशेषदर्शी
लोकोऽपि तेन भिषगेष न दूषणीयः ॥ ५४० ॥

कष्टमहो कृतोपकारेष्वगदङ्कारेषु कृतघ्न एव निर्विवेको लोकः ।
इत्थं हि कवयः कथयन्ति ॥ २३२ ॥

निर्वृत्ताध्वरकृत्य ऋत्विजमथोत्तीर्णापगो नाविकम्
युद्धान्ते सुभटं च सिद्धविजयो वोढारमाप्तस्थलः ॥
वृद्धं वारवधूजनं च कितवो निर्घृष्टयौवनो
ध्वस्तातङ्कचयश्चिकित्सकमपि द्वेष्टि प्रदेयार्थिनम् ॥ ५४१ ॥

---

'न धातोर्विज्ञानं न च परिचयो वैद्यकनये' इत्यादिनोक्तं दूषणं परिहर्तुमाह— **मा बोधीति** । अयं वैद्यः वैद्यकं शास्त्रं मा बोधि मा ज्ञासीत् 'बुध अवगमने' इत्यस्मात् माङ्योगाल्लुङि अडागमाभावः "दीप-जन-बुध–" इत्यादिना विकल्पेन चिण् । तथापि आमयेषु रोगेषु प्राप्तेषु सत्सु विशेषदर्शी समयविशेषेण कार्याकार्यद्रष्टा अखिल एव सर्वोऽपि जनः भिषक् वैद्यः इति यो लोके प्रथितः प्रसिद्धः तमेव आकारयति आह्वयति । तेन कारणेन एष भिषक् वैद्यः न दूषणीयः । अयं भावः—वैद्यक्रिया हि न तावत्सर्वकालमेव ग्रन्थज्ञानमवलम्ब्य भवति, किंतु विशेषतः अनुभवज्ञानमवलम्बते । ततश्च यदि केषांचित् गुरुपरंपरया रोगपरीक्षणं तत्परिहर्त्रौषधविज्ञानं च स्यात्, तदा न ग्रन्थावगतिरावश्यकी, तत एव च तादृशां दोषारोपोऽपि वृथैवेति ॥ ५४० ॥

**कष्टमिति** । कृतोपकारेष्वप्यगदंकारेषु वैद्येषु विषये "अगदंकारो भिषग्वैद्यौ चिकित्सके" इत्यमरः । निर्विवेकः विचाररहितः अत एव कृतं औषधादिना संपादितमारोग्यं हन्तीति कृतघ्नः लोकः, इति अहो कष्टमन्याय्यम् ॥ २३२ ॥

उक्तार्थे वृद्धसंमतिमाह—**निर्वृत्तेति** । निर्वृत्तं समाप्तं अध्वरकृत्यं यज्ञकृत्यं यस्य सः जनः, प्रदेयं दक्षिणादिद्रव्यं पूर्वं प्रतिज्ञातं अर्थते याचते इति प्रदेयार्थी तं, एतदेव विशेषणं प्रतिद्वितीयान्तं योजनीयं द्वेष्टीति क्रियापदं च । ऋत्विजं यज्ञकर्तारं द्वेष्टि, उत्तीर्णा लङ्घिता आपगा नदी येन सः नाविकं कर्णधारं, सिद्धः विजयः शत्रोरुत्कर्षप्राप्तिर्यस्य सः, युद्धान्ते समरावसाने सुभटं वीरपुरुषं, आप्तं प्राप्तं स्थलं गन्तव्यस्थानं येन सः वोढारं वाहकं, निर्घृष्टं असकृदुपभोगेन विनाशितं तस्य वारस्त्रीजनस्य यौवनं तारुण्यं येन सः कितवो धूर्तः अत एव वृद्धं वारवधूनां वेश्यानां जनं समूहं

---

१ 'मामयेषु'. २ 'युध्यन्तं'. ३ 'कुविटो'. ४ 'निविंष्ट'.

## अथ कविवर्णनम् ४६.

इति विमानमग्रतश्चालयन्नग्रतोऽवलोक्य सोपालम्भम्—

कृ०—सखेऽत्र पश्य कवीनामेषां शास्त्रैर्विप्रतिषिद्धां चर्याम् ॥२३३॥

श्रीनाथस्तवनानुरूपकवनां वाणीं मनोहारिणीम्
कष्टं हा कवयः कदर्यकुटिलक्ष्मापालसात्कुर्वते ॥
दूरोपाहृतसौरसैन्धवपयो देवाभिषेकोचितम्
संसेके विनियुञ्जते सुमतयः शाकालवालस्य किम् ? ॥ ५४२ ॥

किंच—

स्तुवद्भवनिवर्तके सति हरौ कविः सूक्तिभिः
करोति वरवर्णिनीचरितवर्णनं गर्हितम् ॥
अनीतिरवनीपतिर्गृहशुनीतनुं मौक्तिकै-
र्विभूषयति देवतामुकुटभागयोग्यैर्यथा ॥ ५४३ ॥

---

च, ध्वस्तो विनष्टः आतङ्कानां रोगाणां चयः समुदायो यस्य सः चिकित्सकं वैद्य चापि द्वेष्टि ॥ ५४१ ॥

अथ कविवर्णनं सूचयितुमवतारयति—**इतीति**। सोपालम्भं सनिन्दम् ॥

**सख इति**। हे सखे **विश्वावसो**! अत्रास्मिन् देशे एषां कवीनां शास्त्रै-र्विप्रतिषिद्धां निषिद्धां चर्यामाचारं पश्यावलोकय ॥ २३३ ॥

**श्रीनाथेति**। श्रीनाथस्य भगवतो लक्ष्मीपतेः स्तवने स्तुतौ अनुरूपं योग्यं कवनं शब्दनिवेशनचातुर्यं यस्याः सा तां अत एव मनोहारिणीं सहृदयजनचित्ता-कर्षिणीं वाणीं एते कवयः कदर्याः कृपणाः "कदर्ये कृपण-क्षुद्र-किंपचान-मितं-पचाः।" इत्यमरः। कुटिलाः वक्रान्तःकरणाश्च ये क्षमापाला भूपालास्तेषां अधीनां कुर्वते कुर्वन्ति। हा कष्टमिति खेदे। एतदेव दृष्टान्तेन द्रढयति— **दूरोपाहृतेति**। दूरात् शतशो योजनप्रदेशात् उपाहृतमानीतं सुरसिन्धोः गङ्गायाः इदं सौरसै-न्धवं यत् पयः उदकं तत् अत एव देवस्य श्रीसेतुबन्धरामेश्वरादेः अभिषेके उचितं योग्यं सुमतयः सुबुद्धयो जनाः शाकस्य शाकवृक्षस्य आलवालं तस्य संसेके निषेचने विनियुञ्जते उपयुञ्जते किम्? अपि तु नैवेत्यर्थः ॥ ५४२ ॥

**स्तुवदिति**। स्तुवतां स्तुतिं कुर्वतां जनानां भवनिवर्तके संसारनिवर्तके हरौ विष्णौ सत्यपि कविः सूक्तिभिः मधुरवाणीभिः गर्हितं सद्भिर्निन्द्यं वरवर्णिन्याः स्त्रि-याश्चरितस्य वर्णनं नेत्र-वदनाद्यवयवप्रशंसारूपं करोति। किंच कतिपये कवयः

वि०—आन्तरध्वान्तहरयः कवयस्त्वया नाधिक्षेप्याः ॥ २३४ ॥

कामं वाचः कतिचिदफलाः सन्तु लोके कवीनाम्
सन्त्येवान्या मधुरिपुकथासंस्तवाः कामदोग्ध्र्यः
वित्तं कामं भवतु विफलं दत्तमश्रोत्रियेभ्यः
पात्रे दत्तैर्भवति हि धनैर्धन्यता भूरिदातुः ॥ ५४४ ॥
कल्याणं भगवत्कथाप्रथनतः काव्यं विधातुः कवे-
स्तस्यैवाङ्गतया क्वचिद्रचयतः शृङ्गार-वीरादिकम् ॥
को दोषो भविता ? यदत्र कविताशीलैः समाश्रीयते
पन्था व्यास-वसुन्धराश्रुतिभवग्रन्थादिषु प्रेक्षितः ॥ ५४५ ॥

---

प्रत्यक्षं ग्रन्थारम्भे मङ्गलादौ श्रीहरि-शिवादिवर्णनप्रसङ्गेऽपि बीभत्स-शृङ्गारादिवर्णनेन निजां वाणीं दूषयन्ति वास्तविकेश्वरसामर्थ्यं निह्नुवते च । यथा भट्टनारायणेन वेणीसंहारनाटके मङ्गलाचरणतृतीयपद्ये 'उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ—' इत्यादिना भगवत्या लक्ष्म्याः संभोगोत्थानं वर्णितं, तत्किं भगवत्याः अन्यन्निरवद्यं माननीयं च चरित्रं नासीदेव ? परं तु तदेषां विषयवासनामलिनान्तःकरणानां कवीनां मनः कुतः प्रवेष्टुं शक्नोति ? इत्यलमप्रस्तुतप्रवचनेन । अत्रापि दृष्टान्तमाह—अनीतिः नयशिक्षणरहितः अवनीपती राजा यथा देवतानां मुकुटस्य किरीटस्य भागेषु प्रान्तेषु योग्यैरुचितैः, खचितुमिति शेषः । मौक्तिकैः गृहे पालितायाः शुन्याः तनुं शरीरं विभूषयति । तथैवैतेषां कवीनां कृतिरिति भावः ॥ ५४३ ॥

**आन्तरेति** । आन्तरस्य मनोगतस्य ध्वान्तस्य अन्धकारस्य अज्ञानरूपस्येत्यर्थः । हरयः सूर्याः तत्सदृशा इत्यर्थः । कवयस्त्वया नाधिक्षेप्याः न निन्दनीयाः ॥ २३४ ॥

उक्तमेव स्पष्टयति— **काममिति** । लोके कवीनां कतिचित् वाचः वाण्यः स्त्रीवर्णनादिरूपाः कामं अफलाः निष्फलाः सन्तु । नैतादृशः सर्वा अपीत्यर्थः । किंतु अन्याः स्त्री-राजादिवर्णनादितराः मधुरिपोः श्रीकृष्णस्य कथायाः संस्तवः सम्यक्स्तुतिः यासु ताः अत एव कामदोग्ध्र्यः अभीष्टसद्गत्यादिप्रदात्र्यः वाचः सन्त्येव । अत्रैतादृशो वाचः कालिदासस्य रघुवंश-कुमारसंभवादिकाः, माघस्य शिशुपालवधादिरूपाः, भवभूतेरुत्तररामचरित्रादयश्चोह्याः । अत्रार्थान्तरं न्यस्यति—अश्रोत्रियेभ्यः अवैदिकेभ्यः अर्थात् कुपात्रेभ्यः दत्तं स्वत्वत्यागपूर्वकं परस्वत्वोत्पादनपूर्वकं च समर्पितं वित्तं द्रव्यं कामं विफलं भवतु । किंतु पात्रे सत्पात्रे अग्निहोत्रादिसंपन्ने दत्तैः समर्पितैः धनैः भूरिदातुः अतिशयदानकर्तुः पुरुषस्य धन्यता भवति हि एव ॥ ५४४ ॥

—' इत्यादिनोक्तं स्त्रीवर्णनरूपं दोषमुद्धारयन्नाह— **कल्या-**
कथानां राम-कृष्णाद्यवतारचरित्राणां प्रथनतः रच-
ारसंभव-शिशुपालवध-किरातार्जुनी-

कु०— नरस्तुतेर्विधातारो न वस्तुत इमे बुधैः ॥
श्लाघनीया इति कवीन् शास्त्राध्वन्यो विनिन्दति ॥ ५४६ ॥

वि०—धनचपलसकलपुरुषसाधारणमिदं दूषणमविवेकिभिः कविष्वेव केवलमाधीयते ॥ २३५ ॥

यतः—

पद्यैर्हृद्यतमैः स्तुवन्ति कवयः प्रायेण पृथ्वीपती-
न्नन्ये तान् स्तुवते वचोभिरचमत्कारैरसारैरपि ॥
पद्यारम्भणशक्त्यशक्तिविहितो भेदः कवीनां भव-
त्यन्येषां च परं नरस्तुतिकृतो दोषस्तु सार्वत्रिकः॥ ५४७॥

---

यादिकं शाकुन्तल-महावीरचरितोत्तररामचरितादिनाटकरूपं च विधातुः कर्तुः कवेः कालिदास-माघ-भारवि-भवभूत्यादेः, तस्य काव्यस्यैवाङ्गतया यत्किंचिदंशरूपत्वेन क्वचित् विवाहादिप्रसङ्गे दम्पतीसमागमादिप्रसङ्गे वा, न तु सर्वत्र । यथा रघुवंशे इन्दुमत्याः वर्णनं, कुमारसंभवे भगवत्याः पार्वत्याश्च वर्णनं, सर्वतो वीररसप्रधाने वेणीसंहारनाटके च भानुमत्यादिवर्णनं चेत्यादिकं यथायथमूह्यम् । शृङ्गारः वीरश्च तौ आदी यस्मिन् तदादिकं रसं, आदिशब्दात् करुणाद्भुतादेर्ग्रहणम् । रचयतः को दोषो भविता भविष्यति? नैवायं संप्रदायः आधुनिककवीनामेव, किंतु प्राचीनानामपीत्याह—यत् यस्मात् अत्र लोके कविताशीलैः काव्यकर्तृभिः व्यासः पाराशरः वसुंधराश्रुतिः पृथिव्याः श्रवणेन्द्रियं लक्षणया वल्मीकं तत्र भवो वाल्मीकिश्च तयोर्ग्रन्थादिषु महाभारत-भागवत-रामायणादिपुराणग्रन्थेषु प्रेक्षितोऽवलोकितः पन्थाः क्वचिदङ्गतया शृङ्गारादिवर्णनरूपः, यथा महाभारते द्रौपद्यादिसमागमवर्णनं, भागवते च श्रीकृष्ण-गोपिकारासक्रीडादिवर्णनं, रामायणे सीतावर्णनादिकं च ज्ञेयम् । समाश्रीयते स्वीक्रियते । न तु स्वकपोलकल्पित इति भावः ॥ ५४५ ॥

पुनरपि दूषयति—**नरेति** । नरस्य मनुष्यस्य राजादेः स्तुतेः स्तवस्य विधातारः कर्तारः इमे कवयः, अत एव वस्तुतः तत्त्वतः बुधैः पण्डितैः न श्लाघनीयाः न प्रशंसनीयाः । इति हेतोः कवीन् शास्त्राध्वन्यः शास्त्रपथिकः "अध्वनो यत्खौ" इति सूत्रेण 'अलं गच्छति' इत्यर्थे यत् प्रत्ययः । शास्त्रोक्तमार्गेण गन्तेत्यर्थः । विनिन्दति ॥ ५४६ ॥

**धनेति** । धने द्रव्यसंपादने चपला आसक्ता ये सकलाः सर्वेऽपि पुरुषाः कवयः तदन्ये च तेषां साधारणं समानमिदं नरस्तवनरूपं दूषणं, परं तु अविवेकिभिः अविचारिभिः केवलं कविष्वेव, न त्वन्येषु आधीयते आरोप्यते ॥ २३५ ॥

**पद्यैरिति** । कवयः हृद्यतमैः अतिमनोहरैः रसालंकारादिपरिपूर्णत्वेनेत्यर्थः । पद्यैः श्लोकैः पृथ्वीपतीन् राज्ञः प्रायेण स्तुवन्ति । प्रायग्रहणात् केचित् पद्यादिरचनप्रयत्नं विनैव स्तुवन्तीति ज्ञेयम् । अन्ये च तान् राज्ञः अचमत्कारैः उपमाद्यलंकाराभावात् आह्लादजननासमर्थैः अत एव असारैरपि वचोभिर्भाषणैः स्तुवते

क्षणमालोक्य सादरम्—

प्राचेतस-व्यास-पराशराद्याः प्राञ्चः कवीन्द्रा जगदञ्चितास्ते ॥
गोष्ठी नवीनापि महाकवीनां पूज्या गुणज्ञैर्भुवनोपकर्त्री ॥५४८॥

तथा हि—

माघश्चोरो मयूरो मुररिपुरपरो भारविः सारविद्यः
श्रीहर्षः कालिदासः कविरथ भवभूत्याह्वयो भोजराजः ॥
श्रीदण्डी डिण्डिमाख्यः श्रुतिमुकुटगुरुर्भल्लटो भट्टबाणः
ख्याताश्चान्ये सुबन्ध्वादय इह कृतिभिर्विश्वमाह्लादयन्ति ॥५४९॥

---

तेषां स्तुतिं कुर्वन्ति । उभयोस्तारतम्यमाह—पद्यानां श्लोकानां आरम्भणे करणे शक्तिः सामर्थ्यं अशक्तिरसामर्थ्यं च ताभ्यां विहितः कृतः कवीनां अन्येषां च मध्ये भेदः विशेषः अस्ति । परंतु नरस्तुतिकृतो दोषस्तु सर्वत्र कवि-तदितर-धन-चपलजनेषु भवतीति सार्वत्रिक एव, न तु कवीनामेवायं दोषः, प्रत्युत चमत्कारज-नितो गुण एव संभवतीति ॥ ५४७ ॥

**प्राचेतसेति** । प्राचेतसः वाल्मीकिः, व्यासः सत्यवतीसुतः, पराशरश्च ते आद्याः प्रथमाः येषु ते प्राञ्चः प्राचीनाः अत एव कवीन्द्राः कविषु श्रेष्ठाः ते प्रसिद्धाः जगति अञ्चिताः पूज्याः, आसन्निति शेषः । तथा तत्पथसमाश्रयणात् नवीना अर्वाचीनापि भुवनोपकर्त्री, विविधसृष्टपदार्थगुण-दोषवर्णनेनेति शेषः । महाकवीनां कालिदासादीनां गोष्ठी सभा " समज्या परिषद्गोष्ठी सभा— " इत्यमरः । गुणज्ञैः जनैः पूज्या माननीया ॥ ५४८ ॥

'कवीनां नवीनापि गोष्ठी पूज्या' इत्युक्तं तदन्तर्भूतानेव कांश्चित् प्रसिद्धान् नामतो निर्दिशति—**माघ इति** । माघः एतन्नामा कविः शिशुपालवधाख्यकाव्य-कर्ता, चोरः एतन्नामा कविः, अस्यैव बिल्हण इति नामान्तरं श्रूयते । एतद्विषये अन्य-त्यमुद्रितपुस्तके टिप्पण्यामेवं वृत्तान्त उपलभ्यते—' चोरपञ्चाशिकाभिधमेकं काव्यमनेन कविना राजाज्ञैकविधेयराजपुरुषकरिष्यमाणशूलारोपणप्राक्कालिकतद्वञ्चन-लब्धावसरे कालचौरत्वापदेशेन निमित्तेन विरचितम् ' इति । मयूरः, मुररिपुर्मुरा-रिनामा कविः अनर्घराघवनाटककर्ता, अपरः एभ्यः अन्यः यः सारवित् काव्यनिर्मा-णसामग्रीभूतसाहित्यालंकारादितत्त्वज्ञः भारविनामा किरातार्जुनीयादिकाव्यनिर्माता, श्रीहर्षः वत्सराजचरितादिकर्ता, कालिदासः कविकुलगुरुत्वेन प्रसिद्धः रघुवंश-कुमार-संभव-मेघदूतादिकाव्यानां, अभिज्ञानशाकुन्तल-विक्रमोर्वशीयादिनाटकानां च निर्माता, अत एवायं प्रथमं ग्रथितुं योग्यः कविमालिकायां परं छन्दोऽनुरोधान्न तथा कृत-मिति बोध्यम् । अथ भवभूतिरिति आह्वयो नाम यस्य सः कविः मालतीमाधव-उत्त-रचरितनाटककर्ता, भोजराजः प्रसिद्धः, श्रीदण्डी दशकुमारचरितादिकर्ता,

परं तु—

संपन्निर्मदभावयोरनघयोः साहित्य-पाण्डित्ययोः
सामर्थ्यान्यजनोपकारकतयोः साम्राज्य-दाक्षिण्ययोः ॥
औदार्य-प्रियवादयोश्च कथयन्त्याचार-विज्ञानयोः
सामानाधिकरण्यमेव विबुधोत्तंसप्रशंसास्पदम् ॥ ५५० ॥

इदं चावधेयम्—

प्रणतचरणरेणुविष्णुचित्तः शठमथनरसो मुनिः स भूतः ॥
मधुरकविरितोपरे च धन्याः कति न पुनन्ति जगन्ति सूक्तिपूरैः ॥५५१॥

---

डिण्डिमाख्यः, श्रुतिमुकुटगुरुर्वेदान्ताचार्यः, भल्लटः, भट्टबाणः, कादम्बर्यादिग्रन्थकर्ता च, अन्ये उक्तेभ्य इतरे सुबन्ध्वादयः कवयः, आदिशब्देन जयदेवादिग्रहणम् । ख्याताः प्रसिद्धाः सन्ति । ते कृतिभिः उपरिनिर्दिष्टस्वविरचितकाव्य-नाटकादिग्रन्थैः इह लोके विश्वं आह्लादयन्ति आनन्दयन्ति ॥ ५४९ ॥

को वैतेषां कृतिभिर्जनानां लाभः इत्यपेक्षायामाह—**परं त्विति** । तुर्विरोधसूचकः । तेन तत्कृतिषु वक्ष्यमाणप्रकारेण वर्णनमपेक्षितमिति तदर्थः ।

**संपदिति** । अनघयोर्निर्दोषयोः, एतत्प्रतिषष्ठ्यन्तं योजनीयम् । संपदः भावः लक्ष्म्याः सत्ता निर्मदस्य अहंकारराहित्यस्य भावश्च तयोः, भावशब्दस्य द्वन्द्वान्ते श्रूयमाणत्वात् प्रत्येकं संबन्धः । साहित्यं काव्यालंकारादिज्ञानं, पाण्डित्यं तर्कादिशास्त्रेषु प्रावीण्यं तयोः, सामर्थ्यं परपराभवशक्तत्वं अन्यजनेषु उपकारकता च तयोः, साम्राज्यं सार्वभौमत्वं दाक्षिण्यं सरलत्वं च तयोः, औदार्यं दातृत्वं प्रियवादः प्रियभाषणं च तयोः, आचारः शास्त्रोक्ताचरणं विज्ञानं शास्त्रज्ञानं च तयोश्च सामानाधिकरण्यमेकत्र स्थितिमेव विबुधोत्तंसानां ज्ञानिश्रेष्ठानां प्रशंसायाः स्तुतेः आस्पदं स्थानं कथयन्ति । जना इति शेषः ॥ ५५० ॥

**प्रणतेति** । प्रणताः प्रकर्षेण नमस्कृताः अर्थाद्भक्तैः चरणरेणवः पादपांसवो यस्य सः तथाभूतः स चासौ विष्णुश्च भगवान् तस्मिन् चित्तं यस्य सः, सततं विष्णुध्यानतत्पर इत्यर्थः । शठानां कपटवादिनां मथने पराजये रस उल्लासो यस्य सः, सः प्रसिद्धः मुनिः मधुरकविः श्रीशठकोपमुनिरित्यर्थः । तस्यैवेदं नामान्तरमिति भाति । भूतः जातः । इतः श्रीशठकोपमुनेः अपरे अन्ये तत्तद्देशभाषायां काव्यनिर्मातारः ज्ञानेश्वर-एकनाथ-तुलसीदास-श्रीधर-नामदेव-तुकाराम-वामनादयः धन्याः पुण्यवन्तः सन्तः सूक्तीनां मधुरभाषणानां अर्थात् भावार्थदीपिकादिरूपाणां पूरैः प्रवाहैः कति जगन्ति लोकान् न पुनन्ति ? अपि तु बहव एतादृशः सन्तीत्यर्थः ॥ ५५१ ॥

# अथ तार्किकवर्णनम् ४७.

कृ०— पुरतो विमानं प्रस्थाप्य पार्श्वतो दृष्ट्वा—

पश्यैतानाग्रहिणः पुरुषान् य एते व्यर्थमेव न्यायग्रन्थसंततचिन्तनेन विश्राम्यन्ति ॥ २३६ ॥

तथाहि—

कर्म-ब्रह्मविचारणां विजहतो भोगापवर्गप्रदाम्
घोषं कंचन कण्ठशोषफलकं कुर्वन्त्यमी तार्किकाः ॥
प्रत्यक्षं न पुनाति नापहरते पापानि पीलुच्छटा
व्याप्तिर्नावति नैव पात्यनुमितिर्नो पक्षता रक्षति ॥ ५५२ ॥

किंच—

हेतुः किंच विशिष्टधीरनुमितौ न ज्ञानयुग्मं मरुत्
त्वाचो नेति च मोहवादमुखरा नैयायिकाश्चेद्बुधाः ॥

---

**पश्येति** । ये एते न्यायग्रन्थानां गादाधारी-जागदीशीप्रभृतितर्कशास्त्रग्रन्थानां संततचिन्तनेन निरन्तरविचारेण विश्राम्यन्ति विफलं क्लाम्यन्ति । श्रमातिरिक्तं न किंचित्फलं प्राप्नुवन्तीत्यर्थः । अत एव आग्रहिणः वादप्रसङ्गे परमतानङ्गीकारपूर्वकं स्वमतस्यैव प्रतिपादकान् एतान् दृश्यमानान् पुरुषान् पश्यावलोकय ॥ २३६ ॥

**कर्मेति** । अमी तार्किकाः तर्कशास्त्रविदः भोगः ऐहिकामुष्मिकसुखं अपवर्गो मोक्षश्च तौ प्रददातीति तां कर्मणः ज्योतिष्टोमादिरूपस्य ब्रह्मणः परमात्मनश्च विचारणां मीमांसां, पूर्वमीमांसामुत्तरमीमांसां चेत्यर्थः । तत्र पूर्वमीमांसा कर्मकाण्डप्रतिपादिका ऐहिकामुष्मिकभोगप्रदा । उत्तरमीमांसा च जीव-ब्रह्मणोर्वास्तवस्वरूपप्रतिपादिका मोक्षप्रदा चेति ज्ञेयम् । विजहतस्त्यजन्तः सन्तः, कंचन निष्फलं अत एव कण्ठशोष एव फलं यस्मात् स तत्फलकस्तं घोषं कलकलं कुर्वन्ति । निष्फलत्वमेवाह—प्रत्यक्षं चक्षुरादीन्द्रियाणि प्रमाणचतुष्टयान्यतमं प्रमाणं न पुनाति न पवित्रीकरोति, पीलूनां परमाणूनां छटा समूहः पापानि नापहरते न परिहरति, व्याप्तिः व्यापकसामानाधिकरण्यरूपा नावति न रक्षति, अनुमितिः परामर्शजन्यं ज्ञानं 'पर्वतो-वह्निमान्' इत्यादिरूपं नैव पाति संरक्षति, पक्षता संदिग्धसाध्यवत्ता च न रक्षति । अत्र प्रत्यक्षादिशब्देन सर्वत्र तत्तद्विचारो ग्राह्यः ॥ ५५२ ॥

**हेतुरिति** । किंच अनुमितौ पर्वतो वह्निमान् इत्यादिरूपायां विशि-[illegible]प्तिमत्त्वेन धूमादेर्लिङ्गस्य धीः पक्षवृत्तित्वज्ञानं तदेव हेतुः, ज्ञानयोः

मेषस्याण्डमियत्पलं बलिभुजो दन्ताः कियन्तस्तथे—
त्येवं सन्ततचिन्तनैः श्रमजुषो न स्युः? कथं पण्डिताः॥५५३॥

विशिष्य चैतस्य शुष्कतार्किकस्य रीतिर्विवेकिनामुपहासास्पदम् २३७

शृणु तावत्—

न जिघ्रत्याम्नायं स्पृशति न तदङ्गान्यपि सकृत्
पुराणं नाधीते न गणयति किंच स्मृतिगणम् ॥
वदन् शुष्कं तर्कं परपरिभवार्थोक्तिभिरसौ
नयत्यायुः सर्वं निहितपरलोकार्थयतनः ॥ ५५४ ॥

अपि च—

प्रयत्नैरस्तोकैः परिचितकुतर्कप्रकरणाः
परं वाचो वश्यान् कतिपयपदौघान्विदधतः ॥

---

वह्निव्याप्यो धूमः धूमवानयं च पर्वतः इत्यादिरूपयोः युग्मं द्वयं तु न हेतुः, मरुद्वायुः त्वाचः त्वगिन्द्रियग्राह्यः न भवति । इत्युक्तरीत्या मोहसंपादकेन भ्रमसंपादकेन वादेन मुखराः शब्दायमानाः नैयायिकाः न्यायशास्त्रविदः बुधाः पण्डिताश्चेत् स्युः, तर्हि मेषस्य अण्डं इयन्ति एतावत्परिमाणानि पलानि यस्य तत्तथाभूतं, पलं नाम कर्षचतुष्टयरूपं तोलप्रमाणम् । एतदेकद्व्यादिसंख्याकपलप्रमाणमित्यर्थः । तथा बलिभुजः काकस्य " काके तु करटारिष्ट-बलिपुष्ट-सकृत्प्रजाः । ध्वाङ्क्षात्मघोष-परभृद्-बलिभुग्-वायसा अपि । " इत्यमरः । दन्ताः कियन्तः कतिसंख्याकाः सन्ति ? इत्येवंप्रकारेण संततं चिन्तनैर्विचारैः श्रमजुषः प्रयत्नकर्तारः जनाः पण्डिताः कथं न स्युः? अपि तु उभयत्रापि फलाविशेषात्स्युरेवेति भावः ॥ ५५३ ॥

**विशिष्येति** । विशिष्य विशेषतः एतस्य शुष्कतार्किकस्य निष्फलतर्कशास्त्रविदो रीतिर्विवेकिनां इतरशास्त्रविवेचनशीलानां उपहासास्पदं परिहासास्पदं भवति ॥२३७॥

**नेति** । असौ तार्किकः आम्नायं वेदं न जिघ्रति नाभ्यस्यति, तस्य वेदस्याङ्गानि शिक्षादीनि सकृदेकवारमपि, किमु वारं वारं, न स्पृशति नाधीते, पुराणं पाद्मवैष्णवादिकं नाधीते, किंच स्मृतीनां मन्वादीनां गणं समुदायं न गणयति न मानयति । अत एव निहितं परित्यक्तं परलोकार्थं स्वर्गादिप्राप्त्यर्थं यतनं यत्नो येन सः तथाभूतः सन्, परस्यान्यशास्त्रवादिनः परिभवः पराभव एव अर्थः प्रयोजनं यासां ताश्च ता उक्तयश्च ताभिः उपलक्षितं शुष्कं निष्फलं तर्कं वदन् सन्, सर्वमायुर्जीवितकालं नयति गमयति ॥ ५५४ ॥

**प्रयत्नैरिति** । किंच अस्तोकैर्बहुभिः प्रयत्नैः श्रमैः परिचितान्यभ्यस्तानि कुत्सितानां तर्काणां प्रकरणानि वाद-जल्प-वितण्डादिपरिपूरितानि यैस्ते परं वाचो वाण्याः वश्यान् स्वाधीनान् असकृत् परिशीलनादित्यर्थः । कतिपयानां त्रि-चतुर्णां

सभायां वाचाटाः श्रुतिकटु रटन्तो घटपटान्
न लज्जन्ते मन्दाः स्वयमपि तु जिह्वेति विबुधः ॥ ५५५ ॥

**वि०**—वयस्य विविधोपकारविधायकान् नैयायिकान् मावमंस्थाः ॥

श्रृणु तावत्—

मोहं रुणद्धि विमलीकुरुते च बुद्धिम्
सूते च संस्कृतपदव्यवहारशक्तिम् ॥
शास्त्रान्तराभ्यसनयोग्यतया युनक्ति
तर्कश्रमो न तनुते? किमिहोपकारम् ॥ ५५६ ॥

तथाहि—

प्रायः काव्यैर्गमितवयसः पाणिनीयाम्बुराशेः
पारज्ञस्याप्यपरिकलितन्यायशास्त्रस्य पुंसः ॥
वादारम्भे वदितुमनसो वाक्यमेकं सभायाम्
प्रह्वा जिह्वा भवति कियतीं पश्य कष्टामवस्थाम् ॥ ५५७ ॥

---

पदानां अवच्छिन्नावच्छेदक-प्रतियोग्यादिशब्दानां ओघान् विदधतः प्रयोजयन्तः सन्तः, अत एव वाचाटाः बहुगर्ह्यवाचः "वाचाटो बहुगर्ह्यवाक्" इत्यमरः। सभायां श्रुतिकटु कर्णकटु यथा तथा घटपटान् शब्दान् रटन्तः सन्तः मन्दाः मूढाः एते नैयायिकाः स्वयं न लज्जन्ते, अपि तु विबुधः पण्डितः जिह्वेति लज्जते ॥५५५॥

**वयस्येति** । विविधाः नानाप्रकाराः ये उपकाराः शास्त्रान्तराभ्यासे बुद्धिवैशद्यादयस्तेषां विधायकान् संपादकान् नैयायिकान् मावमंस्थाः वृथादूषणैस्तेषामपमानं मा कुर्वित्यर्थः ॥ २३८ ॥

**मोहमिति** । तर्के तर्कशास्त्रे श्रमोऽभ्यासः मोहं बुद्धिभ्रमं रुणद्धि विनाशयति, बुद्धिं च विमलीकुरुते मान्द्यादिदोषपरिहारपूर्वकं निर्दोषीकरोति, संस्कृतानि प्रौढत्व-परिशुद्धत्वादिसंस्कारयुक्तानि यानि पदानि तेषां व्यवहारे भाषणे शक्तिं सामर्थ्यं सूते जनयति । शास्त्रान्तरस्य व्याकरणाद्यन्यशास्त्रस्य अभ्यसने योग्यतया युनक्ति उपयुज्यते । ततः इह लोके तदध्येतरि वा तर्कश्रमः उपकारं न तनुते न करोति किम्? ॥ ५५६ ॥

**प्राय इति** । काव्यैः काव्यग्रन्थाभ्यासैः गमितं यापितं वयो येन तस्य, जन्मपर्यन्तं काव्याभ्यासशीलस्येत्यर्थः । पाणिनीयस्य पाणिनिमुनिप्रणीतव्याकरणस्य ...म्बुराशेः समुद्रस्य पारज्ञस्यापि आसमाप्तिव्याकरणशास्त्रनिष्णातस्यापीत्यर्थः । अप... न्यायशास्त्रं येन तस्य पुंसः पुरुषस्य सभायां वादस्य पक्षद्वयस्थप... आरम्भे एकं वाक्यमपि, न त्वधिकं, वदितुमनसः

किं बहुना—

अपरीक्षितलक्षण-प्रमाणैरपरामृष्टपदार्थसार्थतत्त्वैः ॥
अवशीकृतजैत्रयुक्तिजालैरलमेतैरनधीततर्कविद्यैः ॥ ५५८ ॥

निरूप्य—

अद्भुतस्तर्कपाथोधिरगाधो यस्य वर्धकः ॥
अक्षपादोऽतमस्पृष्टस्त्वकलङ्कः कलानिधिः ॥ ५५९ ॥

पुनरालोच्य सश्लाघम्—

ज्ञानाब्धिरक्षचरणः कणभक्षकश्च
श्रीपक्षिलोऽप्युदयनः स च वर्धमानः ॥
गङ्गेश्वरः शशधरो बहवश्च नव्या
ग्रन्थैर्निरुन्धत इमे हृदयान्धकारम् ॥ ५६० ॥

---

वक्तुमिच्छोः सतः जिह्वा प्रह्वा नम्रा, वाग्रहितेत्यर्थः । भवति । एतां कष्टां दुःखप्रदां कियतीं अनिर्वाच्यामिति यावत् । अवस्थां पश्यावलोकय । हे कृशानो, त्वमिति शेषः ॥ ५५७ ॥

**अपरीक्षितेति** । अपरीक्षितानि अनवलोकितानि अनभ्यस्तानीति यावत् । लक्षणानि असाधारणवस्तुधर्माः प्रमाणानि प्रत्यक्षानुमानादीनि च यैस्तैः अपरामृष्टानि अविचारितानि पदार्थानां द्रव्यगुणादीनां सार्थस्य समूहस्य तत्त्वानि यथास्थितस्वरूपाणि यैस्तैः अत एव अवशीकृतानि अस्वाधीनीकृतानि जैत्राणि जयशीलानि युक्तीनां जालानि यैस्तैः एतादृशैः एतैः अनधीता अनभ्यस्ता तर्कविद्या तर्कशास्त्रं यैस्तैः पुरुषैरलं पर्याप्तम् ॥ ५५८ ॥

**अद्भुत इति** । तर्कः न्यायशास्त्रमेव पाथोधिः समुद्रः अगाधः अतलस्पर्शः अद्भुत आश्चर्यकरश्च । यतो यस्य तर्कपाथोधेः वर्धकः तमसाऽन्धकारेण राहुणा अज्ञानेन च स्पृष्टः कृतस्पर्शः न भवतीत्यतमस्पृष्टः अक्षाणीन्द्रियाण्येव पादाः किरणा यस्य सः अक्षं नेत्रेन्द्रियं पादे चरणे यस्य सः गौतममुनिश्च अकलङ्कः निष्कलङ्कः निरपवादश्च "कलङ्कोऽङ्कापवादयोः" इत्यमरः । कलानां षोडशभागानां चतुःषष्टिकलानां विद्यानां च निधिः चन्द्रः अस्ति ॥ ५५९ ॥

**ज्ञानाब्धिरिति** । ज्ञानानां स्वर्गापवर्गसाधकशास्त्रावबोधानां अब्धिः समुद्रः सर्वज्ञ इत्यर्थः । इदमेव प्रत्येकमभिसंबन्धनीयम् । अक्षचरणः श्रीगौतममुनिः षोडशपदार्थबोधकन्यायसूत्रकर्ता, कणभक्षकः कणादमुनिः सप्तपदार्थावबोधकसूत्रकर्ता, श्रीपक्षिलः, अपिः समुच्चायकः । उदयनः, स प्रसिद्धः वर्धमानश्च, गङ्गेश्वरः, तत्त्वचिन्तामणिकारः शशधरः, बहवो नव्याः पक्षधरमिश्र-रघुनाथशिरोमणि-विश्वनाथ-

## अथ मीमांसकवर्णनम् ४८.

कृ०—अपरत्र व्योमयानमानयन्नग्रतो निर्वर्ण्य सोपालम्भम्—

मीमांसकाः कतिचिदत्र मिलन्ति वेद-
प्रामाण्यसाधनकृतोऽपि न तेऽभिवन्द्याः ॥
उद्घोषितोऽप्युपनिषद्भिरशेषशेषी
ब्रह्मैव नाभ्युपगतः पुरुषोत्तमो यैः ॥ ५६१ ॥

विशिष्य च मीमांसकगोष्ठ्यां विश्रुताः शबरादयः शबरा इव भगवद्भक्तानां विनिन्दनीयाः ॥ २३९ ॥

ते मीमांसाशास्त्रलोकप्रसिद्धाः सर्वर्षीणां सेहिरे नैव सत्ताम् ॥
चैतन्यस्यापह्नवं देवतानां चक्रुर्विश्वं नश्वरं[1] मन्यमानाः ॥५६२॥

---

भवानन्द-जगदीश-गदाधरप्रभृतयश्चाचार्याः ग्रन्थैः स्वस्वकृतैः शास्त्रप्रबन्धैः हृदयस्य अन्धकारं अज्ञानरूपं निरुन्धते निवारयन्ति ॥ ५६० ॥

**मीमांसका इति**। अत्रास्मिन् देशे कतिचित् मीमांसकाः जैमिनिमुनिप्रणीतकर्मविचारणाप्रतिपादकशास्त्रविदः मिलन्ति उपलभ्यन्ते। ते वेदे प्रामाण्यस्य स्वतःप्रामाण्यस्य साधनं व्यवस्थापनं कुर्वन्तीति तत्कृतोऽपि, अभिवन्द्याः नमस्कर्तुं योग्या न भवन्ति। यतः उपनिषद्भिः श्रुतिशिरोभागैः अशेषस्य निखिलप्रपञ्चस्य शेषी अङ्गी अधिष्ठानमिति यावत्। सकलदृश्यप्रपञ्चविलयेऽप्येक एवाविनाशीत्यर्थः। अत एव ब्रह्म परब्रह्मरूपः पुरुषोत्तमो नारायणो भगवान् उद्घोषितः "आत्मा वा इदमेक एवाग्र आसीत्, नान्यत्किंचनमिषत्, यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः, तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यादिवचनैः यथार्थतया प्रतिबोधितोऽपि यैर्मीमांसकैः नाभ्युपगतः न स्वीकृतः, तत इति संबन्धः। कर्मैव जगज्जन्मादिकारणमिति हि मीमांसकानां सिद्धान्तः ॥ ५६१ ॥

**विशिष्येति**। मीमांसकानां गोष्ठ्यां सभायां विश्रुताः प्रसिद्धाः शबरः शबरस्वामी मीमांसासूत्रभाष्यकर्ता आदिर्मुख्यो येषां कुमारिलभट्टादीनां ते तदादयः शबराः किराता इव भगवद्भक्तानां विनिन्दितुं योग्याः विनिन्दनीयाः सन्ति ॥२३९॥

**ते इति**। ते पूर्वोक्ताः मीमांसाशास्त्रेण, अत्र शास्त्रशब्दस्तज्ज्ञानपरः। तेन मीमांसाशास्त्रज्ञानेनेत्यर्थः। लोके प्रसिद्धाः, पक्षे ते अमी किरातादयः मांसाशैः मांसभक्षकैर्जनैः अस्त्रैः बाणादिभिश्च सहिताः लोके प्रसिद्धाः इति च, सर्वर्षीणां व्यास-वसिष्ठादीनां सत्तां स्थितिं नैव सेहिरे नैव मर्षितवन्तः। तेषां कर्मानभिमानपूर्वकपरमा-

---

[1] 'वीश्वरं'.

वि०—सखे ! निखिलनिगमार्थनिर्धारणबद्धादरेषु मीमांसकेषु मा स्म सन्नह्येथाः ॥ २४० ॥

शृणु—

आदौ धर्मे प्रमाणं विविधविधिभिदां[1] शेषतां च प्रयुक्तिम्
पौर्वापर्याधिकारौ तदनु बहुविधं चातिदेशं तथोहम् ॥
बाधं तन्त्रं प्रसङ्गं नयनयनशतैः सम्यगालोचयद्भ्यो
भिन्ना मीमांसकेभ्यो विदधति ? भुवि के सादरं वेदरक्षाम् ५६३

त्मैकचित्तत्वात् । यतः, एते मीमांसकाः नश्वरं विनाशवत् विश्वं मन्यमानाः सत्यत्याङ्गीकुर्वाणाः सन्तः, क्वचित् ' वीश्वरं ' इति पाठः । तत्पक्षे विश्वं वीश्वरं ईश्वररहितमित्यर्थः । देवतानां अग्नीन्द्रादियज्ञीयदेवानां चैतन्यस्य चिद्रूपत्वस्य अपह्नवं लोपं चक्रुः कृतवन्तः । अग्नीन्द्रादिदेवतानां विग्रहवत्त्वे युगपन्नानाकर्तृकयागेषूपस्थानासंभवान्मन्त्राणामेव देवतारूपत्वाङ्गीकारान्मन्त्राणां चाचेतनत्वादिति भावः ॥ ५६२ ॥

**सख इति ।** निखिलानां निगमानां वेदानां अर्थस्य निर्धारणं नयसहस्रपुरस्कारपूर्वकं निश्चयः तस्मिन् बद्धादरेषु कृतादरेषु मीमांसकेषु मा स्म संनह्येथाः तान् दूषयितुं मोद्युक्तो भव ॥ २४० ॥

प्रथमं तावन्मीमांसकानां वेदरक्षकत्वादतीव वन्द्यत्वमाह— **आदाविति ।** आदौ द्वादशाध्यायघटितमीमांसाशास्त्रस्य प्रथमाध्याये धर्मे चोदनालक्षणेऽर्थे प्रमाण "अग्निहोत्रं जुहोति, वसन्ते वसन्ते ज्योतिषा यजेत" इत्यादिचोदनारूपं, ततो द्वितीयाध्याये विविधाः अनेकप्रकारा ये विधयः चोदनाः तेषां भिदां भेदं, ततस्तृतीये, एवमग्रेऽप्युक्तं सर्वं प्रत्यध्याये इति ज्ञेयम् । शेषतां अङ्गत्वं, प्रयुक्तिं प्रयोज्यप्रयोजकभावं च, पौर्वापर्यं पूर्वमिदं कर्म कर्तव्यं अनन्तरमिदमित्यादिक्रमः, अधिकारः फलस्वाम्यं च तौ, तदनु तदनन्तरं बहुविधमनेकप्रकारं अतिदेशं प्रकृतितुल्यत्वं तथा ऊहं कर्मभेदे मन्त्रादिविनियोग-विपर्ययादितर्कं, बाधं उत्सर्गतः प्राप्तस्य अपवादं, तन्त्रं एकत्र करणेन प्रोक्तेन वा अनेकोपकारकं, प्रसङ्गं अर्थनिर्णयं च एतान् सर्वान् नयाः तत्तदधिकरणसिद्धशास्त्रवचनान्येव नयनानि लोचनानि तेषां शतैः सम्यक् आलोचयद्भ्योऽवलोकयद्भ्यः मीमांसकेभ्यः भिन्नाः अन्ये भुवि के पण्डिताः सादरं श्रद्धया सहितं यथा तथा वेदस्य रक्षां तत्प्रतिपादितकर्मणां यथार्थनिर्णयेन आचरणरूपां विदधति कुर्वते ? प्रमाणादीनां यथार्थबोधने तावन्नान्ये मीमांसकेभ्यः शक्ता इति भावः ॥ ५६३ ॥

१ 'विशदमथ भिदाम्', 'प्रथितमथभिदां', 'विविधदुरभिदां'.

पश्य तावद्भगवत इव जैमिनिमुनेः शासनं वैदिकैः सर्वैरप्यनतिक्रमणीयम् ॥ २४१ ॥

तथाहि—

नैयायिका वा ननु शाब्दिका वा त्रयीशिरस्सु श्रमशालिनो वा ॥
वादाहवे बिभ्रति जैमिनीयन्यायोपरोधे सति मौनमुद्राम् ॥ ५६४ ॥

यच्च मीमांसकेषु दोषोद्धाटनं तदज्ञानतः[1] ॥ २४२ ॥

भगवदनभ्युपगमनं दैवतचैतन्यनिह्नवश्चैषाम् ॥
कर्मश्रद्धावर्धकतत्प्राधान्यप्रदर्शनायैव ॥ ५६५ ॥

पुनरालोच्य सबहुमानम्—

आगमरूपविचारिण्यधिकरणसहस्रशिक्षितविपक्षे ॥
स्वामिनि जैमिनियोगिन्यपि रज्यति हृदयमस्मदीयमिदम् ॥५६६॥

---

**पश्येति** । भगवतः ईश्वरस्येव जैमिनिमुनेः मीमांसाशास्त्रप्रणेतुः शासनं शास्त्ररूपाज्ञां सर्वैरपि वैदिकैर्वेदविद्भिः अनतिक्रमणीयमनुल्लङ्घनीयम् ॥ २४१ ॥

**नैयायिका इति** । नैयायिकास्तार्किकाः वाथवा शाब्दिकाः शब्दशास्त्रविदः वैयाकरणा इत्यर्थः । ननु वा किंवा त्रयीशिरस्सु उपनिषत्सु श्रमशालिनः अभ्यासशीलिनश्च, वेदान्तिन इत्यर्थः । वादः परस्परपूर्वपक्षोत्तरपक्षरूपः एव आहवो युद्धं तस्मिन् जैमिनीयस्य मीमांसाशास्त्रस्य न्यायैः अधिकरणैः उपरोधे वाक्प्रतिबन्धे सति मौनमुद्रां बिभ्रति धारयन्ति । प्रमाणादीनां यथार्थावगमाभावान्न किमपि वक्तुं शक्नुवन्तीत्यर्थः ॥ ५६४ ॥

**यच्चेति** । अत एव मीमांसकेषु यत् दोषाणां 'मीमांसकाः कतिचित्–' इत्यादिपद्यद्वयप्रतिपादितानां उद्धाटनमारोपणं कृतं तत् अज्ञानतः याथातथ्येन तत्स्वरूपानवगमादित्यर्थः ॥ २४२ ॥

यदुक्तं ' ब्रह्मैव नाभ्युपगतः पुरुषोत्तमः ' ' देवतानां चैतन्यस्यापह्नवं चक्रुः ' इति दूषणद्वयं तदुद्धारार्थमाह—**भगवदिति** । एषां मीमांसकानां भगवतः परब्रह्मणः अनभ्युपगमनं अनङ्गीकरणं दैवतानां चैतन्यस्य निह्नवः अपलापश्चेति द्वयं कर्मणि यज्ञादिरूपे श्रद्धायाः आस्तिक्यबुद्धेः वर्धकं यत् तस्य यज्ञादिकर्मणः प्र[illegible]ान्यं मुख्यत्वं तस्य प्रदर्शनायैव, न तु वस्तुत इत्यर्थः ॥ ५६५ ॥

**आगमेति** । आगमस्य वेदस्य रूपं विधि-अर्थवाद-मन्त्रविनियोगादि[illegible]रूपं विचारयति तच्छीलः आगमरूपविचारी तस्मिन्, आगमैः " न जायते म्रि[illegible] वा विपश्चित्, अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः, तरति [illegible]कमात्मवित्, तत्त्वमसि " इत्यादिश्रुतिवचनैः रूपं स्वकीयं अविनाशित्व-सच्चिद[illegible]

---

१ 'तत्र तावदवधेहि'. 'तदापातत:'.

किंच—

शबर-कुमारिल-गुरवो मण्डन-भवदेव-पार्थसारथयः ॥
अन्ये च विश्वमान्या जयन्ति संत्रायमाणतन्त्रास्ते ॥ ५६७ ॥

## अथ वैयाकरणवर्णनम् ४९.

कृ०— अस्त्वित्ति विमानमन्यतो गमयन् पार्श्वतो दृष्ट्वा सोपहासम्—
टिड्ढाणञ्-द्वयसच्चुट्ट ङसिङसोस्तिप्-तस्-झि-सिप्-थस्-थ-मिब्—
वस्-मस्-तानचि च ष्टुना ष्टुरत इञ् शश्छोऽट्यचोऽन्त्यादि टि ॥
लोपो व्योर्वलि वृद्धिरेचि यचि भं दाधा घ्वदाम्नाज्झला—
वित्येते दिवसान्नयन्ति कतिचिच्छब्दान् पठन्तः कटून् ॥ ५६८ ॥

त्मकत्व-मुक्तिप्रदत्वादिरूपं विचारयति सर्वत्र जगति संचारयतीति तस्मिन्निति च, अधिकरणानां शास्त्रीयनयानां, अधिकेन परपराभवसमर्थेन रणानां युद्धानां च सहस्रेण शिक्षिताः अध्यापिताः, दण्डिताश्च विपक्षाः शास्त्रान्तरीयपूर्वपक्षाः शत्रवश्च येन तस्मिन्, स्वामिनि वेदोक्तकर्मणां याथार्थ्यवेत्तृत्वात्सकलपण्डितानामधिपतौ जैमिनिनामके योगिन्यप्येव, अपिरवधारणार्थकः । पक्षे स्वामिनि भगवति, जैमिनि-योगिनि चेत्यर्थः । अत्रापिः समुच्चायकः । इदमस्मदीयं मम हृदयं मनः रुज्यति रमते ॥ ५६६ ॥

'शबरादयो भगवद्भक्तानां विनिन्दनीयाः' इत्युक्तं निराकरोति— **शबरेति ।** शबरः शबरस्वामी कुमारिलः गुरुः प्रभाकरश्च ते, मण्डनः मण्डनमिश्रश्च भवदेवः पार्थसारथिश्च ते, एते सर्वे मीमांसासूत्र-भाष्य-अधिकरणरत्नमालादिग्रन्थकर्तारः । अन्ये तातार्चार्य-अप्पयदीक्षितादयो बोद्धयाः । ते च सम्यक् त्रायमाणं रक्ष्यमाणं तन्त्रं मीमांसाशास्त्रं यैस्ते तथाभूताः सन्तः अत एव विश्वमान्याः सर्वलोकपूज्याः सन्तः जयन्ति सर्वोत्कर्षेण वर्तन्ते । सकलवैदिककर्मप्रवर्तकत्वात् अन्येभ्यस्तर्कादिशास्त्रविद्भ्योऽपि मीमांसका एव मान्या इति भावः ॥ ५६७ ॥

**टिड्ढाणञिति ।** 'टिड्ढाणञ् द्वयसच्' इति "टिड्ढाणञ्-द्वयसज्-दघ्नञ्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरपः" इति पाणिनीयसूत्रैकदेशः, "चुट्टू" "ङसि-ङसोः" 'तिप्-तस्-झि' इत्यप्येकदेशः । "तिप्-तस्-झि-सिप्-थस्-थ-मिप्-वस्-मस्-तातां-झ-थासाथां-ध्वमिड्-वहि-महिङ्" इति सूत्रस्य । "अनचि च" "ष्टुना ष्टुः" "अत इञ्" "शश्छोऽटि" "अचोऽन्त्यादि टि" "लोपो व्योर्वलि"

१ 'शबर-कुमारिल-गुरवो मण्डनयन् समुद्वहति सुदृशम् । वर्णादीनां धर्मान् बुद्ध्वा विधिवत्प्रयुङ्क्तेऽसौ'. (?)

झोऽन्तः[1] शश्छोटि शेषो घ्यसखि ससजुषो रुर्विरामोऽवसानम्
छे चेति व्यर्थवाचः सदसि यदि सतां शाब्दिकाश्चेद्बुधाः स्युः ॥
किं तैरेवापराद्धं ? नट-विट-गणिकानृत्य-हस्त-प्रचारै-
स्तोधी तोधी तधीति त्तकिट तकिट धिक् ताहधिक् तत्तकारैः ५६९

किंच—

सूत्रैः पाणिनिकीर्तितैर्बहुतरैर्निष्पाद्य शब्दावलिम्
वैकुण्ठस्तवमक्षमा रचयितुं मिथ्याश्रमाः[2] शाब्दिकाः ॥
पक्त्वान्नं महता श्रमेण विविधापूपाग्र्यसूपान्वितम्
मन्दाग्नीननुरुन्धते मितबलानाघ्रातुमप्यक्षमान् ॥ ५७० ॥

---

"वृद्धिरेचि" "यचि भम्" "दाधा घ्वदाप्" "नाज्झलौ" इत्युक्तप्रकारान् एते वैयाकरणाः कतिचित् कटून् कठोरत्वात् श्रवणानर्हान् शब्दान् पठन्तः सन्तः दिवसान् नयन्ति गमयन्ति ॥ ५६८ ॥

**झोन्त इति ।** "झोन्तः" "शश्छोऽटि" "शेषो घ्यसखि" "ससजुषोरुः" "विरामोऽवसानम्" "छे च" इत्युक्तप्रकारेण व्यर्था निष्फला वाचो येषां ते शाब्दिकाः वैयाकरणाः सतां पण्डितानां सदसि यदि बुधाः पण्डिताः स्युः, तर्हि तैः प्रसिद्धैः नटाः नाट्यकर्तारश्च विटाः जाराश्च गणिका वेश्याश्च तेषां नृत्यं हस्ता हस्तविक्षेपाः प्रचाराः पादविक्षेपाश्च तैः, नटानां नृत्यं, विटानां हस्ताः, गणिकानां पादविक्षेपाश्चेति क्रमेण बोध्यम् तथा तोधी तोधीत्यादिमृदङ्गादिवाद्यशब्दैः किमपराद्धम् ? नृत्यादिकर्तारोऽपि पण्डिताः कुतो न भवेयुरिति प्रश्नाभिप्रायः ॥ ५६९ ॥

**सूत्रैरिति ।** पाणिनिना मुनिना कीर्तितैः रचितैः बहुतरैः अष्टाध्यायपरिमितैः सूत्रैः सुप्-तिङ्-कृत्-तद्धितादिप्रत्ययविधायकैः "ङ्याप्प्रातिपदिकात्" "लः कर्मणि च–" "तिप्-तस्-झि–" "कर्तरी कृत्" "तस्यापत्यम्" "अत इञ्" इत्यादिभिः शब्दानां, अत्र शब्दपदं सुप्तिङुभयसाधारणम् । राम-कृष्ण-मुकुन्दादीनां, भवति, एधते, नौमि, स्तौमि, इत्यादितिङन्तानां, वासुदेव-राघवप्रभृतीनां च आवल्भि पङ्क्तिं निष्पाद्य साधयित्वा, वैकुण्ठस्य भगवतो विष्णोः स्तवं स्तुतिं रचयितुं गद्य-पद्यादिचमत्कृतिजनकवचनैः कर्तुं अक्षमाः असमर्थाः, प्रकृति-प्रत्ययसंयोजनेन शब्दसिद्धिज्ञानेऽपि सम्यक् तदर्थानवगमादिति भावः । अत एव मिथ्या व्यर्थ एव श्रमोऽभ्यासो येषां ते तथाभूताः शाब्दिकाः शब्दशास्त्रविदः वैयाकरणा इत्यर्थः । सन्तीति शेषः । एतदेवोपमानेन स्पष्टयति—विविधाः नानाविधाः ये अपूपाः गोधूमादिपिष्टनिर्मिता भक्ष्यपदार्थाः तैः अग्र्यं श्रेष्ठं सूपादिभिरन्वितं युक्तं च अन्नं

---

१ अयं श्लोको मुद्रितपुस्तके एव दृश्यते, अन्यत्रानुपलम्भात् प्रक्षिप्त इति भाति ।
२ 'वन्ध्यश्रमाः'.

वि०—मह्याभरणेषु वैयाकरणेषु भवान् मा स्म कलयतु दोष-शकलम् ॥ २४३ ॥

यतः—

कृतदुरितनिराकरणं व्याकरणं चतुरधीरधीयानः ॥
बुधजनगणनावसरे कनिष्ठिकायां परं जयति ॥ ५७१ ॥

पातञ्जले विष्णुपदापगायाः पातं जले चापि नयेऽवगाहम् ॥
आचक्षते शुद्धिदमा प्रसूतेरा च क्षते रागमधोक्षजे च ॥ ५७२ ॥

अपि च—

नृणामनभ्यस्तफणाभृदीशगिरां दुरापा बुधराजगोष्ठी ॥
अबुद्धचापश्रुतिपद्धतीनां युद्धक्षमेवोद्धतयोद्धसार्था ॥ ५७३ ॥

---

महता श्रमेण प्रयत्नेन पक्त्वा निर्माय मितं अल्पं बलं येषां तान् अत एव मन्दः अग्निर्जाठरो येषां तान् अत एव च आघ्रातुं गन्धोपादानं कर्तुमपि, किमुत भोक्तुं, अक्षमान् असमर्थान् जनान् अनुरुन्धते अनुसरन्ति । तत्तुल्या इत्यर्थः ॥ ५७० ॥

**महीति** । मह्याः पृथिव्याः आभरणेषु भूषणरूपेषु वैयाकरणेषु भवान् दोषस्य शकलं खण्डमपि, किमुत संपूर्णं दोषं, मा स्म कलयतु ॥ २४३ ॥

मह्याभरणत्वमेवाह— **कृतेति** । कृतं दुरितानां पापानां निराकरणं निवारणं येन तत्तथोक्तं, वेदाङ्गत्वादिति भावः । तदुक्तम् पाणिनीयशिक्षायाम्— "शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।" इति । अत एव भगवान् पतञ्जलिरपि महाभाष्ये आह— "रक्षोहागमलघ्वसंदेहाः प्रयोजनम्, एकः शब्दः सम्यग्ज्ञातः सम्यक् प्रयुक्तः स्वर्गे लोके कामधुग् भवति" इति । व्याकरणं शास्त्रं चतुरा धीर्बुद्धिर्यस्य सः पुरुषः अधीयानः अभ्यस्यन् सन्, हेतौ शतृप्रत्ययः । बुधजनानां पण्डितजनानां गणनावसरे संख्यानसमये कनिष्ठिकायां परमत्यन्तं जयति सर्वोत्कर्षेण वर्तते । अङ्गुलिभिः पण्डितगणने प्रथमं वैयाकरण एव गण्यते पश्चात् नैयायिकादय इति भावः ॥ ५७१ ॥

**पातञ्जल इति** । पतञ्जलेः एतन्नामकमुनेः शेषावतारस्य अयं पातञ्जलस्तस्मिन्, तेन रचिते इत्यर्थः । नये व्याकरणमहाभाष्यरूपे शास्त्रे पातं प्रवेशं अभ्यासमित्यर्थः । तथा विष्णुपदापगायाः गङ्गायाः जले चापि अवगाहं स्नानं, अधोक्षजे भगवति विष्णौ च रागं भक्तिं च आ प्रसूतेः जन्मारभ्य आ क्षतेर्मरणपर्यन्तं च शुद्धिं क्रमेण वाचिकीं शारीरीं मानसीं च पवित्रतां ददाति समर्पयतीति तथाभूतं आचक्षते कथयन्ति । पण्डिता इति शेषः ॥ ५७२ ॥

किंच **नृणामिति** । अनभ्यस्ता अनधीता फणाभृतां सर्पाणां ईशस्य शेषाव-

---

१ 'त्रय्या'. २ 'कनिष्ठिकामेव चैष रञ्जयति'. ३ 'च'. ४ 'शुद्धिमथा प्रसूते'. ५ 'रितथमधोक्षजे च'. ६ 'वोद्धतयोधसार्था'.

तथाहि—

ना[1]ङ्गीकृतव्याकरणौषधानामपाटवं वाचि सुगाढमास्ते ॥
कस्मिंश्चिदुक्ते तु पदे कथंचित्स्वैरं वपुः खिद्यति वेपते च ॥५७४॥

कृ०—साक्षेपम्—

कथं सखे! शतकोटिपाणिनिगदितादपि पाणिनिगदितमेव व्याकरण-मा[2]द्रियन्ते सन्तः ? ॥ २४४ ॥

**वि०**—पाणिनीयमेव हि व्याकरणं प्र[3]योगौपयिकं प्रविशदप्रतीति-कारणमिति तत्रैवादरः पण्डितानाम् ॥ २४५ ॥

---

तारस्य पतञ्जलेः गीर्भाष्यरूपा वाणी यैस्तेषां नृणां पण्डितजनानां बुधराजानां पण्डितश्रेष्ठानां गोष्ठी सभा दुरापा दुष्प्रवेशा भवति। कथमिव। अबुद्धा अज्ञाता चापश्रुतेर्धनुर्वेदस्य पद्धतिर्मार्गो यैस्तेषां उद्धतः योद्धुमुद्युक्तः योद्धॄणां योधानां सार्थः समूहो यस्यां सा युद्धस्य समरस्य क्षमेव भूमिरिव ॥ ५७३ ॥

एतदेव स्पष्टयति—**नाङ्गीकृतेति**। नाङ्गीकृतं दृढाभ्यासेन न स्वीकृतं व्याकरणमेवौषधं यैस्तेषां जनानां वाचि वाण्यां अपाटवं वक्तृत्वाभावरूपमकौशलं सुगाढं दृढतरं आस्ते वर्तते। ततश्च केनचित् पण्डितेनेति शेषः। कथंचित्, न तु सम्यक् प्रकृति-प्रत्ययादिज्ञानयुक्तं कस्मिंश्चित् पदे सुप्तिङन्तादिरूपे, उक्ते सति स्वैरं स्वच्छन्दं यथा तथा वपुः शरीरं खिद्यति घर्मयुक्तं भवति। वेपते कम्पते च। व्याकरणज्ञानाभावात् सुप्तिङन्तपदानां याथार्थ्यानवगमादिति भावः ॥ ५७४ ॥

**कथमिति**। हे सखे! शतकोटिर्वज्रं "शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः।" इत्यमरः। पाणौ हस्ते यस्य सः तेन, इन्द्रेणेत्यर्थः। एतदुपलक्षणम्। तेन चन्द्र-काशकृत्स्नादयोऽपि व्याकरणप्रणेतारो ज्ञेयाः। निगदितात्प्रोक्तादपि पाणिनिना मुनिना एकेनैव गदितं प्रोक्तं व्याकरणं अष्टाध्यायपरिमितसूत्रपाठरूपमेव, सन्तः पण्डिताः कथं आद्रियन्ते सत्कुर्वन्ति ? ॥ २४४ ॥

**पाणिनीयमिति**। हि यस्मात्कारणात् पाणिनेरिदं पाणिनीयं तत्प्रणीतमित्यर्थः। व्याकरणमेव प्रयोगाणां वैदिक-लौकिकानां औपयिकं यथायुक्तं प्रकृति-प्रत्ययादियोजनेन साधकतयोपयोगि, अत एव प्रकर्षेण विशदायां निर्मलायां प्रतीतौ ज्ञाने कारणं भवति। एतस्मिन् ज्ञाते कस्मिंश्चिदपि प्रयोगसाधने न व्याकरणान्तरस्यापेक्षेति भावः। इति हेतोः पण्डितानां तत्र पाणिनीयव्याकरण एवादरः सत्कारः ॥ २४५ ॥

---

१ 'अस्वीकृत'. २ 'आद्रियते' इत्येव क्वचिद्दृश्यते. ३ 'प्रायेणानौपाधिक'.

तथाहि—

सूत्रं पाणिनिबद्धं कण्ठे[1] कलयन् समुद्वहति सुदृशम् ॥
वर्णादीनां धर्मान्बुद्ध्वा विधिवद्बुधः प्रयुङ्क्तेऽसौ ॥ ५७५ ॥

---

# अथ वैदिकवर्णनम् ५०.

कृ०—अस्त्विति विमानमन्यतश्चालयन् पुरोऽवलोक्य—

सखे ! पश्य छान्दसानर्थचापलेन[2] विक्रीयमाणाम्नायान् ॥ २४६ ॥

आः कष्टमपहृष्टाः शिष्टा अपि वित्तचापलाविष्टाः ॥
अध्यापयन्ति वेदानादाय चिराय मासि मासि भृतिम् ॥ ५७६ ॥

वि०—वयस्य मैवं वादीः ॥ २४७ ॥

नाध्यापयिष्यन् निगमान् श्रमेणोपाध्यायलोका यदि शिष्यवर्गान् ॥
निर्वेदवादं किल निर्वितानमुर्वीतलं हन्त ! तदाभविष्यत् ॥ ५७७ ॥

---

**सूत्रमिति** । पाणिना हस्तेन निबद्धं त्रिसूत्र्यादिकरणेन निर्मितं, पाणिनिना ऋषिणा बद्धं विरचितं च सूत्रं, यज्ञोपवीतरूपं ग्रन्थरूपं च कण्ठे गले, मुखे च कलयन् उपनयनविधिना, उच्चारणरूपेण च धारयन् सन्, अत्रोभयार्थेऽपि "लक्षण-हेत्वोः—" इत्यादिना हेतौ शतृप्रत्ययः । तेन सूत्रस्य यथाविधिधारणाद्धेतोरित्यर्थः । अन्यथाऽधिकाराभावात् । सुदृशं स्त्रियं, सुष्ठु ज्ञानं च, अत्र दृशिर्ज्ञानार्थकः । समुद्वहति पाणिग्रहणविधिना स्वीकरोति, प्राप्नोति च । ततः असौ बुधः पण्डितः वर्णादीनां, ब्राह्मणादीनां आदिशब्देन ब्रह्मचर्याद्याश्रमग्रहणम् । अक्षरादीनां च, अत्रादिपदेन शब्दादिग्रहः । धर्मान् अध्ययनाध्यापनादीन् ह्रस्व-दीर्घ-पुंलिङ्ग-स्त्रीलिङ्गादींश्च बुद्ध्वा ज्ञात्वा विधिवद्यथाविधि प्रयुङ्क्ते आचरति, उच्चारयति च ॥ ५७५ ॥

**सख इति** । छान्दसान् केवलं वेदमन्त्रपाठकान्, न त्वर्थज्ञान् अर्थचापलेन द्रव्यलोभेन विक्रीयमाणाः मासिकादिवेतनग्रहणेन अध्याप्यमानाः आम्नायाः वेदा यैस्तान् पश्य ॥ २४७ ॥

एतदेव प्रपञ्चयति—**आ इति** । वित्तचापलेन धनलोभेन आविष्टाः कृतप्रवेशाः, धनार्जनलालसायुक्ता इत्यर्थः । अत एव अप्रहृष्टाः संतोषरहिताः शिष्टा अपि वैदिकाः मासि मासि प्रतिमासं भृतिं वेतनमादाय चिराय संततं वेदान् अध्यापयन्ति शिक्षयन्ति । आः कष्टमिति खेदे ॥ ५४६ ॥

**नाध्यापयिष्यन्निति** । उपाध्यायलोकाः अध्यापकजनाः शिष्यवर्गान् निगमान् वेदान् श्रमेण स्वोदरनिर्वाहार्थभृतिग्रहणयत्नेन यदि नाध्यापयिष्यन् नाशिक्षयि-

---

१ क्वचित् 'कण्ठे' इति पदं न दृश्यते. २ 'धनचापलेन'.

कृ०—विरुद्धमिदं भाषितं यद्वेदापाये सति न यज्ञाभ्युदयः स्यादिति॥

वि०—अवगच्छ तावदेतदविरुद्धमेव ॥ २४९ ॥

नाम्नायज्ञो मखे यस्मिन् यजमानतया स्थितः ॥
तत्समागमतः सोऽपि नाम्ना यज्ञो भवेन्न किम् ? ॥ ५७८ ॥

---

## अथ राजसेवकवर्णनम् ५१.

कृ०—पुनरन्यतो दृष्ट्वा सोपहासम्—

पश्यैतान् राजसेविनः परित्यक्तलोकद्वयसौख्यान् स्पष्टमौर्ख्यान् पुरुषान् ॥ २५० ॥

---

ष्यन्, तर्हि तदा उर्वीतलं भूतलं निर्वेदवादं वेदपाठरहितं अत एव च निर्वितानं यज्ञरहितं "क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके।" इत्यमरः । अभविष्यत् किल। अत्र "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" इत्यनुवर्तमाने "भूते च" इति क्रियाया अनिष्पत्तिरूपेऽर्थे लृङ्। हन्तेति खेदे ।"वेदा हि यज्ञार्थमभिप्रवृत्ताः" इत्याद्यनुशासनेन वेदानां यज्ञप्रवर्तकत्वात्तदभावे यज्ञानामप्यभावः ततश्च भूमौ अन्नाद्यनुत्पत्तेरतीव हानिः स्यादिति भावः। तदुक्तम्—"यज्ञाद्भवति पर्जन्यः पर्जन्यादन्नसंभवः।" इति। एतदभिप्रायमेव भगवानप्याह गीतायाम्—"सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः। अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्।" इति ॥ २४८ ॥

**विरुद्धमिति।** वेदानां अपाये नाशे सति यज्ञानां अभ्युदयः उत्पत्तिः यथाविध्यनुष्ठानमित्यर्थः। न स्यादिति यत् इदं विरुद्धं भाषितं कथितम्। स्मृत्यादावपि तद्विधानादिति भावः॥ २४८ ॥

**अवगच्छेति।** एतत् वेदाध्यापनाभावे निर्वेदवादं निर्वितानं भूतलमित्याद्यस्मत्प्रतिपादितमेव अविरुद्धं यथार्थं, तत्पुनरिति शेषः। अवगच्छ जानीहि ॥ २४९ ॥

**नाम्नेति।** यस्मिन् मखे यज्ञे आम्नायज्ञः वेदवित् यजमानतया यष्टृरूपेण स्थितः न भवेत्, तस्यावेदज्ञयजमानस्य समागमतः संसर्गाद्धेतोः सः यज्ञोऽपि न विद्यते आम्नायज्ञो वेदवेत्ता यस्मिन् तथाभूतः वेदविद्यजमानरहित इत्यर्थः । अथवा स यज्ञः नाम्ना संज्ञामात्रेणैव, न तु विधिना, वेदमन्त्रपाठाभावात् । न भवेत् किम् ? अपि तु भवेदेवेति कृत्वा जगतो निर्वेदवादत्वेऽतीव महती हानिः स्यादिति भावः॥ ५७८ ॥

…न्नि। परित्यक्तं लोकद्वयस्य ऐहिकामुष्मिकरूपस्य, तत्र यथाविधि कर्मानु-
…मततराजकार्यपरत्वाद्यथाकालं भोजन-सुखनिद्राद्यभावादितर-
…त्वाच्चास्यापि लोकस्येति बोध्यम् । सौख्यं यैस्तान्
…ां तान् राजसेविनः पुरुषान् पश्य ॥२५०॥

नैषां संध्याविधिरविकलो नाच्युतार्चाऽपि साङ्गा
न स्वे काले हवननियमो नापि वेदार्थचिन्ता ॥
न क्षुद्वेलानियतमशनं नापि निद्रावकाशो
न द्वौ लोकावपि तनुभृतां राजसेवापराणाम् ॥ ५७९ ॥

वि०—दुस्सहैषा बहुजनपोषकाणामेषां निन्दा ॥ २५१ ॥

अशुभपुषि कलावप्यप्रमत्ताः स्वधर्मा–
दनुदिनमुपकारानाचरन्तो बुधानाम् ॥
बहुजनपरिपुष्टौ बद्धदीक्षास्त एते
तनुसुखमपि हित्वा तन्वते राजसेवाम् ॥ ५८० ॥

---

एतदेव स्पष्टमाह—**नैषामिति** । एषां राजसेवापराणां जनानां संध्यायाः विधिरनुष्ठानं अविकलः यथोक्तः न भवति, एषामिति प्रतिवाक्यं योजनीयम् । अच्युतस्य भगवतो विष्णोः अर्चा पूजापि साङ्गा संपूर्णा न भवति । एतेन संध्या-पूजादिकं यद्यपि एतैः कृतं तथापि तन्मनःपूर्वकं यथाविधि न भवति, किंतु कथमपि केवलमाचमनादिमात्रेण गन्ध-पुष्पादिमात्रसमर्पणेन चेति बोध्यम् । तथा स्वे प्रातर्मध्याह्नादिशास्त्रविहिते काले हवनस्य औपासन-वैश्वदेवादेर्नित्यमागन्तुसाधनस्य कर्मणः नियमः नियताचरणरूपः "नियमस्तु स यत्कर्म नित्यमागन्तुसाधनम् ।" इत्यमरः । न भवति । वेदस्य अर्थचिन्ता अभिधेयविचारोऽपि न भवति । एतावता पारलौकिकसौख्याभावमुक्त्वा ऐहलौकिकमाह—**नेति** । क्षुधः बुभुक्षायाः वेलायां नियतं सम्यक्पाचितं उदरपूर्तिपर्याप्तं वा अशनं भोजनं न, तथा भोजनोत्तरं निशायां वा निद्रायाः अवकाशः अवधिः निश्चिन्ततया प्रातःकालपर्यन्तः कालो वा न अस्ति । एवं राज्ञः सेवापराणां तनुभृतां जनानां द्वौ लोकावपि द्वयोर्लोकयोरपि सौख्ये इत्यर्थः । न भवतः ॥ ५७९ ॥

**दुःसहेति** । बहुजनानां पोषकाणां यथोक्ततया तत्कार्यकरणादित्यर्थः । एषां राजसेवकानामेषा त्वत्कृता निन्दा दुःसहा श्रोतुमशक्या ॥ २५१ ॥

**अशुभेति** । अशुभानि पापसंपादकानि कर्माणि पुष्णाति वर्धयतीति तत्पुषि कलौ युगेऽपि स्वधर्मात् स्वाचारात् अप्रमत्ताः स्वाचारे सावधानाः सन्त इत्यर्थः । बहूनां स्वकीयानां जनानां परिपुष्टौ परिपोषणे बद्धा स्वीकृता दीक्षा व्रतं यैस्ते एते राजसेवकाः अनुदिनं प्रतिदिनं बुधानां पण्डितानां उपकारान् आचरन्तः कुर्वन्तः सन्तः, तनुसुखं शरीरसुखं यथाकालं पर्याप्तभोजन-निद्रादिरूपमपि हित्वा त्यक्त्वा राज्ञः सेवां तन्वते कुर्वन्ति । यथा कालं भोजन-निद्राद्यसेवनं संध्या-पूजाद्यनाचरणं चापि लोकोपकारार्थमेव ततश्चोत्तमलोकप्राप्तिरत्रापि मानश्चेति द्वयमपि सिध्यतीति भावः ॥ ५८० ॥

---

१ 'भवति सकला'.

# अथ दिव्यक्षेत्रादिवर्णनोपसंहारः ५२.

सर्वाणि दिव्यक्षेत्राण्यवलोक्य साञ्जलिबन्धं कृशानुमुद्दिश्य—

गङ्गाझरीपरिचिताङ्घ्रि जगन्निदानम्
रङ्गादिधामसु चिरात्कृतसन्निधानम् ॥
विश्वं स्वतो विशदमेव विलोकमानम्
वन्दस्व वस्तु वरदार्तिहराभिधानम् ५८१

कृ०—नन्वत्र तृतीयचरणार्थो न मह्यं रोचते ॥ २५२ ॥

विलोचने विभोर्यस्य विख्याते पुष्पवत्तया ॥
साक्षात्कर्तुं स्फुटं सर्वं स शक्नोति? कथं हरिः ॥ ५८२ ॥

---

**गङ्गेति ।** गङ्गायाः झर्या प्रवाहेण परिचितौ समाश्रितौ अङ्घ्री चरणौ यस्य तत्, पक्षे गङ्गाझर्या परिचिता सततनिवासरूपेणाश्रिताः अङ्घ्रयः शिफा इव अङ्घ्रयः जटा इत्यर्थः । यस्य तत् इति च, जगतो विश्वस्य निदानमादिकारणं उत्पादकमिति यावत् । अत एव विश्वं स्वसृष्टं निखिलं जगत् स्वत एव विशदं सुप्रसन्नं यथा भवति तथा विलोकमानं रङ्गादिधामसु श्रीरङ्ग-द्वारावती-जम्बूकेश्वरप्रभृतिषु पुण्यक्षेत्रेषु चिरात् बहुकालपर्यन्तं कृतं संनिधानं सामीप्यं येन तथाभूतं अत एव वरदानि इच्छितफलप्रदानि आर्तिहराणि तापत्रयादिपीडापरिहराणि च अभिधानानि हरि-श्रीकृष्ण-हर-शिव-साम्बादीनि नामानि यस्य तत् वसति निखिलप्राणिनां मनसि इति वस्तु निखिलप्राणिमात्रान्तर्यामिरूपमिति यावत् । 'वस निवासे' इति धातोः "वसेस्तुन्" इत्यौणादिकस्तुन् प्रत्ययः । परमात्मरूपं वन्दस्व अभिवादय । **हे कृशानो !** त्वमिति शेषः ॥ ५८१ ॥

**अत्रेति ।** अत्र श्लोके तृतीयचरणस्य 'विश्वं स्वतः' इत्यादेः अर्थः स्वत एव जगदवलोकनकर्तृत्वरूपः मह्यं न रोचते ॥ २५२ ॥

**विलोचन इति ।** यस्य विभोः प्रभोः विलोचने द्वे नेत्रे, अत्र द्विवचनेन तृतीयनेत्राभावः सूचितः । पुष्पं तदाकारो दृष्टिप्रतिबन्धकरः कनीनिकायां जायमानो रोगविशेषः अस्ति ययोस्ते तयोर्भावस्तत्ता तया, "पुष्पं विकास आर्तवे । धनदस्य विमाने च कुसुमे नेत्ररुज्यपि ।" इति हैमः । पुष्पवन्तौ चन्द्र-सूर्यौ तद्रूपेण चेति । विख्याते प्रसिद्धे स्तः । स हरिः विष्णुः, न तु हरः, तस्य तृतीयलोचनस्य विद्यमानत्वादिति भावः । सर्वं विश्वं साक्षात् प्रत्यक्षं स्फुटं कर्तुं स्पष्टतया द्रष्टुं कथं शक्नोति समर्थो भवति ? न कथमपीत्यर्थः । अत्र 'विलोचने विख्याते, पुष्पवत्तया' इत्युपलक्षणम् । तेन श्रोत्रे दिशः इत्यादि यथायथमूह्यम् । तेन च विश्वव्यापकतोक्ता । हरिः स्वस्मात् विश्वं पृथक् कर्तुं कथं शक्नोतीति

वि०—सूर्यचन्द्रलोचनतया सचमत्कारं चक्रधरं स्तुवानाय तुभ्यं न कुप्यामि। शृणु तावदिदम् ॥ २५३ ॥

श्रेयस्तोयदसंप्रदायरसिकच्छायः सहायः श्रिय-
श्चिन्तारत्नसपत्नवीक्षितलवश्चेक्रीयतामायतम् ॥
यो विश्वेन हि गात्रवान् हिमरुचाप्युष्णांशुना नेत्रवान्
सुग्रीवेण च मित्रवान् कुश-लव-ब्रह्मादिभिः पुत्रवान् ॥५८३॥

सखे! संक्षिप्य वक्ष्यमाणं सारभूतमिममर्थं गृहाण ॥ २५४ ॥

---

**सूर्य-चन्द्रेति**। सूर्य-चन्द्रलोचनतया तद्रूपेणेत्यर्थः। सचमत्कारं अर्थद्वयबोधकशब्दप्रयोगसहितं यथा तथा चक्रधरं विष्णुं स्तुवानाय तस्य स्तुतिं कुर्वते तुभ्यं न कुप्यामि। "क्रुध-द्रुह—" इत्यादिना चतुर्थी। वस्तुतो दूषणाभावादित्यर्थः॥ २५३ ॥

**श्रेय इति**। तोयदस्य मेघस्य संप्रदायः रीतिः वर्णरूप इत्यर्थः। तस्मिन् रसिका छाया कान्तिर्यस्य सः, पक्षे तोयदानां संप्रदायो मार्गः व्योमरूपः स एव रसिकाः स्निग्धाः छाया इव छायाः केशाः यस्य सः भगवान् व्योमकेशः शिव इत्यर्थः। श्रियः लक्ष्म्याः, अणिमाद्यष्टविधैश्वर्यस्य च "लक्ष्मी-सरस्वती-धा (?) त्रिवर्गसंपद-विभूति-शोभासु। उपकरणवेशरचनाविधानेषु च श्रीरिति प्रथिता।" इति व्याडिः। सहायः पतिः, पोषकश्च अत एव चिन्तारत्नं चिन्तामणिः तस्य सपत्नः सदृशः वीक्षितस्य अवलोकनस्य लवः लेशः कटाक्ष इत्यर्थः। यस्य सः भक्तेभ्य इष्टफलप्रद इत्यर्थः। आयतं विस्तृतं श्रेयः चेक्रीयतां भृशं करोतु। करोतेर्यङि "रीङ् ऋतः" इति रीङादेशः। कथंभूतः सः। यः प्रभुः विश्वेन गात्रवान् देहवान् "आत्मा वा इदमग्र एक आसीत्" "स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम्। पुरुष एवेदं सर्वं" इत्यादिश्रुतिभ्यः। हिरवधारणार्थकः। हिमा शीतला रुक् कान्तिर्यस्य सः तेन चन्द्रेण, अपिः समुच्चायकः। उष्णाः अंशवः किरणाः, ज्वालाश्च यस्य तेन सूर्येण, अग्निना चापि नेत्रवान् चन्द्रसूर्यनेत्रो विष्णुः, अग्निनेत्रः शिवश्चेत्यर्थः। सुग्रीवेण एतन्नामकवानरेण मित्रवान् स्नेहसंपादकः, रामावतारे इत्यर्थः। कुशः लवश्च, एतौ रामावतारोत्पन्नौ। ब्रह्मा च ते आदयः मुख्याः येषु इन्द्रादिषु तैः, पक्षे कुशलं कल्याणं वान्ति प्राप्नुवन्तीति कुशलवाः अखण्डकल्याणसंपन्ना इत्यर्थः। ये ब्रह्मादयः आदिशब्देन विष्णु-शक्रादिग्रहणम्। तैश्च पुत्रवान् पुत्रयुक्तः। एतादृशमहासामर्थ्यसंपन्नः शिवो विष्णुश्चेति बोध्यम्॥ ५८३ ॥

**सखे इति**। संक्षिप्य सर्वमप्येकीकृत्य अत एव सारभूतं वक्ष्यमाणं अनुपदमेव कथ्यमानं अर्थमभिधेयं गृहाण शृणु॥ २५४ ॥

---

१ 'स्तुवते'.

[ यामुनतीर्थाश्रमिणौ रामानुजमुनिर्मुकुन्दश्च ॥
आद्यं त्रिवेणुधरमधिकमन्यदन्ताद्यमेकवेणुधरम् ॥ ५८४ ॥
कटाक्षलहरीमुहुःकवलितामृतस्तोमया
विलोचनयुगश्रियं(या) विवृतसर्वदानव्रतम् ॥
शुकादिभिरुपासितं शुभचरित्रभाजो जनाः
समस्तभयवारणं शरणयन्ति नारायणम् ॥ ५८५ ॥
नाहं नापि च मत्सुतो न च सुरास्सर्वे अमी तत्त्वतो
ध्यानादौ च सचेतसो मुनिगणा जानन्ति विष्णोः पदम् ॥
इन्धन्नाभिसरोजशायिपृथुलस्वास्तारमाकर्णयन्
शेते पन्नगसार्वभौमशयने श्रीपद्मनाभः श्रिया ॥ ५८६ ॥

---

इतः परं 'यामुनतीर्थ—' इत्यादयो द्वादश श्लोकाः अस्मत्संपादितादर्शपुस्तकेऽन्येषु पुस्तकेषु च नैवोपलभ्यते । किन्तु अत्रत्यमुद्रितैकस्मिन् पुस्तके एव दृश्यन्ते । अत एव ते रामानुजीयमतपक्षपातिना केनचित्प्रक्षिप्ता एवेति भाति, तेषु कतिचिदतीव विसंबद्धाः पूर्वापरसंबन्धरहिताश्च, कतिचिच्च सुसंबद्धाः इति ये प्रतीतास्ते एवात्र मूले निवेशिताः, यथामति व्याख्याताश्चापि—**यामुनेति** । यामुनतीर्थेन एतन्नामकगुरुणा प्रोक्तः उपदिष्ट इति यावत् । आश्रमः चतुर्थः संन्यासः अस्यास्तीति तदाश्रमी, यमुनैव यामुनं तच्च तत्तीर्थं च यामुनतीर्थं तत्र तत्संनिधावित्यर्थः । आश्रमः निवासः यस्यास्तीति तदाश्रमी तौ, एकः रामानुजमुनिः अन्यश्च मुकुन्दः श्रीकृष्णः । द्वयोस्तारतम्यमाह—आद्यं प्रथमं श्रीरामानुजरूपं त्रिवेणुधरं संन्यासाश्रमित्वात् त्रिदण्डधरं अत एव अधिकं अन्यस्मात् श्रेष्ठं, अन्यन्मुकुन्दात्मकं च एकस्यैव वेणोः वाद्यविशेषस्य धरं धारकं अत एव अन्तः लुप्तः आद्य इति शब्दो यस्मात् तथाभूतं, पूर्वस्मान्न्यूनमित्यर्थः । वस्तुतस्तु अन्तः प्रलयः आद्यः सर्गश्च अर्थाज्जगतः तौ यस्मात् तत्, एतदुपलक्षणं स्थितेरपि । तेन जगतः सर्ग-स्थिति-लयकरमित्यर्थः ॥ ५८४ ॥

**कटाक्षेति** । कटाक्षाणां अपाङ्गदर्शनानां लहरीभिः मुहुर्वारंवारं कवलितः ग्रस्तः अमृतस्य स्तोमः निधिर्यया तया विलोचनयोर्नेत्रयोर्युगस्य द्वयस्य श्रिया विवृतं प्रकटीकृतं सर्वदानस्य भक्तेभ्यः सर्वस्वार्पणस्य व्रतं येन तं शुकादिभिः, आदिशब्देन नारद-सनकादिमुनिग्रहणम् । मुनिभिः उपासितं सेवितं, समस्तानां सकलानां भयानां वारणं निवारणं यस्मात् तं नारायणं शुभानि कल्याणावहानि चरित्राणि भजन्तीति तद्भाजः, सत्कर्मैकर्तार इत्यर्थः । जनाः शरणयन्ति शरणं कुर्वन्ति, स्वरक्षकं ज्ञात्वा भजन्तीत्यर्थः ॥ ५८५ ॥

**नाहमिति** । इन्धत् दीप्तिमत् यन्नाभिसरोजं नाभिकमलं तस्मिन् शायिनः निवासिनः अर्थाद्ब्रह्मणः पृथुलं महान्तं उच्चैरुच्चारितमित्यर्थः । स्वास्तारं वेदमन्त्रयुक्तं

उपवीतिनमूर्ध्वपुण्ड्रवन्तं त्रिजगत्पुण्यफलं त्रिदण्डहस्तम् ॥
शरणागतसार्थवाहमीडे शिखया शेखरिणं पतिं यतीनाम् ॥ ५८७ ॥

कपर्दिमतकर्दमं कपिलकल्पनानाटकैः
कुमारिलकुभाषितैर्गुरुनिबन्धनग्रन्थिभिः ॥
तथागतकथाशतैस्तदनुसारिजल्पैरपि
प्रतारितमिदं जगत्प्रगुणितं यतीन्द्रोक्तिभिः ॥ ५८८ ॥

सावित्रान्वयसंभवेन भवता मुक्तश्शराशीविषः
संवर्तोदितसप्तसप्त(प्ति)पटलीसब्रह्मचारी हठात् ॥
आस्वाद्य क्षितिजापहारिहृदयक्रीडारतं मारुतं
तत्संतोषकथाभिधानकुतुकी मन्ये जगाहे महीम् ॥ ५८९ ॥

---

निजस्तवं आकर्णयन् शृण्वन् पन्नगसार्वभौमशयने श्रीशेषशयने श्रीपद्मनाभः विष्णुः श्रिया लक्ष्म्या सह शेते स्वपिति, कीदृशं स्वास्तारं विष्णोर्भगवतः पदं अहं न जानामि, मम सुतः पुत्रोऽपि न जानाति, किंच अमी शक्रादयः सुरा देवा अपि न जानन्ति, किंतु ध्यानादौ तद्रूपैकतानचित्तवृत्त्यादौ आदिशब्देन धारणा-समाध्यादेर्ग्रहणम् । सचेतसः सावधानान्तःकरणाः मुनिगणा एव तत्त्वतो जानन्तीति ॥ ५८६ ॥

**उपवीतिनमिति**। उपवीतिनं यज्ञोपवीतयुक्तं, रामानुजीयसंप्रदाये संन्यासिनामपि यज्ञोपवीतधारणविधानात् । ऊर्ध्वपुण्ड्रेण भाले ऊर्ध्ववर्तिगोपीचन्दनतिलकेन युक्तं त्रिजगतः त्रैलोक्यस्य पुण्यफलं मूर्तिमत्, त्रयो दण्डाः "वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च। यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते॥" इत्यनेन संन्यासिनो विहितास्ते हस्ते स्वाधीना यस्य सः तं शिखया शेखरिणं शिरोभूषणयुक्तं शरणागतानां सार्थवाहं धनिकं अभीष्टपूरकत्वात्। यतीनां संन्यासिनां पतिं श्रीरामानुजं ईडे स्तौमि । एतद्वर्णनेन श्रीरामानुजयतीनां शिखात्यागो नोक्त इति भाति ॥ ५८७ ॥

**कपर्दीति**। कपर्दिनः शिवस्य यन्मतं शैवागमप्रोक्तं जटा-कौपीनादिधारणरूपं यथाशास्त्राचाररहित्यादिकं च तेन कर्दमं कर्दमसदृशकालुष्ययुक्तं, एतद्वर्णनं केवलमेकदेशि पक्षपातयुक्तं तत्त्वविवेकशून्यं चेति ज्ञेयम् । कपिलस्य मुनेः कल्पनानाटकैः श्रुत्यादिप्रामाण्याङ्गीकारपूर्वकं केवलं मनःकल्पितलोकमोहकैः सांख्यशास्त्रवचनरूपैः, कुमारिलस्य मीमांसाशास्त्रप्रवर्तकस्य कुत्सितैर्भाषितैः, ईश्वरास्तित्वानङ्गीकारात्। अत एव गुरूणि महान्ति बन्धनानि पुनःपुनर्जन्म-मरणादिरूपाणि येभ्यस्तथाभूतैर्ग्रन्थिभिः तत्सदृशैरित्यर्थः। तथागतस्य बुद्धस्य "सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः" इत्यमरः। कथाशतैः, तदनुसारिणां बुद्धमतानुयायिनां जल्पैर्भाषणैश्चापि इदं जगत् प्रतारितं वञ्चितं, तत् यतीन्द्रस्य रामानुजस्य उक्तिभिः उपनिषद्भाष्यादिग्रन्थरूपाभिः प्रकर्षेण गुणितं व्यवस्थापितम् ॥ ५८८ ॥

**सावित्रेति**। हे राम! इति शेषः। सवितुः सूर्यस्यायं सावित्रः स चासावन्वयो

दलितदुरितजाले दन्दशूकेन्द्रशैले
कवलितभवगन्धे कालिमा कश्चिदिन्धे ॥
कुवलयमुदहारी कुञ्जरेन्द्रोपकारी
मुनिहृदयविहारी मुक्तसंतोषकारी ॥ ५९० ॥

ध्यातं योगिकलाविलासरसिकैः शीतं दयास्रोतसा
ख्यातं मौलिषु कृत्रिमेतरगिरां वातंधयक्ष्माधरे ॥
जातं धाम पराकरोतु जगतामातङ्कमङ्कूरितम्
वेतण्डेन्द्रविपद्विमोचनचणं क्रीतं रमाविभ्रमैः ॥ ५९१ ॥]

---

वंशश्च तत्र संभव उत्पत्तिर्यस्य तेन भवता त्वया, दशाननवधेच्छयेति शेषः । शरो बाण एव आशीविषः सर्पः यो मुक्तः स्वशरासनात्प्रेरितः सः संवर्ते प्रलये "संवर्तः प्रलयः कल्पः" इत्यमरः । उदिता उदयं प्राप्ता ये सप्त सप्तसंख्याकाः सप्तयोऽश्वा येषां ते "घोटके वीति-तुरग-तुरङ्गाश्व-तुरङ्गमाः । वाजि-वाहार्व-गन्धर्व-हय-सैन्धव-सप्तयः ।" इत्यमरः । सप्तसप्तयः सूर्याः तेषां पटली समुदायः तया सब्रह्मचारी सदृशः सन्, हठात् प्रसह्य क्षितिजापहारिणः सीतापहर्तू रावणस्य हृदयक्रीडायां रतमासक्तं मारुतं प्राणवायुं आस्वाद्य भक्षयित्वा, रावणप्राणमपहृत्येत्यर्थः । तेन रावणहृत्स्थवातास्वादनेन यः संतोषस्तस्माद्धेतोः कथाभिधानस्य श्रीरामचरितकथनस्य कुतुकं कौतुकं यस्यास्तीति तत्कुतुकी सन्, महीं पृथ्वीं जगाहे लुलोड इति अहं मन्ये । स एवायं सांप्रतं रामानुजरूपेणावततारेति मन्ये इत्यर्थः ॥ ५८९ ॥

**दलितेति** । दलित विनाशितं दुरितानां पापानां जालं समूहो येन तस्मिन् कवलितः भक्षितः विनाशित इति यावत् । भवस्य संसारस्य गन्धः संबन्धो येन तस्मिन् "गन्धो गन्धक आमोदे लेशे संबन्ध-गर्वयोः ।" इति यादवः । दन्दशूकेन्द्रशैले शेषाद्रौ कुवलयानां कमलानां मुदं हरतीति यथाभूतः कुञ्जरेन्द्रोपकारी गजेन्द्रोद्धारकः मुक्तानां संतोषं करोतीति तत्कारी अत एव मुनीनां मननशीलानां हृदयेऽन्तःकरणे विहर्तुं शीलं यस्येति तथाभूतः कश्चिदलौकिकः कालिमा नीलिमा श्रीनिवासरूपः इन्धे प्रकाशते ॥ ५९० ॥

**ध्यातमिति** । दयायाः स्रोतसा प्रवाहेण शीतं अत एव योगिनां कलानां ध्यान-धारणादीनां ये विलासा आनन्दास्तेषु रसिकैः, सततं योगाभ्यासासक्तचित्तैरित्यर्थः । ध्यातं कृत्रिमेतरगिरां वेदवाणीनां मौलिषु उपनिषत्सु ख्यातं प्रसिद्धं वेतण्डेन्द्रस्य गजेन्द्रस्य विपद्विमोचनेन ग्राहकृतदुःखनिवारणेन वित्तं ख्यातमिति तच्चणं "तेन वित्तः—" इति चणप् प्रत्ययः । रमाया लक्ष्म्याः विभ्रमैर्विलासैः क्रीतं वशी-

[illegible]यक्ष्माधरे शेषशैले जातमुत्पन्नं, वातंधयेत्यत्र "वात-शुनी-तिल-"

[illegible] धेटः खश् "अरुर्द्विषद—" इत्यादिना मुमागमश्च ।

[illegible] तापं "रुक्-ताप-शङ्कास्वातङ्कः" इत्यमरः ।

नराः सुरा वा पशवः परेऽपि वा न निन्दनीयाः पुरुषेण भूष्णुना ॥
यतोऽपि दोषप्रचुरे जगत्रये न सन्ति ते वीतगुणाः कलावपि॥५९२॥

कु०—अभ्युपगम्य—

दार्ढ्याय गुणसमृद्धेर्दूषणभणितिः समस्तवस्तूनाम् ॥
अस्माभिरुपनिबद्धा सिद्धान्तस्येव, पूर्वक्षोक्तिः ॥ ५९३ ॥

---

## कवेर्वाक्यम् ५३.

इति सकलजनानामीरयन्तौ शुभं तौ
मधुमथनपवित्रक्षेत्रसेवाकृतार्थौ ॥
अनुपथि दृढसख्यौ हन्त गन्धर्वमुख्यौ
निजसदनमगातां निर्भरानन्दसान्द्रौ ॥ ५९४ ॥

---

**नरा इति**। भूष्णुना समञ्जसेन भूधातोः "ग्ला-जि-स्थश्च ग्स्नुः" इति चकारात् ग्स्नुप्रत्ययः। "भूष्णुर्भविष्णुर्भविता वर्तिष्णुर्वर्तनः समौ।" इत्यमरः। पुरुषेण नराः मनुष्याः, वा चकारार्थकः। सुरा देवाश्च, पशवः, परे पक्ष्यादयोऽपि च निन्दनीयाः। यतो यस्मात् कारणात् दोषैः प्रचुरे बहुलेऽपि जगत्रये त्रैलोक्ये अस्मिन् कलियुगेऽपि ये वीताः गताः गुणाः येषां तथाभूताः जनाः ते सर्वेऽपि न सन्ति। किंतु केचिद्गुणयुक्ता अपि सन्तीत्यर्थः ॥ ५९२ ॥

**अभीति**। अभ्युपगम्य तदुक्तं सर्वमप्यङ्गीकृत्य—

**दार्ढ्यायेति**। अस्माभिः उपनिबद्धा आरोपिता दूषणानां भणितिर्भाषणं समस्तानां सर्वेषां वस्तूनां पदार्थानां गुणसमृद्धेः दार्ढ्याय दृढीकरणायैव भवति, न वस्तुतः। कथमिव। सिद्धान्तस्य कस्यापि शास्त्रीयप्रमेयस्य दृढीकरणाय पूर्वपक्षोक्तिरिव ॥ २९३ ॥

एवं कथनीयमुक्त्वोपसंहरति—**इतीति**। इत्येवंप्रकारेण सकलानां जनानां शुभं कल्याणं, क्वचित् 'स्वभावान्' इति पाठः। ईरयन्तौ कथयन्तौ अनुपथि प्रतिमार्गे मधोः एतन्नामकदैत्यस्य वसन्तस्य च। "मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः। दैत्ये चैत्रे वसन्ते च" इति विश्वः। मथनः विनाशकः विष्णुः शिवश्च तयोः पवित्राणि यानि क्षेत्राणि श्रीरङ्ग-वाराणस्यादीनि तेषां सेवया कृतार्थौ दृढं सख्यं, मैत्री ययोस्तौ अत एव निर्भरानन्देन अतिशयहर्षेण सान्द्रौ परिपूर्णौ हन्तेत्यानन्दे। गन्धर्वाणां मुख्यौ **कृशानु-विश्वावसू** निजसदनं गन्धर्वलोकं अगातां जग्मतुः ॥ ५९४ ॥

---

१ 'यतोऽति'. २ 'आस्माकमुप'. ३ 'स्वभावान्'.

सकलकुशलसिद्ध्यै सर्वदेवस्थलेषु
व्रजतु भुवि विवृद्धिं वत्सराद्युत्सवश्रीः ॥
अपगतभवरोगैरध्वराणां प्रयोगै-
रखिलशुभकराणामस्तु भद्रं द्विजानाम् ॥ ५९५ ॥

जयतु जगति लक्ष्मणार्यपक्षो
जयतु वचः श्रुतिमौलिदेशिकानाम् ॥
जयतु निगमवर्त्म निःसपत्नम्
जयतु चिराय च मूर्तिरञ्जनाद्रौ ॥ ५९६ ॥

प्रकाशदोषप्रचुरेप्यमुष्मिन् ग्रन्थे मदीये करुणानुबन्धात् ॥
प्रसादवन्तो न कृशानवन्तु परन्तु विश्वावसवन्तु सन्तः ॥ ५९७ ॥

---

**सकलेति ।** सर्वदेवानां विष्णु-शिवादीनां स्थलेषु वत्सराद्युत्सवानां वत्सरादि-तिथौ विहितानां ध्वजारोपणादीनां श्रीः शोभा सकलानां जनानां कुशलस्य कल्याण-स्य सिद्ध्यै भुवि विवृद्धिं व्रजतु गच्छतु । तथा अपगतः भवरोगः संसाररोगः येभ्य-स्तथाभूतैरध्वराणां यज्ञानां प्रयोगैरनुष्ठानैः अखिलस्य सर्वस्यापि जनस्य शुभकराणां कल्याणकराणां द्विजानां ब्राह्मणानां भद्रं कल्याणं अस्तु ॥ ५९५ ॥

**जयत्विति ।** जगति लक्ष्मणार्यस्य श्रीरामानुजस्य पक्षो विशिष्टाद्वैतरूपः सिद्धा-न्तः जयतु, पक्षे लक्ष्मणस्य आर्यः ज्येष्ठभ्राता श्रीरामः तस्य पक्षः शिवोपासनारूप-श्चेत्यर्थः । श्रुतिमौलिदेशिकानां वेदान्ताचार्याणां वचः उपदेशरूपं च जयतु सर्वोत्क-र्षेण वर्ततां, निःसपत्नं शत्रुरहितं दुस्तर्कप्रतिपादनरहितमिति यावत् । निगमवर्त्म वेदमार्गश्च जयतु, अञ्जनाद्रौ नीलपर्वते मूर्तिः श्रीनिवासरूपा चापि चिराय वहुकाल-पर्यन्तं जयतु सर्वोत्कर्षेण वर्तताम् । इति पद्यद्वयप्रतिपादितं शिष्टाचारपरिप्राप्तं ग्रन्थान्ते मङ्गलाचरणं बोध्यम् ॥ ५९६ ॥

एवं समाप्तिमङ्गलं कृत्वा विद्वत्प्रार्थनां विधत्ते—**प्रकाशेति ।** अमुष्मिन् मदीये मया रचिते **विश्वगुणादर्श**नाम्नि, प्रकाशाः प्रसिद्धाः दोषाः वस्तूनां कृशानुप्रतिपादिता इत्यर्थः । यस्मिन् तथाभूतेऽपि ग्रन्थे करुणायाः दयाया अनुबन्धात् संबन्धात् सन्तो विद्वांसः प्रसादवन्तः प्रसन्नान्तःकरणयुक्ताः सन्तः न कृशानवन्तु कृशानुवत् नाच-रन्तु दोषबुद्धियुक्ता न भवन्त्वित्यर्थः । परन्तु सर्वे विश्वावसवन्तु विश्वावसुवद्गुणमात्र-ग्रहणतत्परा भवन्त्वित्यर्थः । 'विश्वावसवन्तु' 'कृशानवन्तु' इत्यत्र विश्वावसु-कृशानुश-ब्दाभ्यामाचारक्विपि धातुत्वाल्लोट् । तत्र च "सार्वधातुक-" इत्यादिना गुणः ॥५९७॥

---

१ 'सुप्रसन्नं'.

ञ्चमतभञ्जननिबन्धनविख्याततातयज्वभागिनेयवाजपेयसार्वप्रष्ठा-
मादियाज्यात्रेयवंशमौक्तिकीभवदप्पय्यार्यतनूभवश्लेष-यमक-
चक्रवर्तिरघुनाथाचार्यतनयस्य श्रीनिवासकृपातिशयसं-
विदितनयस्य सीताम्बागर्भसंभवस्य श्रीमत्काञ्ची-
नगरवास्तव्यस्य महाकविश्रीमद्वेङ्कटाध्वरिणः
कृतौ विश्वगुणादर्शचम्पूः समा-
प्तिमगात् ॥

---

इति विशदमनीषाशालिना यज्वना वा
विरचित इह काव्ये **वेङ्कटाचार्य**नाम्ना ॥
कृशतरमतियुक्तेनापि टीका कृतेयं
सुगुण-सुकरुणास्तां पण्डिता मानयन्ताम् ॥ १ ॥
श्रेयः संप्रति संचिनोतु भगवान् श्रीमद्गणेशः प्रभु-
र्दूने देवगणे द्विजक्रतुचये ध्वस्ते च दैत्यार्तितः ॥
आविर्भूय तदातदार्तिहरणौत्सुक्याद्भवानीपते—
र्दैत्येन्द्रं परिभूय सिन्दुरमथो देवान् व्यधान्निर्वृतान् ॥ २ ॥
नमामि कमलालयापरिचिताङ्घ्रिमानन्ददं
प्रभुं मुनिजनस्तुतं भुजगशायिनं श्यामलम् ॥
करोतु जनमङ्गलं हरतु पापसंघं नृणां
स्वधर्मरतिमन्तरे जनयतु स्वभूः सर्वदा ॥ ३ ॥
जयति भगवान् भर्ता देव्याः शिवः शिवदः सतां
श्रुतिपथमथारुन्धन् सर्वे यदा सुगतादयः ॥
यतिवरतनुं धृत्वा बुद्धान् विजित्य च यस्तदा
श्रुतिहितमथो संविन्मार्गं निरञ्जनमन्वधात् ॥ ४ ॥
अस्ति कृष्णापगासङ्गात् पावनी लोकरञ्जनी ।
राजधानी सुविख्याता **पट्टवर्धन**भूभृताम् ॥ ५ ॥
**कुरुन्दवाट**नगरं कीर्तिमत्तत्र विद्यते ॥
श्रीमान् **गणपति**स्तस्य पुरस्याधिपतिर्महान् ॥ ६ ॥
तस्याश्रये पुरातिष्ठद्योगिवंशावतंसकः ॥
**गणेशपण्डितः** प्रज्ञाशाली सत्कर्मपेशलः ॥ ७ ॥
तत्सुतो ह्यकरोदेतद् व्याख्यानं बालतुष्टये ॥
इन्दुनेत्रवसुक्षोणीमिते ( १८२१ ) शाके ह्यपूरि तत् ॥ ८ ॥

इति श्रीमत्पदवाक्यपारावारीणश्रीमद्योगिकुलावतंस**श्रीमद्गणेश**सूरि-
सूनुना **बालकृष्ण**शर्मणा विरचिता पदार्थचन्द्रिकाख्या
श्रीविश्वगुणादर्शचम्पूव्याख्या समाप्तिमगात् ॥

श्रीः

# विश्वगुणादर्शस्थपद्यानामकाराद्यनुक्रमेण सूची—

| | | मू० | डा.व्य. |
|---|---|---|---|
| ४४. | **शृङ्गारतिलकभाणम्**—श्रीरामभद्रदीक्षितविरचितम्. | ।= | ऽ- |
| ४५. | **बालभारतम्**—श्रीमदमरचन्द्रसूरिविरचितम्. ... | ३। | ऽ≡।। |
| ४६. | **वृषभानुजा नाटिका**—श्रीमथुरादासविरचिता. ... | ।= | ऽ- |
| ४७. | **सेतुबन्धमहाकाव्यम्**—श्रीप्रवरसेनविरचितं, श्रीरामदासभूपतिप्रणीतया टीकया सहितम्. ... ... | ३। | ऽ≡ |
| ४८. | **वाग्भटालंकारः**—श्रीवाग्भटप्रणीतः, सिंहदेवगणिविरचितया टीकया सहितः. ... ... ... ... | ।।॰ | ऽ- |
| ४९. | **द्विसंधानमहाकाव्यम्**—श्रीधनंजयविरचितं, बदरीनाथविरचितया टीकया सहितम्. ... ... ... | १।। | ऽ-।। |
| ५०. | **अलंकारशेखरः**—श्रीमाणिक्यचन्द्रकारितः, श्रीकेशवमिश्रकृतः. ... ... ... ... ... ... | ।।- | ऽ- |
| ५१. | **पतञ्जलिचरितम्**—श्रीरामभद्रदीक्षितप्रणीतम्. ... | ।।= | ऽ- |
| ५२. | **मन्दारमरन्दचम्पूः—श्रीकृष्णकविविरचिता.** ... | १। | ऽ= |
| ५३. | **वाणीभूषणम्—श्रीदामोदरमिश्रविरचितम्**, अयं ग्रन्थो वृत्तरत्नाकरवदेव वृत्तबोधकः परं च वृत्तरत्नाकरापेक्षयाप्यस्मिन् कतिचिदधिकवृत्तानां लक्षणानि निवेशितानि, तथा प्रतिवृत्तस्य लक्षणमुदाहरणं चातीव रुचिरतया निवेशितं दृश्यते। तेन ग्रन्थवाचनसमये वृत्तज्ञानं मनोरञ्जनं चेत्येते युगपदेव संभवतः। ... | ।= | ऽ- |
| ५४. | **धनंजयविजयः**—श्रीकाञ्चनाचार्यविरचितः. ... ... | ऽ≡ | ऽ- |
| ५५. | **अद्भुतदर्पणनाटकम्**—श्रीमहादेवकविविरचितम्. ... | ।।।॰ | ऽ- |
| ५६. | **नेमिनिर्वाणकाव्यम्**—महाकविश्रीवाग्भट्टविरचितम्. | ।।= | ऽ- |
| ५७. | **राघवनैषधीयकाव्यम्**—श्रीहरदत्तसूरिकृतम्, स्वकृतया टीकया सहितम्. ... ... ... ... ... | ।।॰ | ऽ- |
| ५८. | **शृङ्गारभूषणभाणम्**—वामनभट्टबाणविरचितम्. ... | ऽ≡ | ऽ।। |
| ५९. | **अमृतोदयनाटकम्**—श्रीमद्गोकुलनाथकृतम्.... ... | ।।॰ | ऽ- |
| ६०. | **युधिष्ठिरविजयकाव्यम्**—महाकविश्रीवासुदेवविरचितम्, राजानकरत्नकण्ठकृतया टीकया सहितम्. ... ... | १।। | ऽ= |
| ६१. | **हरचरितचिन्तामणिकाव्यम्**—राजानकजयरथकृतम्. | १।।। | ऽ= |
| ६२. | **राघवपाण्डवीयकाव्यम्**—कविराजविरचितं, शशधरकृतया ( प्रकाश ) टीकया सहितम्. ... ... | १। | ऽ-।। |
| ६३. | **साहित्यकौमुदी**—( अलंकारः ) **श्रीविद्याभूषणविरचिता** कृष्णानन्दिन्याख्यटिकासहिता. ... | १।। | ऽ= |




| | मू० | डा.व्य. |
|---|---|---|
| ६४. **प्राचीनलेखमाला**—( द्वितीयो भागः ). ... ... | १॥ | ८= |
| ६५. **भारतमञ्जरीकाव्यम्**—महाकविश्रीक्षेमेन्द्रविरचितम्. | ५ | ·।- |
| ६६. **अलंकारकौस्तुभः**—( अलंकारः ) श्रीविश्वेश्वरपण्डितविरचितः स्वोपज्ञव्याख्यासहितः. ... ... ... | ३ | ८≡ |
| ६७. **हीरसौभाग्यकाव्यम्**—श्रीदेवविमलगणिविरचितं, स्वोपज्ञया व्याख्यया समलंकृतम्. ... ... ... ... | ५॥ | ·।= |
| ६८. **रावणार्जुनीयकाव्यम्**—काश्मीरिकश्रीभट्टभीमकृतम्. | १। | ८-॥ |
| ६९. **बृहत्कथामञ्जरी**—श्रीक्षेमेन्द्रविरचिता. ... ... | ३॥। | ·।· |
| ७०. **यशस्तिलकचम्पूः**—(महाकाव्यं) श्रीसोमदेवसूरिविरचितं श्रीश्रुतसागरसूरिकृतया व्याख्यया समेतम् पूर्वखण्डम्. | ३॥। | ·।· |
| ७१. **काव्यानुशासनम्**—आचार्यहेमचन्द्रविरचितं, स्वोपज्ञालंकारचूडामणिसंज्ञकवृत्तिसमेतम्. ... ... ... | २। | ८= |
| ७२. **कथाकौतुकम्**—पण्डितश्रीवरविरचितम्. ... ... | ·॥· | ८- |
| ७३. **सुरथोत्सवम्**—श्रीसोमेश्वरदेवविरचितम्. ... ... | ·॥= | ८-॥ |
| ७४. **सौगन्धिकाहरणम्**—श्रीमद्विश्वनाथकविविरचितम्.... | ·।· | ८- |
| ७५. **जयन्तविजयम्**—श्रीमदभयदेवविरचितम्. ... ... | १ | ८-॥ |
| ७६. **गङ्गावतरणम्**—श्रीनीलकण्ठदीक्षितविरचितम्. ... | ·॥· | ८= |
| ७७. **देलरामाकथासारः**—राजानकभट्टाह्लादकविरचितः ... | ·।= | ८- |
| ७८. **शृङ्गारसर्वस्वभाणः**—श्रीमल्लकविविरचितः. ... ... | ·।- | ८- |
| ७९. **कर्णभूषणम्**—श्रीगङ्गानन्दकविराजप्रणीतम्. ... ... | ·॥· | ८- |
| ८०. **प्राचीनलेखमाला**—( तृतीयो भागः ). ... ... | १ | ८-॥ |
| ८१. **विदग्धमाधवम्**—( नाटकं ) श्रीरूपगोस्वामिप्रणीतम् ( सटीकम् ).... ... ... ... ... ... | १। | ८-॥ |
| ८२. **सुभाषितरत्नसंदोहः**—श्रीमदमितगतिविरचितः. ... | ·॥· | ८= |
| ८३. **रामायणमञ्जरी**—क्षेमेन्द्रविरचिता. ... ... ... | ३। | ·।· |
| ८४. **स्तवमाला**—श्रीरूपदेवविरचिता, श्रीजीवदेवविरचितभाष्यसमेता. ... ... ... ... ... ... | २ | ८= |
| ८५. **तिलकमञ्जरी**—धनपालकृता जैनआख्यायिका. ... | २॥ | ·।· |
| ८६. **हरिहरसुभाषितम्**—श्रीहरिहरप्रणीतम्, अयमुत्तमः सुभाषितग्रन्थोस्ति. ... ... ... ... ... | ·॥· | ८- |
| ८७. **चैतन्यचन्द्रोदयनाटकम्**—कविकर्णपूरविरचितम् ... | १। | ८-॥ |

# अनेककविकृत कविता भाग ३ रा.

[ २४. ]

हा ग्रंथ

जनार्दन बाळाजी मोडक बी. ए. ( डेक्कन कॉलेज. )

यांनीं

यथामति शुद्ध करून प्रकाशित केला.

तो

पुणें येथें ज्ञानप्रकाश छापखान्यांत छापिला.

शके १८०९

इ० स० १८८८.

# MISCELLANEOUS POEMS BY DIFFERENT MARATHI POETS

## Part III.

EDITED BY

**Janardan Balaji Modak B. A.**

*Printed at the "Dnyan Prakash" Press*

POONA.

1888 A. D.

# अनेककविकृत कविता भाग ३ रा.

## अनुक्रमणिका.

समाप्त.

# अनेक कविकृत कविता

## भाग ३ रा.

## श्यामाकविकृत स्यमन्तकोपाख्यान.

आहे अद्वय पूर्ण तत्त्व न दिसे मायेचिया आरिसा ।
लीलावेश धरी प्रवेश विवरीं केला दमाया रिसा ॥
त्याची कौतुक जो स्यमंतक हरी श्रीजांबुवंती हरी
तत्पादांबुज-वंदनीं रत मना ग्रंथक्रिया यावरी ॥ १ ॥
जे लीला अभिमन्युजा शुक वदे पारीक्षितातें मुनी ।
वैशंपायन जांबुवंतिवरणा ते दृश्य भाषा जनीं ॥
नाशी हंकृति ऋक्षराज-मनिंची श्रीसत्यभामा हरी ॥
ऐकावी सुमनें स्यमंतक-कथा जें पातकें संहरी ॥ २ ॥
पूर्वीं मारोनी रामें रजनिचरें-पती फोडिली बंदिशाळा ।
भद्रीं लंकेशबंधू करुनि चिरजिवी आणिली भूमिबाळा ।
देवां इंद्रादि सर्वां सह कपि रिस ही बैसलासे विमानीं ।
आला तो राजधानीनिकट उतरला विश्व आनंद मानी ॥ ३ ॥
वामांगीं विलसे सुकांचनलता श्रीजानकी सुंदरी ।
श्रीगंगेहूनि शुभ्र चामर वसे शेषावतारा करीं ॥
अग्रीं वायुसुतें विनीतसुचितें संभाविजे शासना ।
त्यां श्रीरामपदांबुजीं रत मना अन्यत्र निर्वासना ॥ ४ ॥
भेटोनि बंधु भरता मग राजधानी । केला प्रवेश सुखसिंधु सिमा न मानी ॥
राज्याभिषेक विधिपूर्वक सर्व झाला । आज्ञा करी नृप कपीरिस-राक्षसांला ॥ ५ ॥
दे उचीत सकळांप्रति राजा । भावपूर्वक म्हणे सदना जा ॥
स्नेहपूर्ण हृदयांत असावा । हेतु सार्थक पदीं च वसावा ॥ ६ ॥
तेव्हां ऋक्षपती करीत विनती अग्रें उभा राहिला ।
यावत्काळ बहुत संगर मही स्वर्गीं हि म्यां पाहिला ॥
म्हदोर्दंडें प्रचंड कंडु सहसा अद्यापि गेला नसे ।
या रे तो वर दे स्वदर्शन दिजे मत्प्रार्थना हे असे ॥ ७ ॥
ऐकोनियां वदत दाशरथी तयाला । जो इच्छिसी तव मनोरथ पूर्ण झाला ॥
आतां मनीं समज पूर्ण तुझी अपेक्षा । द्वापार अंत-समयीं करिजे प्रतीक्षा ॥ ८ ॥

---

१ ऋक्ष=आस्वल. (ऋक्षराज=जांबवान्) २ रजनिचरपति=राक्षसराजा रावण.
३ शेषावतार=लक्ष्मण ४ संगर=लढाई ५ दोर्दंड=बाहुदंड ६ प्रतीक्षा=वाट पाहणें

त्या नंतरे त्वरित वंदुनि पाद-पद्मा । सिंधूतिरीं रिसपती अजि ये स्व-सद्मा ॥
भूवीवरीं निजगृहीं मग शीघ्र आला ॥ राहे सुखें चि तंव काळ कितेक गेला ॥९
भावें भजे अनुदिनीं मनिं त्या अजाला । दैवी-कृपेकरुनि संतति-लाभ झाला ॥
कन्या तया परम सुंदर एक झाली । कौशल्यता च विधिची स्वरुपासि आली ॥१०॥
तो पूर्ण ब्रह्म अवतार धरी हरी तो । नामें करुनि कलिकल्मष संहरीतो ॥
मा चंचळा परि कदापि जया चळेना । शेषादिकां स्तवनलेश हि आकळेना ॥११॥
क्षीरांबुधींत उरगेंद्र करोनि माचा । राहे निजोनि सुख-सिंधु पराक्रमाचा ॥
कंसादिकीं बहुत पृथ्विस त्रास केला । ब्रह्मा स्तवी पय-निधी-तिरिं त्या अजाला ॥१२॥
देव-स्तवें करुनि तोष विशेष झाला । माया-विलास नटणें मग त्या अजाला ॥
जे जे क्रिया सकल ही करि त्या न केली । पूर्णावतार-चरिता मति हे भुकेली ॥१३॥

बाळ क्रीडा-समाजीं खळ बळि वधिले कंसविध्वंस केला ।
भक्तोद्धार प्रतापें करुनि वर-पदीं उग्रे ही स्थापियेला ॥
आणी शौर्यक्रमानें भिम-कुल-ललना लोक-लीला नुपेक्षी ॥
लोकीं लौकीक रक्षी परम पुरुष तो सर्व-संसार-साक्षी ॥ १४ ॥
सत्राजीत म्हणोनि राजसुकुळीं होता गृहस्थाश्रमी ।
तेणें सूर्यप्रसन्नता तपवशें ते साधिली स्वाश्रमीं ॥
होतां अब्द पुरें स्यमंतकमणी दे तोषुनी दिन्मणी ।
तो नित्य प्रसवे सुवर्ण वजनी भाँराष्ट तेजोगुणी ॥ १५ ॥
देतां त्यासि मणी वदे दिनमणी यत्नें यया रक्षिजे ।
त्वद्देहीं अशुचित्व प्राप्तसमयीं आनर्थता पाविजे ॥
केला आक्षेप सज्जनीं म्हणाति तो भारिक जाणों कसा ।
लेखा लेखक वित्पती च परिसा लीलावतीचा असा ॥ १६ ॥
साडेचौतिस या मणांवरि निकें शेराष्टका लेखिजे ।
तोळे एकविसांवरी अधिक ते चत्वारि मासे दिजे ॥
संख्या भार सुवर्ण एक चि असा जो नित्य अष्टावधी ।
भारांतें प्रसवे सुवर्णमणि तो प्रत्यक्ष तेजोनिधी ॥ १७ ॥
दे तो नित्य सुवर्णदान नगरीं शोभे विना याचकीं ।
विस्तारे अति कीर्त्ति लोक वदती वार्त्ताविना याच कीं ॥
प्रादेशीक अनेक विप्र तरले दारिद्र्य-सिंधू-पुरा ।
झाले लोक अशोक दुःख न उरे रक्षा जशी कर्पुरा ॥ १८ ॥

---

७ सिंधु=समुद्र. * सद्म=घर. ८ उरगेंद्र=शेषसर्प. ९ उग्र=उग्रसेन राजा. १० भार=३४½मण, ८ शेर, २१ तोळे, ४ मासे असें पुढं १७ वे श्लोकांत आहे.

